# PREFACE

Vedas are eternal. They are four vedas, Rigveda, Yajurveda, Samaveda and Atharvanaveda. They are not authored by any individual. They are the origin of all other sastras.

Among the above, Rigveda is considered as important and so, our great Sriman Madhwacharya wrote commentary and it is called Rigbhashya.

Srimad Acharya is the only acharya to consider the vedic literature as one unit. This has been explained by acharya through quotations from other books.

The Bhashya of Srimad Acharya mainly deals with doctrines which proclaims supremacy of Lord Sri Vishnu, which is in Sruthi, Smruthi and Puranas.

All hymns in the Veda depicts the supremacy of Sri Vishnu as Sarvottama.

It has also been stressed by Srimad Acharya that reciting without knowing the meanings of hymns is of no use and one should compulsorily study the meaning of the hymns. If the individual follows the same, there is possibility of attaining the eternal bliss.

Srimad Acharya has also emphasized that swara is important while reciting the Veda. Earlier commentators have not brought out this point. It is the only point our great acharya has pointed out.

Another aspect of the commentary of our Srimad Acharya is that he has utilised ancient grammar to bring out the inner meanings of the hymns. He is the only acharya who did so. Rigbhashya also expounds the virtues of Lord Vishnu,

proclaiming the supremacy of Sri Vishnu. The Rigbhashya brings out the mystic meanings of Vedas at some places and also Srimad Acharya has brought out the same.

There were commentators on the Rigbhasya of Srimad Acharya, like Sri Madhavatirtha, Sri Jayatirtha, Sri Vijayeendratirtha, Sri Raghavendratirtha, Sri Sumateendratirtha and Sri Lakshminarayanacharya so on. Sri Jayatirtha who has brought out commentary on Rigbhashya of Srimad Acharya has written in detail on all hymns with word by word meaning along with grammatical points. He has also pointed out that the Bhashya of Srimad Acharya is illustrative and is a guide for the commentators.

Sri Raghavendratirtharu has also written commentary of Rigveda, which is called "Mantrartha Manjari". He has brought out and explained in a number of ways to focus the supremacy of Lord Vishnu with all virtues as sarvottama. It depicts the complete information of the Bhashya even though it appears to be simple.

Sri Sumateendratirtharu, Peetadhipathi of Sri Raghavendra Swamy Mutt wrote commentary on Rigbhashya of Srimad Acharya, naming it as "Rigbhashya Tika Bhavaratnakosa". Also Sri Bhuvanendratirtharu, Peetadhipathi of Sri Raghavendra Swamy Mutt, wrote commentary on complete Rigveda omitting the 40 suktas of Sri Madhwacharya's Bhashya. Further, Sri Vidwan Lakshminaryanacharya, Poorvashrama Son of Sri Raghavendra Thirtharu, has also written commentary naming it as "Rigbhashya Tika Tippani". It was considering as one of the best descriptive, exquisite and fine comentary among other commentaries. I hope that this grantha will be benefit the students who study Veda may the Readers be blessed by Sri Moolaramadevaru.

**Raja. S. Pavamanacharya**

Chief Editor

## ॥ श्रीमदानन्दतीर्थभगवत्पादाचार्याः ॥



व्यासिर्यस्य निजे निजेन महसा पक्षे सपक्षे स्थिति-
व्यावृत्तिश्च विपक्षतोऽथ विषये सक्तिर्न वै बाधिते ।
नैवास्ति प्रतिपक्षयुक्तिरतुलं शुद्धं प्रमाणं स मे
भूयात्तत्त्वविनिर्णयाय भगवानानन्दतीर्थो मुनिः ॥

# ॥ श्रीपद्मनाभतीर्थाः ॥



रमानिवासोचितवासभूमिस्सन्न्यायरत्नावलिजन्मभूमिः ।
वैराग्यभाग्यो मम पद्मनाभतीर्थामृताब्धिर्भवताद्विभूत्यै ॥

॥ श्रीमज्जयतीर्थाः ॥



सत्पद्मबन्धवो यस्य गावो विश्वतमोनुदः ।
स स्यात् तत्त्वप्रकाशाय जयतीर्थरविर्मम ॥

## ॥ श्रीराघवेन्द्रतीर्थाः ॥



चित्ते चेन्मृदुता शिरीषसदृशो हय्यङ्गवीनं शिला
गाम्भीर्यं यदि यस्य सोऽन्धुरुदधिः शास्त्रेषु चेत्पाण्डिती ।
आचार्यो विबुधेशितुः कलयते विद्यार्थितामादरात्
औदार्यं यदि कल्पपादपमुखाः सम्भावयन्तेऽर्थिताम् ॥

॥ श्रीः ॥

श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितं

# ऋग्भाष्यम्

॥ मङ्गलाचरणमुपोद्घातश्च ॥

**नारायणं निखिलपूर्णगुणार्णमुच्च-**
**सूर्यामितद्युतिमशेषनिरस्तदोषम् ।**
**सर्वेश्वरं गुरुमजेशनुतं प्रणम्य**
**वक्ष्याम्यृगर्थमतितुष्टिकरं तदस्य ॥**

श्री जयतीर्थविरचिता ऋग्भाष्यटीका

हरिः ॐ ॥

नारायणाभिधं ज्योतिः प्रत्यूहध्वान्तशान्तिकृत् ।
कमलाकमलानन्दमन्तः स्वान्तमुपास्महे ॥ १ ॥

ऋचां पदान्युपादाय तेषां भाष्यपदैः सह ।
कुर्मः संवादितामात्रं यथाधीतं यथामति ॥ २ ॥

इह खलु संसाराकूपारपारं जिगमिषतां प्रार्थनीयस्य भगवत्प्रसादस्य तज्ज्ञानमन्तरेणासम्भवात् तदर्थं प्रवृत्ता अपि वेदा अप्रतिपत्तिविप्रतिपत्तिभ्यां न तत्करणतामश्नुवते । अतस्तेषां भगवत्परत्वप्रकारप्रदर्शनार्थं कासांचिदृचां भाष्यं करिष्यन्नाचार्यः प्रारिप्सितस्याविघ्नेन परिसमाप्तये प्रचयाय च नारायणप्रणामस्तवने कुर्वन् प्रयोजनं च दर्शयति नारायण-

मिति । अनवधारितस्वरूपस्य प्रणामायोगात् स्वरूपावधारणस्य च लक्षणेन विनाऽसम्भवान्नारायणस्य [१]लक्षणमाह **निखिलेति** । निखिलाः निःशेषाः । पूर्णाः प्रत्येकम् । ते च ते गुणाश्च । अर्ण इत्युदकनाम ततो मत्वर्थे तद्धिता इति डप्रत्ययः । निखिलपूर्णगुणैरर्णः समुद्र इव निखिलपूर्णगुणार्णस्तम् । के ते गुणा इत्यतो लेशेन दर्शयति **उच्चेति** । अमिताश्च ते सूर्याश्च सूर्यामिताः कडाराः कर्मधारय इति विशेषणस्य परनिपातः । उच्चाः सामस्त्येनाविर्भूतप्रकाशाश्च ते सूर्यामिताश्च तेषां द्युतिरिव द्युतिर्यस्यासौ तथोक्तः । यद्वोच्चाश्च ते सूर्याश्च तैरमिता अपरिच्छिन्ना द्युतिर्यस्येति व्याख्येयम् । लक्षणान्तरमाह **अशेषेति** । अशेषेण निरस्ता दोषा यस्मात्सोऽशेषनिरस्तदोषः तम् । लक्षणद्वयं केवलव्यतिरेकिणा साधनीयमिति भावेनाह **सर्वेश्वरमिति** । अस्वतन्त्रस्य प्रपञ्चस्येश्वरेण भाव्यमिति प्रसिद्धमेव । ऋक्प्रतिपाद्यतया नतं गुरुत्वेनापि नमति **गुरुमिति** । तदुपपादयति **अजेति** । ऋगर्थं वक्ष्यामीत्यनेन सन्निधापितऋगर्थस्य वचनं श्रवणं ज्ञानं च तदिति परामृशति । यस्मात्तदृगर्थवचनादिकमस्य नारायणस्यातितुष्टिकरं तस्मात् । तदस्येत्येकं वा पदम् । तस्योक्तलक्षणस्यास्य प्रतिपिपादयिषिततया बुद्धिसन्निहितस्येति ।

नन्वेवं चेत्कथं कृतनारायण[२]नुतिप्रणामस्यापि भाष्यकारस्य वक्ष्याम्यृगर्थमिति प्रतिज्ञा न पारङ्गतेति । मैवं भोः । उक्तमेतत् कासांचिदृचामेव व्याख्या प्रतिज्ञातेति । अत एव ह्युपक्षत्रमिति परमेश्वरस्य[३] भयादिदोषराहित्यं तत्प्रसादाद्भयाभावलक्षणं मोक्षं च प्रतिपादयन्तीं

१. प्रणामस्तवन इत्यधिकपाठः । २. स्मृतेरपि पा० ।
३. समधिकारराहित्यं – अधिकपाठः दृश्यते ।

**सर्वशास्त्रार्थोपसंहाररूपामृचं व्याख्याय समापितो ग्रन्थः। प्रसिद्धं धनमेव हीत्यन्ते माङ्गलिकं पदं चोपनिबद्धम्। असमस्तव्याख्यानप्रतिज्ञासूचनाय मध्य एवैको वर्गो न व्याख्यातः। नकिर्माकिरित्यादि व्याख्यानप्रकार-शिक्षणं चैतमेवार्थं प्रकाशयतीति।**

**श्री लक्ष्मीनारायणाचार्यकृता टिप्पणी**

॥ श्री वेदव्यासाय नमः ॥ हरिः ॐ ॥

य इज्यते सदा वेदैर्विशेषेण ऋगादिभिः।
तं वन्दे कमलानाथं कल्याणगुणशालिनम् ॥ १ ॥
ऋचामभिमतोऽर्थो हि येन सम्यक् प्रकाशितः।
तं वन्दे श्रीमदानन्दतीर्थार्यगुरुशेखरम् ॥ २ ॥
जयतीर्थाख्यतरणिः भासतां मे हृदम्बरे।
यद्वचोऽधीत्य सर्वज्ञा भवन्ति भुवने जनाः ॥ ३ ॥
ऋगर्थमञ्जरी नाम ग्रन्थो येन सतां मुदे।
कृतस्तं राघवेन्द्राख्यगुरुं नत्वा गिरं भवे[1] ॥ ४ ॥
लक्ष्मीनारायणाख्योऽहं गुरुपादप्रसादतः।
ऋग्भाष्यटीकावाक्यानां भावं वक्ष्यामि लेशतः ॥ ५ ॥

प्रारिप्सितस्य ग्रन्थस्य निर्विघ्नेन परिसमाप्तये प्रचयगमनाय च अविगीतशिष्टाचारपरम्पराप्राप्तं नारायणोपासनरूपं मङ्गलमाचरति **नारा-यणाभिधमिति**। नारायण इत्यभिधा यस्य तत् नारायणाभिधम्। ज्योतिः सूर्यम् उपास्महे इत्यन्वयः। 'उपास्महे' इत्युत्तमपुरुषप्रयोगादेव वयमिति लभ्यते। 'अस्मद्युत्तमः' इति सूत्रे स्थानिन्यप्युत्तमपुरुषस्य विधानादिति

१. भवः - क, 'भजे' इति भाव्यमिति भाति।

ज्ञेयम् । वक्ष्यमाणविशेषणानुसारेण सूर्यमित्येव वाच्ये ज्योतिरित्युक्तिः 'तद्देवा ज्योतिषां ज्योतिः'. 'न तत्र सूर्यो भाति' इत्यादि श्रुतिषु, 'यदादित्य-गतं तेजः न तद्भासयते' इत्यादि स्मृतिषु च भगवत एव मुख्यज्योतिष्ट्वं सूर्यादीनां तु भगवदधीनज्योतिष्ट्वं प्रसिद्धमिति सकलतेजोनियामकत्व-रूपगुणकथनेन प्रसिद्धसूर्यवैलक्षण्यज्ञापनाय, यथा 'अग्निमीळे' इत्यादि व्याख्येयासु ऋक्षु अग्न्यादिशब्दानां न प्रसिद्धाग्न्यादिपरत्वं[1] किन्तु परम-मुख्यवृत्त्या भगवत्परत्वमिति नारायणस्यैव मुख्यतोऽधिकृतत्वसूचनायेति ज्ञेयम् । उक्तञ्च पञ्चमे गीताभाष्ये— 'स्वयं ज्योतिष्ट्वाद्भगवतः[2] इति । ज्योतिःशब्दप्रवृत्तिनिमित्तस्वप्रकाशत्वरूपगुणविशिष्टतया भगवत एव[3] ज्योतिःशब्दमुख्यार्थत्वम् । विवृतं च टीकायाम्— ज्योतिष्ट्वमिति शेषः । यद्यपि ज्योतिःशब्दः[4] प्रकाशमात्रे वर्तते[5] तथापि भगवत एव परानपेक्षज्योतिरित्यर्थ इति । तथा 'ज्योतिश्चरणाभिधानात्', 'ज्योतिर्दर्शनात्' इत्यादिसूत्रेषु निर्णीतञ्च ज्योतिःशब्दमुख्यार्थत्वं भगवतः । अत एव भाष्ये 'उच्चसूर्यामितद्युतिम्' इति महाज्योतिष्ट्वस्वरूपगुणैकदेशप्रदर्शनं कृतमिति ज्ञेयम् ।

प्रसिद्धसूर्यवैलक्षण्यप्रदर्शनायैव प्रत्यूहेत्यादि विशेषणद्वयम् । प्रत्यूहो विघ्नः स एव ध्वान्तमन्धकारः तस्य शान्तिर्निवृत्तिः तस्याः कृत् कर्तृ इति विगृह्य 'क्विप् च' इति सूत्रविहित (कर्तृवाचक) [6]कर्त्रर्थकक्विबन्तकृत्पदेन शान्तिपदस्य षष्ठीसमासः । न तु शान्तिं करोतीति उपपदसमासः । तथात्वे[7] 'कर्मण्यण्' इति अण्प्रत्ययप्रसङ्गादिति ज्ञेयम्[8] ।

---

१. परत्वमात्रम्, - क  २. ५-२४३. ज्योतिश्शब्द - क,
४. ज्योतिश्शब्द - क,  ५. प्रवर्तते - क  ६. कर्तृवाचक - क,
७. तथा सति - क,  ८. इति ज्ञेयम् इति नास्ति कपुस्तके,

यद्वा क्विप्प्रकरणे सुकर्मपापमन्त्रपुण्येषु कृतः[१] इति सूत्रे उपपदान्तरेऽपि क्विप्प्रत्ययो भवति शास्त्रकृत् भाष्यकृत् इति वृत्त्यादावुक्तत्वेन प्रकृते शान्तिकृदित्युपपदसमासो द्रष्टव्यः। न चैवं कुम्भकार इत्यादौ [२]अण्-प्रत्ययानुपपत्तिरिति वाच्यम्, तस्य वर्तमानार्थत्वात् क्विप्प्रत्ययस्य भूतार्थ-विषयकत्वात्[३], 'सुकर्म' इति सूत्रे भूत इत्यधिकारात्। तथा च अर्थपदेन[४] प्रयोगद्वयोपपत्तेरिति ज्ञेयम्। कमलाकमलानन्दं[५] कमला लक्ष्मीः सैव कमलं पद्मं [६]तत्रानन्दयति [७]हृष्यतीति तत्तथोक्तम्।

आ[८] इति पूर्वान्नदि हर्षे इत्यस्माण्णिजन्ताद्धातोः 'कर्मण्यण्' इत्यण्-प्रत्यये 'णेरनिटि' इति णिलोपे सानन्द[९] इति पदनिष्पत्तेरिति ज्ञेयम्। उपासनाधिकरणमाह **अन्तःस्वान्तमिति**। स्वान्तस्य हृत्कमलस्य अन्तर्मध्य इत्यर्थः। 'षष्ठी' इति सूत्रेण षष्ठीसमासे 'राजदन्तादिषु परम्' इति स्वान्त-शब्दस्य परनिपातः। 'उपसर्जनं पूर्वं' इति सूत्रे दुर्घटवृत्तौ कथं मातुः सपत्नी[१०] मातेत्याशङ्क्य राजदन्तादिवदिति[११] समाधानकथनेन राजदन्तादेराकृति-गणत्वस्य सूचनात्। अन्यथा शङ्कासमाधानेऽनुपपन्ने स्यातामिति ज्ञेयम्। षष्ठस्य प्रथमपादे 'प्रकृत्यान्तःपादमव्यपरे' इति सूत्रे अन्तरित्यव्ययमधि-करणभूतं मध्यमाचष्टे। 'अन्तःपादं पादस्य मध्यं' इति वदता वृत्तिकारेणैव-मेव समाधानस्य सूचितत्वाच्चेति। केचित्तु, अष्टमस्य चतुर्थपादे 'प्रनिरन्तः शरेक्षि'ति सूत्रे अन्तर्वर्णे इति विभक्त्यर्थेऽव्ययीभाव इति पदमञ्जर्यामुक्तेः

---

१. कृञः - क, २. अण्प्रयोगानुपपत्ति - क, ३. भूतार्थत्वात् -क,
४. अर्थभेदेन - क, ५. कमलानन्दमिति नास्ति कपुस्तके,
६. तदानन्दयति - क, ७. हर्षयतीति - क।
८. आङ्पूर्वकात् - क, ९. आनन्दपदनिष्पत्तिरिति ज्ञेयम् - क,
१०. सपत्नीमाता - क, ११. राजदन्तादित्वादिति-क,

प्रकृतेऽपि तथा समास इति वदन्ति । [१]स्वव्याख्यानप्रकारभाष्यस्य बह्वर्थ-गर्भितत्वेनातिगाम्भीर्यं च सूचयन् चिकीर्षितं प्रतिजानीते **ऋचामिति** ।

**संवादितामात्रमिति** । [२]एकार्थकत्वप्रदर्शनेन सम्बन्धमात्रं क्रियत इत्यर्थः । न त्वपूर्वतयार्थकथनं पदान्तरप्रक्षेपणं च क्रियत इति मात्र-पदार्थः । इदं च प्रतिज्ञाकरणं भाष्यव्याख्यात ऋगपेक्षया तद्व्याख्यातऋक्षु उपयुक्तप्रमेयनिरूपणस्थलेषु च तदुभयमपि क्रियत इति भावः । भाष्य-करणस्य प्रयोजनं दर्शयन् आद्यपद्यकृत्यं च दर्शयति **इह खल्वित्यादिना** । आकूपारः समुद्रः, संसार एवाकूपारः । **प्रणामस्तवन इति** । तथा च प्रणामकर्मणा नारायणेन निखिलेत्यादि विशेषणानां स्तुतिसमर्पकत्वेन अन्वय इति भावः । उक्तं च सुधायाम् अनुव्याख्याऽऽद्यपद्यव्याख्या-वसरे 'निखिलेत्यादीनां[३] प्रणामकर्मणा नारायणेन विशेषणतया सम्बन्धः । प्रयोजनं च स्तुतिपदानां विशेष्यप्रशंसैव तत्रार्थिकपुनरुक्तेः स्तुतित्वमेव समाधानमवधातव्यम्' इति । **प्रयोजनं चेति** । 'प्रयुज्यते प्रेर्यते प्रणेता प्रणयने, श्रोता च श्रवणे येन तत्प्रयोजनं विषयः साध्यं चेत्यर्थः' इति [४]तत्त्वनिर्णयटीकायां चार्वाकमतनिरासप्रस्तावे 'समयप्रयोजनाभावाद्' इत्येतद्व्याख्यावसर उक्तेः प्रकृते ऋगर्थरूपविषयं भगवत्प्रीतिरूपफलं चेत्यर्थः । केचित्तु चशब्देन विषयः समुच्चीयत इति वदन्ति ।

तत्रैव सुधायां 'यद्वा नानिर्धारितस्वरूपस्य प्रणामो युक्तः । न चान्तरेण लक्षणं वस्तुनिर्धारणमित्यतो विभवादनेकानि नारायणस्य लक्षणान्यने-नोच्यन्त' इति विशेषणानां लक्षणप्रतिपादनरूपप्रयोजनान्तरपरत्वेनोक्तत्वात्,

---

१. स्वव्याख्यानप्रकारं । २. एकार्थत्वप्रदर्शनेन - क,
३. निखिलेत्यादीनां तु, ४. विष्णुतत्त्वनिर्णयटीकायां - क ।

तद्वदत्रापि लक्षणप्रतिपादनरूपप्रयोजनान्तरपरत्वमिति भावेनावतारयति **अनवधारितस्वरूपस्येति** । स्तुतिसमर्पकत्वलक्षणप्रतिपादकत्वरूपपक्ष-भेदस्योपपादनेनैव स्फुटत्वात् तद्भेदकाथवेत्यादिशब्दाप्रयोग इति ध्येयम्[१] । सुधायां तु [२]चतुर्धा विशेषणप्रयोजनकथनात्, असाङ्कर्येण प्रतिपत्तये पक्षभेदकयद्वेति पदं प्रयुक्तमिति द्रष्टव्यम् । प्राचीनपक्षे सर्वेषां विशेषणानां स्तुतिपरत्वम् । अत्र पक्षे वक्ष्यमाणरीत्या विशेषणद्वयस्यैव लक्षणपरत्वम्, अन्येषां तु प्रयोजनान्तरपरत्वमिति ज्ञेयम् ।

**तद्धिता इतीति** । 'प्रत्ययः परस्य इत्यादिवत् तद्धित इत्येकवचने प्रयोक्तव्ये तद्धिता इति अर्थविशेषेषु [३]प्रत्ययान्तज्ञानार्थमिति वृत्त्यादौ चतुर्थाद्यपादे उक्तत्वादिति भावः । तथा च [४]अर्णस्त्रशब्दात् डप्रत्यये 'चुटू' इति उकारलोपे डित्यभस्यापि इति प्रातिपदिकटिलोपे [५]आ इत्यकारान्तत्वं ज्ञेयम् ।

'कडाराः कर्मधारये' इतीति द्वितीयस्य द्वितीयपादान्ते 'कडारादयः शब्दाः कर्मधारये समासे वा पूर्वं प्रयोक्तव्याः कडारजैमिनिः जैमिनिकडारः' इति सूत्रार्थोदाहरणयोर्वृत्त्यादावुक्तेरिहापि अमितशब्दस्य कडारादिशब्दवत् परनिपात इति भावः । माण्डूक्योपनिषदि तृतीयखण्डे 'मितेरपीर्वामिनोति ह वा इदं सर्वम्' इत्यत्र भाष्ये 'सर्वशः स्वात्मन्यन्तर्गमयति[६] मानमन्तर्गतिः स्मृता । [७]जीवमन्तर्गतिं कृत्वा [८]तदज्ञानलयकृद्यतः । प्राज्ञो मानमपीतिश्च तज्ज्ञाप्येवं विमुक्तिगः । व्याप्यान्तर्गमयेत् सर्वं इति' ब्रह्मतर्कवचनेन

---

१. ज्ञेयम् - क । २. बहुधा - क,

३. प्रत्ययान्तरज्ञानार्थमिति - क, ४. अर्णश्शब्दात् - क,

५. अर्ण इत्यकारन्तत्वं - क । ६. स्वात्मन्यन्तर्गमय इति - क,

७. जीवमन्तर्गतं कृत्वा - क, ८. तज्ज्ञानलयकृद् यतः

मितिशब्दस्य मिनोतिशब्दस्य चान्तर्गमनार्थतया व्याख्यानात् । प्रकृतेऽप्यन्तर्गमनवाचिमानितशब्देन[१] नञ्समासे सत्यमितशब्दस्यान्तर्गतत्वमर्थ इत्यभिप्रेत्य प्रकारान्तरमाह[२] **यद्वेति** । तत्रत्य टीकायां 'सर्वशः सर्वं स्वात्मन्यन्तर्गमयति । मानं मिति अन्तर्गतिः' [३]व्याख्यानाच्च इति ज्ञेयम् । **अपरिच्छिन्नेति** । अपरिच्छिन्ना अन्तर्भाविता ततोऽप्यधिकेत्यर्थः । 'न तत्र सूर्यो भाति' इत्यादेः सामस्त्येनाविर्भूतानेकसूर्यैरित्यना[४]-च्छादितद्युतिमदिति भावः । एतदर्थविशेषप्रदर्शनाय यद्वेति पक्षान्तरोक्तिः । केचित्तु, कडारादिष्वमितशब्दस्य पाठाभावात् पक्षान्तरमाह **यद्वेति** ।

अपरिच्छिन्नानुपमितेत्यर्थ इति वदन्ति । **लक्षणद्वयमिति** । निखिलगुणपूर्णत्वमशेषनिरस्तदोषत्वं चेति लक्षणद्वयमित्यर्थः । उच्चसूर्यामितद्युतिमित्यस्याद्यलक्षणविवरणरूपत्वान्न ऋग्लक्षणत्वमिति[५] भावः । **केवलव्यतिरेकिणेति** । नारायणः निखिलपूर्णगुणार्णवः अशेषनिरस्तदोषश्च भवितुमर्हति सर्वेश्वरत्वात् । व्यतिरेकेण [६]चैत्रवदित्यनुमानेन साधनीयमित्यर्थः । हेतोरसिद्धिमाशङ्क्य निराकरोति **अस्वतन्त्रस्येति** । विस्तृतमेतदन्यत्र[७] 'नित्यातादृशचिच्चेत्ययन्ते'त्यादाविति ज्ञेयम् । [८]ननु तदस्येत्यत्र तच्छब्दस्यार्थपरामर्शत्वे नपुंसकत्वानुपपत्तिरित्यत आह **ऋगर्थमिति** । **सन्निधापितमिति** । [९]लृडन्तस्य वच परिभाषण इति

---

१. अन्तर्गतिवाचिनामितशब्देन, २. पक्षान्तरमाह - क,
३. इति - क, ४. सूर्यैरप्यनाच्छादित ।
५. न पृथग्ग्रहणमिति - क, ६. जीववत् - क, ७. तत्त्वोद्योतादौ ।
८. ऋग्प्रतिपाद्यतयेति उक्तरीत्या उच्चसूर्यामितद्युतिमिति विशेषणबलाद्रा-गम्यत्वप्रयोजकतया वा ऋग्प्रतिपाद्यत्वरूपाधिकतत्त्वलाभादिति भावः-क,
९. वक्ष्यामीति - क,

धातुनिष्पन्नत्वेन प्रकृत्या वचनं सन्निधापितम् । वचनस्य परबोधनार्थत्वात् तस्य श्रवणसाध्यत्वात् तेऽपि वचनाक्षिप्ततया बुद्धिसन्निधापित इति भावः । नत्वेवं सन्निहितकारकपरित्यागेन व्यवहितधात्वर्थपरामर्शे गौरवमिति चेन्न, क्रियां कुर्वद्धि कारकमित्युक्तरीत्या सर्वेषां कारकाणां क्रियारूपधात्वर्थनिष्पादकत्वेन तस्यैव प्राधान्येन बुद्धिसन्निहितत्वात् शब्दक्रमादर्थक्रमो बलीयान् इति न्यायात् ।

अत एव ऋगर्थं वक्ष्यामीत्यन्वयप्रदर्शनमुखेन कारकांशानुवादेन कृतः । अन्यथा वक्ष्यामीत्यनेन सन्निधापितमित्येव ब्रूयादिति[१] । अतितुष्टिकरमित्येतद्धेतुगर्भं [२]विशेषणमिति भावेन हेतुत्वं व्यञ्जयन् तच्छब्दपरामृष्टेनान्वयं दर्शयति **यस्मादिति** । तस्मादित्यस्य ऋगर्थं वक्ष्यामीत्यन्वयः । **एकं वेति** । स चासौ अयं च तदयमिति विग्रहः । 'विशेषणं विशेष्येण बहुलम्' इति बहुलग्रहणाद् विशिष्टवाचकयोरपि समासो ज्ञेयः । तस्मिन् सूत्रे भेदकं विशेषणं भेद्येन विशेष्येण समस्यते नीलोत्पलं रक्तोत्पलमिति वृत्त्यादावुक्तेरिह तथा असम्भवादिति ।

यद्वा अस्मिन् सूत्रे विशेषणमित्येतावत्युक्तेऽपि सम्बन्धिशब्दत्वेन विशेष्येणेति लब्धेऽपि पुनर्विशेष्यग्रहणमुभयतो विशेषणविशेष्यभावेऽपि समासविधानार्थमिति शाब्दिकैरेवोक्तत्वादित्यपि समासो ज्ञेयः । एकपदलब्धार्थमेव दर्शयति **तस्येति** । अस्मिन् पक्षे अतितुष्टिकरं ऋगर्थं वक्ष्यामीत्येकवाक्यतयान्वयः । **उक्तमिति** । आद्यपद्यावतारिकायामुक्तमित्यर्थः ।

**अत एवेति** । कासाञ्चिद् ऋचां व्याख्यानस्य प्रतिज्ञातत्वादेवेत्यर्थः । उपक्षत्रमित्यस्य ऋचमित्यनेनान्वयः । तेन भाष्यकृता एको वर्ग

---

१. 'इति'शब्दः क पुस्तके नास्ति, २. विशेषणमिति कपुस्तके नास्ति ।

इति तृतीयाध्यायगतः 'त्रिर्नो सखिना यजता दिवे दिव' ति पञ्चमो वर्ग इत्यर्थः । **नकिर्माकिरित्यादीति** । 'नकिर्माकिरस्मसीत्यादिप्रोक्ताधिक्य-विवक्षये'त्यादिना वक्ष्यमाणप्रकारेण 'नकिरिन्द्रत्वदुत्तरः', 'माकिर्नेशत्', 'स्मसिरस्थातर्हरीणां' इत्यादि भिन्नभिन्नवाक्यमुपादाय एकैकपदव्याख्यान-प्रकारशिक्षणं च कासाञ्चिदृचामेव व्याख्या[1] प्रतिज्ञातेत्येतमर्थं प्रकाशय-तीत्यर्थः । अन्यथा तत्प्रस्थान[2] एव तासामृचां व्याख्यानं क्रियतेति भावः ।

### भाष्यम्

**ओमशेषगुणाधार इति नारायणोऽप्यसौ ।**
**पूर्णो भूतिवरोऽनन्तसुखो यद्व्याहृतीरितः ॥**

### टीका

नन्वग्न्यादिप्रतिपादपराणामृचां व्याख्यानादिकं कथं नारायणस्य तितुष्टिकरम् ? न । सकलवेदानां मुख्यतो भगवत्प्रतिपत्तिहेतुत्वात् । कुत एतदित्यत आह **ओमिति** । असौ परमेश्वरः । ॐकारार्थ-स्तावत् । केन निमित्तेन । **अशेषगुणाधार इति** । इतिशब्दो हेतौ । यथोक्तं 'ओतत्ववाची ह्योङ्कार' इति । कुत इत्यतश्चोक्तम् **अशेषेति** । ॐकारो ह्यशेषगुणाधारत्वं वक्ति । तथाभूतश्च परमेश्वर एवेति स एवोङ्कारार्थः । किं च नारायणशब्दो हि भगवति प्रसिद्धः स च तस्य गुणपूर्तिवाची तत्समाख्यानादोङ्कारोऽपि तत्पर इति निश्चीयत इत्याह **नारायणोऽप्यसाविति** । किमतो यद्येवमित्यत आह **पूर्ण इति** । यद्यस्मादेवमोङ्कारार्थस्तस्माद्व्याहृतीरितः स एव । 'प्रणवार्था व्याहृतय'

---

१. व्याख्यान - क,　　२. तत्तत्स्थाने - क,

**इति वचनात् । किन्निमित्तम् । यद्यस्मात्पूर्णो भूतिवरोऽनन्तसुखश्च तस्माद्व्याहृतीरितः । भूबहौ बहुः पूर्णतायामित्युक्तत्वाद्भवतेः क्वि(पि)प् पूर्णत्वाद्भूः । भूत्यैश्वर्येण वरो महैश्वर्यवानिति भुवः । भवतेरौणादिको डुप्रत्ययः । वरशब्दस्यान्तलोपश्च निरुक्तत्वात् । यथोक्तं 'वर्णागमो वर्णविपर्ययश्च तथापरौ वर्णविकारनाशौ । धातोस्तदर्थातिशयेन योग-स्तदुच्यते पञ्चविधं निरुक्तमि'ति । सु शोभनम् वः सुखं यस्य । शोभनता च सुखस्यानन्ततयेत्यनन्तसुखत्वात्सुवः । स्वरिति पक्षे निरुक्तत्वादुकारलोपः । शब्दस्वाभाव्यादव्ययत्वम् ।**

## टिप्पणी

परिहरति **सकलवेदानामिति** । मुख्यतः परममुख्यवृत्त्येत्यर्थः । **निमित्तेनेति** । प्रवृत्तिनिमित्तेनेत्यर्थः । **यथोक्तमिति** । [१]जिज्ञासनामानु-व्याख्यानाद्यभागे ॐकारस्याशेषगुणपूर्णत्वरूपप्रवृत्तिनिमित्तेन भगवद्वाच-कत्वं 'ओतत्ववाची ह्योङ्कारो वक्त्यसौ तद्गुणोतताम्' इत्यनेनोक्तमित्यर्थः । विवृतं च सुधायाम् ॐकारस्तावदित्यादिना अनन्तानवद्यगुणपूर्णतैव ॐकारस्यार्थ इत्यन्तेन ।

**कुत इति** । अशेषगुणाधारत्वस्य ॐपदप्रवृत्तिनिमित्तत्वेऽपि तस्यान्यगतत्वेऽन्यस्य ॐकारार्थत्वप्राप्त्या परमेश्वरस्योङ्कारार्थत्वं कुत इति शङ्कायामेतच्छङ्कानिवर्तकत्वेनेदमेव वाक्यमावृत्त्या योजनीयमित्यर्थः । कथमावृत्तेन वाक्येनोक्तशङ्कापरिहार इत्यतः उक्तानुवादपूर्वं तात्पर्यमाह **ॐकारो हीत्यादिना** । **स एव ॐकारार्थ इति** । अत्रेतौ प्रयोगौ भवतः—

१. जिज्ञासाधिकरणानुव्याख्यानादिभागे न किरिन्द्र त्वदुत्तरो - क ।

(१) परमेश्वरः ॐकारवाच्यः अशेषगुणपूर्णत्वरूपोङ्कारप्रवृत्तिनिमित्तत्वात् । यो यच्छब्दप्रवृत्तिनिमित्तवान् स तच्छब्दवाच्यः, यथा घटादिपदवाच्यो घटादिरिति ।

(२) ॐकारः परमेश्वरवाची तन्निष्ठधर्मप्रवृत्तिहेतुकत्वात् । सामान्यव्याप्त्या सम्मतवदिति च नारायणस्य गुणपूर्णत्वं श्रुत्यादिसिद्धमेवेति नासिद्ध्यादिकमिति ज्ञेयम् ।

**तस्मादिति** । परमेश्वरो व्याहृतिप्रतिपाद्यः तद्व्याख्येयोङ्काकारार्थत्वात् । य यद्व्याख्येयार्थः स तद्व्याख्यानार्थः यथा सम्मत इत्यनुमानादिति भावः । एवमुत्तरत्राप्यनुमानप्रकारो द्रष्टव्यः । [१]ततो विशेषणासिद्धिं परिहरति [२]**प्रमाणार्थ इति** । तैत्तरीयभाष्योक्तप्रमाणवचनादित्यर्थः । **इत्युक्तत्वादिति** । छान्दोग्यभाष्ये तृतीयाध्याये गायत्रीप्रकरणे उक्तत्वादित्यर्थः । **यथोक्तमिति** । 'पृषोदरादीनि यथोपदिष्टम्' इति सूत्रे वृत्तिकारेणोक्तमित्यर्थः । **स्वरिति पक्ष इति** । तृतीयव्याहृतिरूपमिति पक्षे सु इत्यत्र उकारलोपो निरुक्तत्वादित्यर्थः ।

नन्वेवं व्याहृतित्रयव्युत्पत्तौ परमेश्वरस्य सम्प्रदानत्वादिविवक्षायां चतुर्थ्याद्यन्ततया निर्देशः स्यात् । न च तथा याज्ञिकव्यवहारोऽस्तीत्यत आह शब्दस्वाभाव्यादिति ।

**भाष्यम्**

**गुणैस्ततः प्रसविता वरणीयो गुणोन्नतेः ।**
**भारतिज्ञानरूपत्वाद्भर्गो ध्येयोऽखिलैर्जनैः ।**
**प्रेरकोऽशेषबुद्धीनां स गायत्र्यर्थ ईरितः ॥**

---

१. हेतोः - क । २. प्रणवार्था इति - क ।

टीका

किं तथापीत्यत आह **गुणैरिति** । यस्माद्व्याहृतीरितस्तस्मात्स एव गायत्र्यर्थ ईरितः । व्याहृत्यर्थत्वाद्गायत्र्याः । केन निमित्तेन । गुणैस्तत इति तत् 'त्यजियजितनिभ्यो डिदि'ति तनोतेरदिप्रत्ययः । योग्यतया गुणानां सम्बन्धः । प्रसविता जगतो जनक इति सविता । षूङ्-प्राणिप्रसव इत्यस्मात्तृच् । वरणीयो भजनीय इति वरेण्यः । वृञ एण्य इति वृणोतेः कर्मण्येण्यः । गुणोन्नतेर्हेतोर्वरणीय इति तद्वरेण्यशब्दार्थयोर्हेतुहेतुमद्भावो दर्शितः । भा दीप्तिः । रतिः क्रीडा । गत्यर्थानां ज्ञानार्थत्वाद्गमेर्ज्ञानार्थता । भा दीप्तौ रमु क्रीडायां गम्लृ गतौ धातुसमुदायादसुन् । उणादयो बहुलमित्युक्तत्वात् । अदिभूम्या डुतजिति यथा । असुन्प्रत्ययसंयोगेन भातेर्ह्रस्वता रमेर्गमेश्च टिलोपः । देवशब्दस्तूत्तरत्र व्याख्यास्यते । धीमहीत्यस्य तात्पर्यं ध्येय इति । ध्यायतेः सम्प्रसारणं विकरणलोप आत्मनेपदं च्छान्दसम् । व्यत्ययो बहुलमिति वचनात् । अखिलैर्जनैः इति बहुवचनार्थः ।

तृतीयपादतात्पर्यं **प्रेरक इति** । न इति बहुवचनप्रयोगादशेषेत्युक्तम् । चुदप्रेरण इत्यस्माल्लेट् । एवं योजनीयम् । यो नोऽस्माकमशेषजीवानां धियो बुद्धीः प्रचोदयात् प्रेरयेत् । तस्य सवितुर्देवस्य नारायणस्य तद्गुणैस्ततं तस्मादेव वरेण्यं भर्गो रूपं धीमहि चिन्तयाम इति । गायत्र्यर्थत्वेऽपि भगवतः किमायातं प्रकृते अत आह **स इति** । यतो गायत्र्यर्थः तस्मात् स हरिरेव पौरुषे सूक्त ईरितः प्रतिपादितः । गायत्र्यर्थत्वात् तस्य ।

## टिप्पणी

**व्याहृत्यर्थत्वादिति** । तच्च पाञ्चरात्र्यागमसिद्धमिति भावः । तस्य आगमस्य स्पष्टमाचार्यैः क्वाप्यनुक्तत्वादिह सुधायाञ्चानुक्तिः । अत एव सुधायां त्रिपदाया गायत्र्या व्याहृतित्रयव्याख्यानस्य आगमसिद्धत्वादिति चोक्तम् ।

ननु 'नारायणाष्टाक्षराच्च [१]व्याहृतित्रिगुणात्पुनः । वेदमाता तु गायत्री' इति तत्त्वसारोक्तेः कथमाचार्यैः क्वाप्यनुक्तत्वादित्युक्तिरिति चेन्न, तत्र व्याहृतिशब्दस्य व्याहरणार्थत्वेन प्रसिद्धभूरादिव्याहृतिपरत्वाभावात् ।

अन्यथा 'तद्वेदः पौरुषं सूक्तं' इति वाक्यप्रदर्शनवत् तदपि प्रदर्श्येतेति[२] । असुजिति [३]ञिनित्यादिर्नित्याद्युदात्तार्थं नकारानुबन्धकरणमिति ज्ञेयम् । 'उणादयो बहुलमि'ति तस्मिन् सूत्रे उणादयः प्रत्ययाः बहुलं भवन्ति । यतो विहितास्ततोऽन्यत्रापि भवन्ति । केचिदविहिता एव प्रयोगत उन्नीयन्ते । 'संज्ञासु धातुरूपाणि प्रत्ययाश्च ततः परे । कार्याद् विद्यात् अनुबन्धमेतच्छास्त्रमुणादिषु' । इति वृत्यादावुक्तेरिहापि प्रकृतिप्रत्ययविभागेन शब्दनिष्पत्तिर्ज्ञेयेति भावः । नन्वेवमपि धातूपपदात्[४] समुदायात् प्रत्ययोत्पत्तिः कुत्र दृष्टेत्यत आह **अदिभूभ्यामिति** । अद्भुतमिति रूपसिद्ध्यर्थम् अद भक्षणे भू सत्तायामिति धातुद्वयसमुदायात् यथा डुतच्प्रत्ययस्तथा प्रकृतेऽपीत्यर्थः । **उत्तरत्रेति** । आद्यऋग्व्याख्यावसरे 'द्योतनाद् विजयात् कान्त्या..........' इत्यादिना व्याख्यास्यत इत्यर्थः ।

---

१. प्रणवार्था व्याहृतयो व्याहृत्यर्था ऋगादयः (इति व्याहृतिपादे) –तैत्तिरीयभाष्ये ।

२. इति शब्दो नास्ति कपुस्तके,

३. ञिनित्याद्युदात्तार्थं - क, ञ्निनित्यादिर्नित्यं ६-१-१९७ ।
ञ्निदन्तस्य निदन्तस्य चादिरुदात्तः स्यात् । ४. धातुसमुदायात् - क ।

ननु ध्यै चिन्तायामिति धातोः शब्विकरणपरस्मैपदित्वेन लिङुत्तमपुरुष-बहुवचने ध्यायेम इति निर्देशः स्यात्, कथं धीमहीति निर्देश इत्यत आह **ध्यायतेरिति**।

तथा च 'सम्प्रसारणाच्च' इति पूर्वरूपे 'हल' इति दीर्घे च धीमहीति रूपमिति भावः। व्यत्ययो बहुलमिति तस्मिन् सूत्रे यथायथं शब्दादयो विकरणाविहिता[1] तेषां छन्दसि विषये बहुलं व्यत्ययो व्यतिरेकः विषयान्तरे विधानम्, क्वचिद्विकरणव्यत्ययः, क्वचिद् द्विविकरणता, क्वचिद् त्रिविकरणता। बहुलग्रहणं सर्वोपाधिव्यभिचारार्थम्। 'सुप्तिङुपग्रहलिङ्गनराणां कालहलच् स्वरकर्तृयङां च। व्यत्ययमिच्छति शास्त्रकृदेषां सोऽपि च सिद्ध्यति बाहुलकेन' इति वृत्त्यादावुक्तेरिति भावः। उपग्रहः परस्मैपदमात्मनेपदं च, नरः प्रथमपुरुषादिः। **बहुवचनार्थ इति**। धीमहीति बहुवचनार्थ इत्यर्थः। भर्ग इत्येतत्पदं सकारान्तनपुंसकलिङ्गमित्युपेत्याह **भर्गो रूपमिति**। भा रतिज्ञानरूपमित्यर्थः। सुधायां तु यो भर्ग इत्यकारान्ततया व्याख्यातम्। तत्तु गायत्री व्याख्यानरूपे यस्य भर्गाख्य तच्चिन्तयामीति मैत्रायणीयश्रुत्यादावकारान्ततया श्रवणात्। पुल्लिङ्गानुसारेणोत्तरार्थगत यच्छब्दसमानाधिकरणतया अन्वय इत्युपेत्यानुव्याख्याने भर्गशब्दार्थ इत्यकारान्ततयानुवादः कृत इत्यभिप्रेत्य।

इह तु सन्निहितक्रियान्वयपरित्यागेनोत्तरार्धान्वये गौरवात् तत्पदोक्तगुणेष्वेकदेशगुणविशेषप्रदर्शनपरतया व्याख्यानरूपत्वेनार्थस्वारस्यात्। 'प्रेरयेत्तस्य यद्भर्गस्तद्वरेण्यमुपास्महे' इति 'भर्गो वरेण्यं तद्ब्रह्म धीमहि' इत्यादि गायत्रीव्याख्यानरूपप्रमाणान्तरसंवादाच्च भर्ग इत्येतत्पदं रूपविशेषेण

---

१. विकरणविहिताः - क

नपुंसकप्रायपाठान्नपुंसकलिङ्गं चेत्युपेत्य, भाष्ये[1] भर्गो ध्येय इति पूर्वाधर्यान्विततयानुवादः कृतः इत्यभिप्रेत्य टीकायां तथैव व्याख्यातमिति ध्येयम् । **चिन्तयेमेति** ।

ननु सुधायां धीमहि चिन्तयाम इति कथं लडन्ततया व्याख्यानमिति चेन्न, पूर्वोक्तमैत्रायणीयवचने चिन्तयामीति लडन्तप्रयोगदर्शनात् तत्र तथा व्याख्यातम् । अत्र तु गायत्री व्याख्यानरूपेषु ध्येयः सदा इत्यादि प्रमाणेषु विध्यर्थकप्रत्ययदर्शनात् धीमहीत्येतद्विध्यर्थकलिडन्तमित्युपेत्य भाष्ये इति टीकायां चिन्तयेमेति व्याख्यातमिति ज्ञेयम् । पक्षद्वयेऽपि विरोधाभावादिति भावः ।

यद्वा सुधायां चिन्तयाम इति नायं लडन्तः किन्तु लोड्वा इति सूत्रेण विध्याद्यर्थे लोटो विधानेन विध्यर्थकलोडुत्तमपुरुषबहुवचनान्त एव । तच्च धीमहीत्यस्यार्थकथनप्रदर्शनार्थमेव, न तु लकारप्रदर्शनार्थमिति ज्ञेयम् ।

नन्वेवं चिन्तयामेति निर्देशः स्यादिति चेन्न । स्फुटतरप्रतिपत्त्यर्थं संहिताविवक्षाकरणेन सन्ध्यभावत्वोपपत्तेरिति । केचित्तु सुधायां भर्ग इत्यकारान्ततया चिन्तयाम इति लडन्ततया व्याख्यानं पर्वपक्ष्युक्तानुवाद इति वदन्ति ।

**गायत्र्यर्थत्वादिति** । 'तद्भेदः पौरुषं सूक्तं वेदाः पुरुषसूक्तगाः' इति तन्त्रसारोक्तागमे सिद्धत्वादिति भावः ।

**भाष्यम्**

**स पूर्णत्वात् पुमान्नाम पौरुषे सूक्त ईरितः ।**
**स एवाखिलवेदार्थः सर्वशास्त्रार्थ एव च ।**

---

१. भाष्ये इति नास्ति कपुस्तके ।

**स एव [1]सर्वशब्दार्थ इत्याहोपनिषत्परा ।**
**तावा एता ऋच इति विशेषेणाप्यृगर्थताम् ।**
**यो देवानामिति श्रुत्या देवनाम्नां विशेषतः ।**
**स्पष्टत्वात् तद्गतत्वेन**

टीका

न च पुरुषसूक्ते पुरुषः प्रतिपाद्यो न विष्णुरिति वाच्यम् । यतः पूर्णत्वात् पुमान् पुरुषो नाम स एव । पृपालनपूरणयोः अस्मात्पुरः कुषन्निति कुषन्प्रत्ययः । तथापि किमित्यत आह **स एवेति** । यतः पुरुषसूक्तार्थो भगवान् तस्मात् स एवाखिलवेदार्थः । पुरुषसूक्तार्थत्वात् तेषाम् । वेदार्थत्वात् स एव सर्वशास्त्रार्थश्च । स्मृतीनां श्रुतिमूलत्वात् । ततश्च स एव सर्वशब्दार्थः । तेषां वैदिकत्वादित्येतद्द्वयं प्रसङ्गादुक्तम् ।

एवमनुमानेन परमेश्वरस्य सर्ववेदार्थत्वं प्रसाध्य श्रुत्यापि साधयति **इत्याहेति** । इत्येतमुक्तमर्थं परमेश्वरस्य सर्ववेदार्थत्वं 'ता वा एताः सर्वा ऋचः सर्वे वेदाः सर्वे घोषा एकैव व्याहृतिः प्राण एवे'ति परोत्कृष्टा विस्पष्टवादिनीति यावत् उपनिषदप्याह । अनेनैव मन्त्राणां कर्मणि विनियुक्तानामविवक्षितार्थत्वेनाव्याख्येयत्वमित्यपि परास्तम् ।

नन्वेवं सर्ववेदानां भगवत्परत्वात् यस्य कस्यापि वेदस्य व्याख्यानादिकं तस्य तुष्टिकरमिति किमृचामेव व्याख्यानेनेत्यत आह **विशेषेणेति** । सर्वे वेदा इत्युक्त्वा यदृच इति पुनरभिधत्ते तेन जानीमो विशेषेणाप्यृगर्थतामीश्वरस्याहोपनिषदिति । अन्यथा तद्वैयर्थ्यात् ।

१. एवाखिल इति पा० ।

**अतस्तद्व्याख्यानादिकं तस्यातितुष्टिकरमिति तदेव क्रियत इति । तावा एता ऋच इतीत्यस्यावृत्त्या योज्यम् । वेदान्तराद्विशेषतः कथमृचां परमेश्वरपरत्वमिति तं प्रकारमाह य इति । 'यो देवानां नामधा एक एवे'ति श्रुत्याऽग्न्यादिदेवनाम्नां तद्गतत्वेन भगवद्वाचित्वेन कारणेनर्चां तद्गतत्वेन विशेषतः स्पष्टत्वाद्विशेषेणाप्यृगर्थतामाहेति ।**

**इदमुक्तं भवति । वेदान्तरस्य खल्वापाततः कर्मादिप्रतिपत्तिपरस्य भगवत्परताज्ञानं मन्दानां दुःशकं भवति । ऋचां त्वग्न्यादिगुणवर्णनपराणामग्न्यादिनाममात्रस्य भगवद्वाचित्वज्ञानमात्रेण भगवत्परत्वावधारणं सुकरमिति तासां विशेषतः परमेश्वरपरत्वमुच्यत इति । तदुक्तम् । ऋचस्तु विशेषत इन्द्रादिनामवतो विष्णोर्गुणानल्पज्ञानामपि प्रकाशयन्तीति प्राणे नारायण एवेति विद्यादिति ।**

**टिप्पणी**

कुषन् प्रत्यय इति । लशक्वतद्धिते इति हलन्त्यमिति ककारनकारयोर्लोपे तस्मिन् परत उदोष्ठ्यपूर्वस्य इत्युत्वे परत्वे पुरुष इति रूपमिति भावः । पुरुषसूक्तार्थत्वादिति । पूर्वोक्ततन्त्रसारवचनादिति भावः । एतद्द्वयमिति । सर्वशास्त्रार्थत्वं सर्वशब्दार्थत्वं चेति द्वयमित्यर्थः । प्रसङ्गादिति । सर्वशास्त्रार्थत्वोपपादनस्यैव प्रकृतोपयोगित्वादिति भावः । एवमनुमानेति । परमेश्वरः सर्ववेदार्थः[१] उक्तप्रणाड्या तद्व्याख्येय ओँकारार्थत्वादिति वा । सर्ववेदः परमेश्वरपरः उक्तप्रणाड्यैव तत्प्रतिपादकोङ्कारव्याख्यानरूपत्वादिति वा अनुमानेत्यर्थः ।

---

१. सर्ववेदार्थः - क ।

ननु ॐकारेणैव सर्वा वाक्सन्तृण्णा इति श्रुतेरोङ्कारस्सर्ववेदानां साक्षादेव व्याख्यानव्याख्येयभावापन्नतया परमेश्वरपरत्वं वर्ण्यताम्, किं परम्पराश्रयणेनेति चेन्न, प्रणवार्था व्याहृतय इत्यादिप्रमाणान्तरानुसारेण सर्ववाचां साक्षादोङ्कारव्याख्यानत्वाभावादिति । **श्रुत्यापीति** । न चैव-मनुमानानुसारेण प्रयत्नवैयर्थ्यमिति वाच्यम् । श्रुतिसिद्धत्वेऽपि सर्ववेदार्थ-त्वस्य व्याख्यानव्याख्येयत्वरूपबलवदुपपत्त्यापि साधयितुमोमशेषेत्यादि प्रयत्नस्य सार्थक्यादिति । **अनेनैवेति** । उपपत्तिश्रुतिभ्यां भगवतः सर्व-वेदार्थत्वोपपादनेनैवेत्यर्थः ।

**ऋच इतीति** । 'ता वा एताः सर्वा ऋचः' इति पुनरभिधत्त इत्यर्थः । यद्वा 'प्राण ऋच' इत्येव विद्यात् इत्युपरितनवाक्य इत्यर्थः । **तद्वैयर्थ्यादिति** । पुनरभिधानवैयर्थ्यादित्यर्थः । **आवृत्त्या योज्यमिति** सर्ववेदार्थत्वमाह । **विशेषेण ऋगर्थतामप्याहेति** पूर्वोत्तरव्याख्याभ्यां योज्यमित्यर्थः । **अग्न्यादिवेदानां**[1] नामानि तेषामित्यर्थः । **तद्गतत्वेनेति** । वाचकतया भगवद्गतत्वेन कारणेन तद्वाचित्वज्ञानेन निमित्तेनेत्यर्थः । देवनाम्नामित्यस्य तद्गतत्वेनेत्यस्य चावृत्तिमभिप्रेत्य नैमित्तकपरत्वेन योजयति **ऋचामिति** । तद्गतत्वेन भगवति तात्पर्यवत्त्वेन विशेषतः स्पष्टत्वात् झटिति ज्ञातुं शक्यत्वादित्यर्थः । अस्मिन् पक्षे देवानां नामानि यासु ऋक्षु तासां ऋचामिति ज्ञेयम् । न चैवं 'ऋन्नेभ्यो ङीप्' ङीप्प्रत्यये देवनाम्नीनामिति[2] निर्देशः स्यादिति वाच्यम् । 'मन' इति सूत्रे अनिनस्मिन् ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति इति मन्नन्तात्स्त्रियां टापो[3]

---

१. अग्न्यादिदेवानाम् - क,

२. देवनाम्नीमिति - क,

३. ङीपः - क ।

निषिद्धत्वादिति । नन्वेवं महानाम्नीनामुपसर्गानुपसृजति, चन्द्रनाम्नीं सरस्वतीमित्यादिनिर्देशानुपपत्तिरिति चेन्न, इदमस्थमुः इत्युक्तप्रकरणे इकोऽचि विभक्तौ इत्यजग्रहणेन च नञा निर्दिष्टस्यानित्यत्वोक्तेर्वा छान्दसत्वेन वा निर्देशोपपत्तेरिति । उक्तं च कर्मनिर्णयटीकायामाद्यभागे 'महन्नाम यास्वृक्षु विद्यते ता महानाम्न्य' इति मूलव्याख्यानावसरे नञानिर्दिष्टमनित्यमिति वा वेदत्वाद्वा मन इति ङीपः प्रतिषेधो न प्रवर्तत इति आद्यसमाधानेनैव लौकिकव्यवहारोऽपि समाहितो द्रष्टव्यः ।

यद्वा [१]'अन उपधालोपिनोऽन्यतरस्याम्' इति सूत्रे ङीपो विकल्पितत्वात् तदभावपक्षे नकारान्तत्वसिद्धेः । कर्मनिर्णयटीकायां तु अस्मिन् सूत्रे 'सङ्ख्याव्ययादेर्ङीप्' इत्यतः सङ्ख्याग्रहणमनुवर्तत इति यदि कश्चिद् ब्रूयात् तं प्रति समाधानान्तरमुक्तमिति ज्ञेयम् । केचित्तु ऋचामित्यध्याहार इति वदन्ति । **तदुक्तमिति** । ऐतरेयभाष्ये एष उ एव बिभ्रद्राजा इति दशमखण्डव्याख्याने इतरवेदापेक्षया झटिति भगवद्बोधकत्वमेव ऋक्षु विशेष इत्येतत्प्रमेयमुक्तमित्यर्थः ।

**भाष्यम्**

**तत्राहाग्रेऽग्निनामकम् ।**

**अग्रणीत्वं यदग्नित्वमित्यग्रे नाम तद्भवेत् ।**
**एवमेवाह भगवान् निरुक्तिं बादरायणः ।**
**'यथैवाग्न्यादयः शब्दाः प्रवर्तन्ते जनार्दने ।**
**तथा निरुक्तिं वक्ष्यामो ज्ञानिनां ज्ञानसिद्धये ।'**
**इति तेन**

---

१. मन - क ।

## टीका

एवम् ऋगर्थव्याख्यानम् उपपाद्य सूक्तस्य तात्पर्यं[1] तावदाह **तत्रेति** । तत्र ऋक्षु । अग्रे प्रथमसूक्ते । अग्निनामकं भगवन्तम् आह प्रतिपादयति वेदः । अग्निनामवतः प्रथमप्रतिपादने को हेतुरित्यत आह **अग्रणीत्वमिति** । यद्यस्मादग्रणीत्वमग्नित्वम्[2] इति तस्मात् । तन्नाम अग्निनाम । अग्रे प्रथमसूक्ते । प्रयुक्तं भवेत् । स ह्यग्रणीर्नाम यः स्तुत्यादावग्रे वर्तते । तथात्वं चेश्वरस्याग्निशब्दो वक्ति । अतस्तन्नाम्नैवाग्रे स्तुतिरुपपन्नेति । अत्र वृद्धसम्मतिमाह **एवमेवेति** । अनेनैव अभिप्रायेणाग्निशब्दमादिं कृत्वा भगवान् बादरायणः सर्वशब्दानामीश्वरपरतया निरुक्तिं निर्वचनमाह । तदेव कुत इत्यत आह **यथैवेति** । यथा येनप्रकारेण निरुक्तौ कृतायाम् । इति भगवतः प्रतिज्ञावाक्येनाग्निशब्दमादिं कृत्वा निरुक्तिमाहेति ज्ञायत इत्यर्थः ।

न हि भगवतो यादृच्छिकी प्रवृत्तिः नाप्येतद्विहाय निमित्तान्तरकल्पने प्रमाणमस्ति यत एवमग्निशब्दस्य प्रथमत्वमुपपन्नं तेन कारणेन तत्राहाग्रेऽग्निनामकमिति सम्बन्धः । एवमुत्तरत्रापि सूक्तादिक्रमनियमे कारणानि विशेषशास्त्रबलेन ज्ञातव्यानीति प्रदर्शनार्थमिदमुक्तम् । चिरन्तननिरुक्त्याद्यनुसारेण प्रवृत्तेऽस्मद्व्याख्यानेऽर्वाचीननिरुक्त्यादिविसंवादो नादरणीय इत्येतदप्यनेन सूचितं भवति । ऋगर्थश्च त्रिविधो भवति[3] एकस्तावत् प्रसिद्धाग्न्यादिरूपः अपरः तदन्तर्गतेश्वरलक्षणः अन्योऽध्यात्मरूपः । तत्त्रितयपरं चेदं भाष्यम् ।

---

१. तात्पर्यार्थं इति पा० ।

२. अग्निशब्दाभिधेयं – इति अधिकपाठः ।

३. त्रिविधः खलु वेदार्थः – इति अधिकः पाठः दृश्यते ।)

## ऋग्वेदसंहिता

# सूक्तम् – १

नवर्चम् । मधुच्छन्दा वैश्वामित्रः । अग्निः । गायत्री ।

मंत्रः – १

(अध्याय - १, सूत्र - १, मंत्र - १)

ॐ

**अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम् ।**
**होतारं रत्नधातमम् ॥**

पदपाठः

अग्निम् । ईळे । पुरःऽहितम् । यज्ञस्य ।
देवम् । ऋत्विजम् । होतारम् । रत्नऽधातमम् ॥

भाष्यम्

**अग्निशब्दोऽयमग्र एवाभिपूज्यताम् ।**
**अग्र्यत्वमग्रनेतृत्वमत्तिमङ्गाङ्गनेतृताम् ।**
**आह तं स्तौम्यशेषस्य पूर्वमेव हितं प्रभुम् ।**
**ऋत्विङ्नियामकत्वेन यज्ञानामृत्विजं सदा ।**
**द्योतनाद्विजयात्कान्त्या स्तुत्या व्यवहृतेरपि ।**
**गत्या रत्या च देवाख्यं होतृसंस्थं विशेषतः ।**
**अग्निसंस्थेन रूपेण यतोऽग्निर्होतृदेवता ।**

**इन्द्रियाग्निषु चार्थानां यद्धोता होतृनामकः ।**
**रतिधारकोत्तमत्वात्स रत्नधातम ईरितः ॥ १ ॥**

**टीका**

तत्र 'अग्निमीळ' इत्याद्यामृचं व्याचक्षाणोऽग्निशब्दार्थं तावन्निर्वक्ति **अग्निशब्दोऽयमिति** । अयमादितः प्रयुक्तोऽग्निशब्दः अग्नेस्तदन्तर्गतहरेश्च बाह्ययज्ञे अध्यात्मं च हरेर्ज्ञानयज्ञे मुख्यामुख्यत्वाभ्यामग्र एव अशेषपूज्येभ्यः पूर्वमेव अभिपूज्यतामभिपूज्यत्वमाह इति सम्बन्धः । अग्रशब्दात्सप्तमीसमर्थादभिपूज्य इत्यर्थो तद्धितो निप्रत्ययो रशब्दलोपश्च । तथाग्र्यत्वमग्रे भवत्वमुत्तमत्वम् । पूर्ववद्भवार्थे निप्रत्ययो रशब्दलोपश्च । तथाग्रनेतृत्वं प्रथमप्रवर्तकत्वम् । अग्रशब्दोपपदान्नयतेः कर्तरि डिप्रत्यय उपपदरशब्दलोपश्च । तथात्तिमत्तृत्वं धातुनिर्देशोऽयम् । तेन तदर्थस्य कर्ता लक्ष्यते । बहिः संहर्तृत्वं हविषोत्तृत्वं च । अध्यात्मं विषयाणाम् । अत्तेः कर्तरि निप्रत्ययो दस्य च गः । तथाङ्गाङ्गनेतृताम् अध्यात्मं विष्णोरग्नेश्च सर्वशरीराणां प्रवर्तकत्वम् । अङ्गशब्दोपपदान्नयतेर्डिप्रत्यय उपपदानुस्वाराकारलोपश्च । तथाऽगनेतृतां स्वतो न गच्छति न प्रवर्तते यद्विश्वं तस्य प्रवर्तकत्वम् । पूर्ववन्निरुक्तिः । नेतृशब्दस्तृन्नन्तः तेन द्वितीयायाः समासः । अग्निमीळ इत्यस्य व्याख्यानं तं स्तौमीति । ईड स्तुतौ । ऋक्षु डस्य ळः प्रायेण । कुतः पुरोहितं पुरः पूर्वमेवानादित एव हितम् । प्रतिसम्बध्यपेक्षायामशेषस्येति शेषोक्तिः । [१]बहुलं छन्दसीति चतुर्थ्यर्थे षष्ठी । प्रभुमित्युदात्तस्वरार्थः । उदात्तस्योच्चतार्थतेति हि वक्ष्यति । हितो हि स्तुत्यो भवति ।

---

१. अत्र चतुर्थेति अधिकपाठः दृश्यते ।

किं च यज्ञस्य ऋत्विजम् । जातावेकवचनम् । यज्ञानां बाह्यानामाध्यात्मिकानां च ऋत्विजम् । तत्कथमित्यत आह **सदा ऋत्विङ्नियामकत्वेनेति** । तेदधीनत्वादर्थवदिति सूत्रात् । अध्यात्ममिन्द्रियदेवा ऋत्विजः । कर्माङ्गत्वादृचामृत्विग्वाक्यतायामात्मनो नियामकस्य ज्ञानप्रदस्य च स्तुतिरुपपन्नैव । किञ्च देवं द्योतनाद्विजयात्कान्त्या व्यवहृतेरपि गत्या रत्या चेति द्योतनादेः कर्तृत्वात्तथा स्तुत्या स्तुतिकर्मत्वाद्देवाख्यम् । दीव्यतेर्द्योतनाद्यर्थात्कर्तरि पचाद्यच् । स्तुत्यर्थात्कर्मणि घञ् । गुणाधिको हि स्तुत्यः स्यात् । किं च होतारं होतृसंस्थम् । ऋत्विजमित्युक्तत्वाद्धोतारमिति पुनरुक्तिरित्यत आह **विशेषत इति** । तत्कथमित्यत आह **अग्निसंस्थेनेति** । ऋत्विक्षु परमेश्वरः सन्निहित एव । होतरि पुनरत्र स्तुत्येनाग्निसंस्थेनैव रूपेणेति विशेषतो(ऽग्निसंस्थता) होतृसंस्थता । अनया च विवक्षया न पुनरुक्तिरिति । एतदपि कुत इत्यत आह **यत इति** । होतृदेवता सन् यतोऽग्निर्होतरि स्थितो[1]ऽतोऽग्निसंस्थेन रूपेण होतृसंस्थता युक्तैवेत्यर्थः । एवं विष्णौ होतृशब्दं व्याख्यायाग्नौ व्याख्याति **यत इति** । अतो होतोच्यत इति शेषः । तथा च श्रुतिः । तद्येयं वाक् सोऽयमग्निः स होतेति । ऋग्वेदिनो हि होतृत्वापेक्षिणो होतृसंस्थस्य स्तुतिर्युक्तैव । अध्यात्मं होतृशब्दं व्याख्याति **इन्द्रियेति** । यद्यस्मादिन्द्रियाख्येष्वग्निष्वर्थानां तत्तदिन्द्रियविषयलक्षणानां हविषां होता हरिस्तस्माच्च होतृनामकः । भोगप्रदस्य स्तुतिः कर्तव्यैव । परमसुखत्वाच्च तस्य स्तुतिः सुखार्थिनां युक्तेति । रत्नधातमशब्दं व्याख्याति **रतीति** । रमतेर्भावे क्त्नप्रत्ययः । रत्नं रतिं धत्त इति रत्नधाः । आतो मनिन्

---

१. (ततो इति पा०)

**क्वनिब्वनिपश्चेति विच्। अतिशयेन रत्नधाः रत्नधातमः। न वा एकेनाक्षरेण छन्दांसि वियन्तीति वचनान्न छन्दोभङ्गः। यद्यपि रत्नशब्दो धननामसु पठितः तथापि तदपरित्यागेनार्थान्तरस्योक्तत्वान्न दोषः ॥ १ ॥**

## टिप्पणी

मुख्यामुख्यत्वाभ्यामिति यथायोग्यमन्वयः । **तद्धिता इति** । बहुवचनज्ञापितो निप्रत्यय इत्यर्थः । अत एव तद्धितग्रहणं कृतम् । **रशब्दलोपश्चेति** । 'वर्णागमो वर्णविपर्ययश्च' इति पूर्वमेवोक्तत्वादिति भावः । **पूर्ववदिति** । सप्तमी समर्थात् तद्धितानि प्रत्यया इत्यर्थः[1] । **डप्रत्यय इति** । 'उणादयो बहुलम्' इति बहुलग्रहणादिति भावः । एवमुत्तरत्रापि [2]यत्र प्रातिपदिकादविहितक्षणः प्रत्ययः तत्र सर्वत्र तद्धिता इति बहुवचनज्ञापि[3] एव । यत्र धातोरविहितलक्षणः प्रत्ययः तत्र सर्वत्र बहुलग्रहणादेवेति ज्ञेयम् । भावप्रत्ययान्तप्रायपाठाद् भावप्रधानो निर्देश इत्यभिप्रेत्याह **अत्तिमत्तृत्वमिति** । भाष्ये भावभवित्रोरभेदज्ञापनाय भावप्रत्ययो न कृत इति ज्ञेयम् । नन्वत्तिशब्दो यदि 'स्त्रियां क्तिन्' इति विहितक्तिन्प्रत्ययस्तदा 'अदो जग्धिर्ल्यप्ति किति' इति सूत्रे अद भक्षण इति धातोर्ल्यपि तकारादावार्धधातुके किति प्रत्यये च परतः जग्धिरित्ययमादेशो भवति। इकार उच्चारणार्थ इति वृत्त्यादावुक्तेर्जग्धिमिति निर्देशः स्यात् । अत्तृत्वरूपार्थलाभश्च[4] । क्तिनो भावे अकर्तरि च विधानात् ।

---

१. तद्धितो नि प्रत्यय इत्यर्थः - क,

२. यत्र प्रातिपदिकादि विहितलक्षणः प्रत्ययः - क,

३. ज्ञापित - क,  ४ अत्तृत्वार्थलाभात् - क ।

यदि कर्त्र्थकलटादेश [१]तिप्प्रत्ययान्तः तदा अप्रत्यय प्रातिपदिक-संज्ञाया निषिद्धत्वात् सुब्विभक्त्यनुपपत्तिरित्यत आह धातुनिर्देशोऽय-मिति। इक् श्तिपौ धातुनिदेशे वक्तव्यौ इत्युक्तेस्तस्य शित्वेन सार्व-धातुकत्वादकित्वाच्च जग्ध्यादेशाभावे, कृदतिङिति कृत्वेन कृत्तद्धितेति प्रातिपदिकसंज्ञायां द्वितीयैकवचने अत्तिमिति रूपसिद्धेरिति भावः। तर्ह्यदिकर्तुः[२] कथं लाभ इत्यत आह तेनेति। पूर्ववदिति। अगशब्दे-ऽनुस्वाराभावेन तल्लोपातिरिक्तमन्यत्सर्वं सममित्यर्थः।

ननु नेतृशब्दस्य तृजन्तत्वे कर्तरीति षष्ठीसमासनिषेधः। तृन्नन्तत्वे न लोकाव्यय इति षष्ठ्या एव निषेधः। तत्कथं समास इत्यत आह नेतृशब्द इति। यद्यपि तृजन्तत्वेऽपि जनिकर्तुः प्रकृति इति सूत्रे जनेः कर्ता जनिकर्ता तस्य जनिकर्तुरिति निर्देशेन 'कर्तरि च' इति निषेधस्य मञ्जर्यादावनित्यत्वज्ञापनाद्वा नञा नित्यमिति वा याजकादिरिति सूत्रे श्रियादिषु[३] 'गमिगम्यादीनामुपसङ्ख्यानम् इति वार्तिकोक्तेरिति भावः।

ननु 'चतुर्थी सम्प्रदाने' इति सूत्रे हितयोगे चतुर्थी वक्तव्या इत्युक्तेरशेषस्येति कथं षष्ठीत्यत आह चतुर्थ्यर्थ इति। छन्दसि विषये चतुर्थ्यर्थे बहुलं षष्ठीविभक्तिर्भवतीति सूत्रार्थः। भाष्यप्रयोगस्यापि छन्दस्तुल्यत्वादिति भावः। उदात्तेति। पुरोहितशब्दे विद्यमानोदात्ते-त्यर्थः। इन्द्रियदेवानां कथं ऋत्विकत्वमित्यत आह कर्माङ्गत्वादिति।

---

१. इति प्रत्ययान्तः अप्रत्ययः प्रातिपदिकमिति। २. तर्ह्यदनकर्तुः - क,
३. नञा निर्दिष्टमनित्यमिति वा याजकादिभिश्चेति वा षष्ठीसमासः कर्तुं शक्यत एव तथाङ्गाङ्गनेतृत्वं तत्स्वभाव इत्यर्थशेषज्ञापनाय ताच्छील्या-र्थकतृनन्त एव भाष्ये प्रयुक्त इति भावः। **द्वितीयायास्समास इति**। द्वितीयाश्रितातीतपतितगतात्यस्तप्राप्तापन्नैरिति सूत्रे श्रितादिषु

सर्वप्राणिकर्मनियामकत्वादित्यर्थः । ऋत्विजमित्यस्य स्तुत्यताप्रयोजकत्वमुपपादयति ऋचामिति । पूर्वोक्तो हेतुरत्रापि सम्बध्यते । कर्मानुष्ठानस्य मन्त्रपूर्वकत्वादिति भावः । रत्नधातममित्यस्य स्तुत्यताप्रयोजकत्वमुपपादयन्नेवावतारयति परमसुखत्वाच्चेति । 'आत' इति आकारान्ताद्धातोः मनिन् वनिप् क्वनिप् प्रत्ययाः भवन्ति चकाराद् विच्प्रत्ययश्च भवतीत्यर्थः । वेरपृक्तस्य इति लोप इति ज्ञेयम् । रतिधारकोत्तमत्वात् स इत्यत्र एकस्याक्षरस्याधिकत्वाच्छन्दोभङ्ग इत्यत आह न वा एकाक्षरेणेति । न वियन्ति छन्दोभङ्गं न प्राप्नुवन्तीत्यर्थः ॥ १ ॥

**मंत्रः – २**

(अ.१, सू.१, मं.२)

**अग्निःपूर्वेभिर्ऋषिभिरीड्यो नूतनैरुत ।**
**स देवाँ एह वक्षति ॥**

**पदपाठः**

**अग्निः । पूर्वेभिः । ऋषिऽभिः । ईड्यः । नूतनैः ।**
**उत । सः । देवान् । आ । इह । वक्षति ॥**

**भाष्यम्**

**स पूर्वैर्नूतनैरेष्यैर्विज्ञानादृषिनामकैः ।**
**ईड्यो देवादिभिः सर्वैः स च देवानिहानयेत् ॥ २ ॥**

टीका

आचारोऽप्यस्तीत्युच्यते **अग्निः पूर्वेभिः** । सोऽग्निस्तद्गतोऽध्यात्मगतो हरिश्च पूर्वेभिः पूर्वैः । बहुलं छन्दसीति भिस ऐस्त्वा-

यदि कर्त्रर्थकलटादेश [१]तिप्प्रत्ययान्तः तदा अप्रत्यय प्रातिपदिक-संज्ञाया निषिद्धत्वात् सुब्विभक्त्यनुपपत्तिरित्यत आह धातुनिर्देशोऽय-मिति । इक् श्तिपौ धातुनिदेशे वक्तव्यौ इत्युक्तेस्तस्य शित्वेन सार्व-धातुकत्वादकित्वाच्च जग्ध्यादेशाभावे, कृदतिङिति कृत्वेन कृत्तद्धितेति प्रातिपदिकसंज्ञायां द्वितीयैकवचने अत्तिमिति रूपसिद्धेरिति भावः । तर्ह्यदिकर्तुः[२] कथं लाभ इत्यत आह तेनेति । पूर्ववदिति । अगशब्दे-ऽनुस्वाराभावेन तल्लोपातिरिक्तमन्यत्सर्वं सममित्यर्थः ।

ननु नेतृशब्दस्य तृजन्तत्वे कर्तरीति षष्ठीसमासनिषेधः । तृन्नन्तत्वे न लोकाव्यय इति षष्ठ्या एव निषेधः । तत्कथं समास इत्यत आह नेतृशब्द इति । यद्यपि तृजन्तत्वेऽपि जनिकर्तुः प्रकृति इति सूत्रे जनेः कर्ता जनिकर्ता तस्य जनिकर्तुरिति निर्देशेन 'कर्तरि च' इति निषेधस्य मञ्जर्यादावनित्यत्वज्ञापनाद्वा नञा नित्यमिति वा याजकादिरिति सूत्रे श्रियादिषु[३] 'गमिगम्यादीनामुपसङ्ख्यानम् इति वार्तिकोक्तेरिति भावः ।

ननु 'चतुर्थी सम्प्रदाने' इति सूत्रे हितयोगे चतुर्थी वक्तव्या इत्युक्तेरशेषस्येति कथं षष्ठीत्यत आह चतुर्थ्यर्थ इति । छन्दसि विषये चतुर्थ्यर्थे बहुलं षष्ठीविभक्तिर्भवतीति सूत्रार्थः । भाष्यप्रयोगस्यापि छन्दस्तुल्यत्वादिति भावः । उदात्तेति । पुरोहितशब्दे विद्यमानोदात्ते-त्यर्थः । इन्द्रियदेवानां कथं ऋत्विकत्वमित्यत आह कर्माङ्गत्वादिति ।

---

१. इति प्रत्ययान्तः अप्रत्ययः प्रातिपदिकमिति । २. तर्ह्यदनकर्तुः - क,
३. नञा निर्दिष्टमनित्यमिति वा याजकादिभिश्चेति वा षष्ठीसमासः कर्तुं शक्यत एव तथाङ्गाङ्गनेतृत्वं तत्स्वभाव इत्यर्थशेषज्ञापनाय ताच्छील्या-र्थकतृनन्त एव भाष्ये प्रयुक्त इति भावः । **द्वितीयायास्समास इति** । द्वितीयाश्रितातीतपतितगतात्यस्तप्राप्तापन्नैरिति सूत्रे श्रितादिषु

सर्वप्राणिकर्मनियामकत्वादित्यर्थः । ऋत्विजमित्यस्य स्तुत्यताप्रयोजकत्वमुपपादयति **ऋचामिति** । पूर्वोक्तो हेतुरत्रापि सम्बध्यते । कर्मानुष्ठानस्य मन्त्रपूर्वकत्वादिति भावः । रत्नधातममित्यस्य स्तुत्यताप्रयोजकत्वमुपपादयन्नेवावतारयति **परमसुखत्वाच्चेति** । 'आत' इति आकारान्ताद्धातोः मनिन् वनिप् क्वनिप् प्रत्ययाः भवन्ति चकाराद् विच्प्रत्ययश्च भवतीत्यर्थः । वेरपृक्तस्य इति लोप इति ज्ञेयम् । रतिधारकोत्तमत्वात् स इत्यत्र एकस्याक्षरस्याधिकत्वाच्छन्दोभङ्ग इत्यत आह **न वा एकाक्षरेणेति** । न वियन्ति छन्दोभङ्गं न प्राप्नुवन्तीत्यर्थः ॥ १ ॥

**मंत्रः – २**

(अ.१, सू.१, मं.२)

**अग्निःपूर्वेभिर्ऋषिभिरीड्यो नूतनैरुत ।**
**स देवाँ एह वक्षति ॥**

**पदपाठः**

**अग्निः । पूर्वेभिः । ऋषिऽभिः । ईड्यः । नूतनैः ।**
**उत । सः । देवान् । आ । इह । वक्षति ॥**

**भाष्यम्**

**स पूर्वैर्नूतनैरेष्यैर्विज्ञानादृषिनामकैः ।**
**ईड्यो देवादिभिः सर्वैः स च देवानिहानयेत् ॥ २ ॥**

**टीका**

आचारोऽप्यस्तीत्युच्यते **अग्निः पूर्वेभिः** । सोऽग्निस्तद्व्रतोऽध्यात्मगतो हरिश्च पूर्वेभिः पूर्वैः । बहुलं छन्दसीति भिस ऐस्त्वा-

भावः । अतीतैः । नूतनैः नूशब्दोऽद्यपर्यायः । ततः सायं चिरमिति तनः । वर्तमानैः । उतशब्दादेष्यैरागामिभिरपि । लृटः सद्वेत्यत्र योगविभागेनाकारोऽप्यादेशो व्याख्यायते । एवं सर्वैः ऋषिभिर्विज्ञानाद्विशिष्टज्ञानवत्त्वादृषिनामकैः देवादिभिरीड्यः स्तुत्यः । ऋषज्ञान इत्यस्मात्किप्रत्ययः । स्तुतश्च सोऽग्निरिह तेषां बाह्ययज्ञे देवान् हविर्भुजः आवक्षति आनयेत् । ज्ञानयज्ञे चेन्द्रियदेवांस्तेषां विशेषेणोपकारिणः करोति । दीर्घादटि समानपाद इत्यतो देवानिति नकारस्य रुः । आ इत्युपसर्गस्य व्यवहिताश्चेति व्यवहितेन वक्षतीत्याख्यातेन सम्बन्धः । एवमुत्तरत्रापि ज्ञातव्यम् । वक्षतीति वहतेर्लेट् । वहतिनयत्योः प्रापणार्थत्वाल्लेटश्च लिङर्थे लेडिति लिङर्थत्वादानयेदित्युक्तम् ॥ २ ॥

### टिप्पणी

बहुलमिति । छन्दसि विषये भिस् ऐस् आदेशः बहुलं भवतीत्यर्थः । 'क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव' इति बहुलग्रहणस्यानेकप्रयोजनकथनात् पूर्वेभिरित्यत्र 'अतो भिस ऐस' इति न प्रवर्तते इत्यर्थः । भाष्ये एष्यद्भिरिति वाक्ये कथमैष्यैरित्युक्तमित्यत आह लटः[१] इति । तौ सदित्युक्तसच्छब्दितौ शतृशानचौ लृटः विकल्पेन भवत इत्यर्थः । तत्र लृटः[१] इति पृथक्कृत्य लृटः सः दति[२] अकारादेशोऽपि व्याख्यायत इत्यर्थः । तथा च 'इण गतौ' इत्यस्माद्धातोर्लृटि तस्याकारादेशे स्यप्रत्यये अतो गुण इति पररूपत्वे धातोर्गुणे [३]षत्वे [४]चेष्यशब्दस्याकारान्तत्वेन तिसये [५]आदेशे एष्यैरिति रूपमिति भावः ।

---

१. लृट् इति - क, २. लृट आ इति - क, ३. सस्य ष्टुत्वे - क, ४. च शब्दो नास्ति, ५. भिस् टोसादेशे.

ननु पदकाले देवानिति नकारश्रवणात् संहितायां तदश्रवणं कथमित्यत आह **दीर्घादटीति** । दीर्घात् परस्य नकारस्यात् अणि परे समानपदे अट् नकारयोरेकपादस्थत्वे सतीत्यर्थः । रुत्वे सति अनुनासिक इति पूर्ववर्णस्यानुनासिकत्वे भो भगो इत्यादिना रोर्यत्वे तस्य लोपः शाकल्यस्य इति लोपे पूर्वत्रासिद्धमिति लोपस्यासिद्धत्वे ओमासश्च इति पररूपत्वाभावे देवां हेति निर्देशः इति भावः । अत्रोत्तरत्र य ऋक्षु उपयुक्तशब्दप्रक्रियाविशेषस्तु ऋगर्थमर्यामुपपादनतो द्रष्टव्यः । **व्यवहिताश्चेतीति** । व्यवहिताश्च गत्युपसर्गसंज्ञकाः छन्दसि विषये दृश्यन्त इति वृत्त्यादावुक्तत्वेन' ते प्राग्धातोः' इति नियमो नास्ति छन्दोविषये इति भावः ॥ २ ॥

**मंत्रः – ३**

(अ.१, सू.१, मं.३)

**अ॒ग्निना॑ऽर॒यिम॑श्नव॒त्पोष॑मे॒व दि॒वेदि॑वे ।**
**य॒शस॑ं वी॒रव॑त्तमम् ॥**

**पदपाठः**

अ॒ग्निना॑ । र॒यिम् । अ॒श्न॒व॒त् । पोष॑म् । ए॒व ।
दि॒वेऽदि॑वे ॥ य॒शस॑म् । वी॒रव॑त्ऽतमम् ॥

**भाष्यम्**

**तेनैव रयिमाप्रोति वित्तं विद्याधनात्मकम् ।**
**दिवसे दिवसे नित्यं पुष्टिमेव न हीनताम् ।**
**यशश्च पुत्रसंयुक्तं वीर्यवत्तममेव वा ॥ ३ ॥**

## टीका

किं च स्तोता तेनैवाग्निना तत्प्रसादेन रयिं बाह्ये धनात्मकम् अध्यात्मं विद्यात्मकं वित्तमश्नवदाप्नोति । अनेन पोषमेवेत्येवशब्दस्य अग्निनेत्यनेनापि सम्बन्धः सूचितः । अश्नवदित्यश्नोतेर्व्याप्तिकर्मणो लडर्थे व्यत्ययो बहुलमिति पञ्चमो लकारः परस्मैपदं च । सिब्बहुलं लेटीति बहुलग्रहणात्सिबभावः । प्राप्तस्य तस्य वित्तस्य दिवे दिवे दिवसे दिवसे नित्यमिति यावत् । पोषमेव पुष्टिमेव प्राप्नोति । न पुनर्लोकवद्धीनता-मित्येवशब्दव्यावर्त्यकथनम् । किञ्च यशसं यशश्चाप्नोति । यशः-शब्दादमोऽलुक् पुँलिङ्गत्वं वा छान्दसम् । कथंभूतम् । वीरवत्तमं वीरः पुत्रः । सोऽस्मिन्नस्तीति वीरवत् अतिशयेन वीरवदिति वीरवत्तमं पुत्रेण सम्यग्युक्तम् । सामर्थ्यात्सम्यक्ता पुत्रविशेषणम् । इदं बाह्ये । अध्यात्मं वीरशब्दो भावप्रधानः । वीरवत्तमं यशो वीर्यवत्तमं ज्ञानं सुखं च । एवेति बाह्यपुत्रादिव्यावृत्तौ । वेति व्यवस्थितो विकल्पः ॥ ३ ॥

## टिप्पणी

किञ्चेति । [1]श्रुत्यताप्रयोजकमुच्यत इत्यर्थः । **अनेनेति** । तेनैवेत्येवकारसहितानुवादेनेत्यर्थः । **व्याप्तिकर्मण इति** । व्याप्तिः कर्म क्रिया वाच्यं यस्य तस्येत्यर्थः । **परस्मैपदं चेति** । अशू व्याप्तावित्यस्यानु-दात्तत्वेनात्मनेपदित्वादिति भावः । **यशश्चेति** । कीर्तिरित्यर्थः । **ज्ञानं सुखं चेति** । या प्राण[2] इति धातोः [3]शस्प्रत्ययान्ततया निष्पन्नस्य यशस्शब्दस्य ज्ञानवाचित्वं शशब्दस्य रिशादस इत्यादाविव सुखवाचित्वमिति भावः ।

---

१. स्तुत्यता, २. प्रापण - क, ३. कप्रत्ययान्ततया-क ।

केचित्तु यश इति समुदायस्यैवार्थद्वयपरत्वमिति वदन्ति । **व्यवस्थितो विकल्प इति** । बाह्ये पुत्रादियुक्तमेव यशः । अध्यात्मं तु वीर्यवत्तमवत् ज्ञानसुखरूपं यश इति व्यवस्थितो विकल्प इत्यर्थः ।

नन्वेवं शब्देनैवायमर्थो लभ्यत इति चेन्न, बाह्यपक्षे पुत्रसंयुक्तमेवेति ज्ञानादिव्यावर्तकैवकाराभावेन तद्व्यावृत्त्यर्थं वाशब्दस्यापेक्षितत्वादिति । न चैवमेवकारवैयर्थ्यमिति वाच्यम्, तत्सन्नियोगेनैव वाशब्दस्य व्यवस्थितविकल्पार्थत्वात् । अन्यथैकस्मिन् पक्ष एवान्यतरफलपर्यवसायित्वापत्तेरित्युभयोरपि सार्थक्यमिति भावः ॥ ३ ॥

**मंत्रः – ४**

(अ.१, सू.१, मं.४)

**अग्ने॒ यं य॒ज्ञम॑ध्व॒रं वि॒श्वतः॑ परि॒भूरसि॑ ।**
**स इद्दे॒वेषु॑ गच्छति ॥**

**पदपाठः**

अग्ने॑ । यम् । य॒ज्ञम् । अ॒ध्व॒रम् । वि॒श्वतः॑ ।
परि॒ऽभूः । असि॑ । सः । इत् । दे॒वेषु॑ । ग॒च्छ॒ति॒ ॥

**भाष्यम्**

**यं यज्ञं परितो भूत्वा रक्षसि त्वं सदैव च ।**
**विधिमार्गस्थितं देवान्स एवाप्नोत्यसंशयम् ॥ ४ ॥**

**टीका**

**एवं स्तुतेरुपपत्तिं तृचेनोक्त्वा स्तौति। हे अग्ने त्वं यमध्वरं यज्ञमिति पृथग्वचनादध्वनि रतम्। अमन्ताड्ड इति डः। विधिमार्गस्थितं विहितप्रकारेणानुष्ठितं यज्ञं बाह्यमान्तरं च। विश्वतो विश्वस्मिन् काले। सदैव परितो भवतीति परिभूः। असि भवसि। परितो भूत्वा रक्षसीति यावत्। ततोऽन्यत्रापि दृश्यत इति परियोगे द्वितीया। स इत् स एव यज्ञो देवेषु गच्छति देवानाप्नोति। असंशयमित्येवशब्दतात्पर्यम्। परमेश्वररक्षितमेव यज्ञं देवाः स्वीकुर्वन्ति। तादृशस्यैव ज्ञानस्य देवादिकं विषयो भवतीति ॥ ४ ॥**

**टिप्पणी**

तृचेनेति। तिस्रः ऋचः यस्मिन् समुदाये स तृचस्तेनेत्यर्थः। षष्ठस्य प्रथमपादे न सम्प्रसारणे सम्प्रसारणम् इति सूत्रे [1]ऋचि त्रेरुत्तरपदादिलोपश्च छन्दसि इति वार्तिके वृत्तिकारेण छन्दसि विषये ऋचिपरतः त्रेः सम्प्रसारणं भवति। उत्तरपदादिलोपश्च भवति। तिस्रः ऋचः अस्मिन् तृचं सूक्तं तृचं साम 'ऋक्पूरब्धूपथामानक्षे' इति समासान्त[2] इत्युक्तेः। त्रिशब्दरेफस्य ऋकाररूपसम्प्रसारणे सम्प्रसारणाच्च इतीकारस्य पूर्वरूपत्वे उत्तरपदे ऋकारलोपे समासान्ताप्प्रत्यये तृच् इत्यकारान्तत्वसिद्धेरिति ज्ञेयम्। एवमुत्तरत्रापि तृचशब्दनिर्वाहो द्रष्टव्यः। तत इति। कर्मणि द्वितीया इति सूत्रे वृत्तिकारेण उभसर्वतसोः कार्या [3]दिगुपर्यादिषु त्रिषु। द्वितीयाम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते। इत्यत्र अन्यत्रापीत्यस्य अभितः परितः समया हा प्रतियोगेष्वपि दृश्यत इत्युक्तेरिति भावः ॥ ४ ॥

---

१. ऋचि इति नास्ति कपुस्तके। २. समासान्ताप्रत्ययः - क।
३. धिगुपर्यादिषु - क।

मंत्रः – ५
(अ.१, सू.१, मं.५)

अग्निर्होता कविक्रतुः सत्यश्चित्रश्रवस्तमः ।
देवो देवेभिरा गमत् ॥

पदपाठः

अग्निः । होता । कविऽक्रतुः । सत्यः ।
चित्रश्रवःऽतमः । देवः । देवेभिः । आ । गमत् ॥

भाष्यम्

**सोऽखिलग्रहणप्रज्ञः सद्गुणैः सन्ततोऽखिलम् ।**
**यमयत्यग्र्यकीर्तीनाम् उत्तमो विबुधैः सह ।**
**आगन्ताऽखिलभक्तानां पूजास्वीकारतत्परः ॥ ५ ॥**

टीका

सोऽग्निः । होता पूर्ववत् । कवित्वेऽखिलग्रहणे सर्वज्ञानाय क्रतुः प्रज्ञा यस्यासौ कविक्रतुः । सद्भिर्गुणैस्ततः सन्ततो खिलं विश्वं यमयति चेति सत्यः । सद्भावे साधुभावे चेति वचनात्सच्छब्दो गुणवाची । सदुपपदात्तनोतेः क्विप्प्रत्ययो डिच्च । यमेश्च डः । सच्चासौ यश्चेति सत्यः । यमयतीति स्वार्थे णिच् । चित्रमद्भुतं श्रवः कीर्तिर्यस्यासौ चित्रश्रवाः अतिशयेन चित्रश्रवाश्चित्रश्रवस्तमः । अग्र्यकीर्तीनां पुरुषाणां मध्ये उत्तम इति यावत् । देवः पूर्ववत् । एवंभूतो भगवान् देवेभिर्विबुधैर्यज्ञभुग्भिरिन्द्रियाभिमानिभिश्च देवैः सह यज्ञस्थानं भक्तशरीरं च

### टीका

**एवं स्तुतेरुपपत्तिं तृचेनोक्त्वा स्तौति। हे अग्ने त्वं यमध्वरं यज्ञमिति पृथग्वचनादध्वनि रतम्। अमन्ताड्ड इति डः। विधिमार्गस्थितं विहितप्रकारेणानुष्ठितं यज्ञं बाह्यमान्तरं च। विश्वतो विश्वस्मिन् काले। सदैव परितो भवतीति परिभूः। असि भवसि। परितो भूत्वा रक्षसीति यावत्। ततोऽन्यत्रापि दृश्यत इति परियोगे द्वितीया। स इत् स एव यज्ञो देवेषु गच्छति देवानाप्नोति। असंशयमित्येवशब्दतात्पर्यम्। परमेश्वररक्षितमेव यज्ञं देवाः स्वीकुर्वन्ति। तादृशास्यैव ज्ञानस्य देवादिकं विषयो भवतीति ॥ ४ ॥**

### टिप्पणी

तृचेनेति। तिस्रः ऋचः यस्मिन् समुदाये स तृचस्तेनेत्यर्थः। षष्ठस्य प्रथमपादे न सम्प्रसारणे सम्प्रसारणम् इति सूत्रे [1]ऋचि त्रेरुत्तरपदादिलोपश्च छन्दसि इति वार्तिके वृत्तिकारेण छन्दसि विषये ऋचिपरतः त्रेः सम्प्रसारणं भवति। उत्तरपदादिलोपश्च भवति। तिस्रः ऋचः अस्मिन् तृचं सूक्तं तृचं साम 'ऋक्पूरब्धूपथामानक्षे' इति समासान्त[2] इत्युक्तेः। त्रिशब्दरेफस्य ऋकाररूपसम्प्रसारणे सम्प्रसारणाच्च इतीकारस्य पूर्वरूपत्वे उत्तरपदे ऋकारलोपे समासान्ताप्प्रत्यये तृच् इत्यकारान्तत्वसिद्धेरिति ज्ञेयम्। एवमुत्तरत्रापि तृचशब्दनिर्वाहो द्रष्टव्यः। तत इति। कर्मणि द्वितीया इति सूत्रे वृत्तिकारेण उभसर्वतसोः कार्या [3]दिगुपर्यादिषु त्रिषु। द्वितीयाम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते। इत्यत्र अन्यत्रापीत्यस्य अभितः परितः समया हा प्रतियोगेष्वपि दृश्यत इत्युक्तेरिति भावः ॥ ४ ॥

---

१. ऋचि इति नास्ति कपुस्तके। २. समासान्ताप्रत्ययः - क।
३. धिगुपर्यादिषु - क।

मंत्रः – ५

(अ.१, सू.१, मं.५)

अग्निर्होता कविक्रतुः सत्यश्चित्रश्रवस्तमः ।
देवो देवेभिरा गमत् ॥

पदपाठः

अग्निः । होता । कविऽक्रतुः । सत्यः ।
चित्रश्रवःऽतमः । देवः । देवेभिः । आ । गमत् ॥

भाष्यम्

**सोऽखिलग्रहणप्रज्ञः सद्गुणैः सन्ततोऽखिलम् ।**
**यमयत्यग्र्यकीर्तीनाम् उत्तमो विबुधैः सह ।**
**आगन्ताऽखिलभक्तानां पूजास्वीकारतत्परः ॥ ५ ॥**

टीका

सोऽग्निः । होता पूर्ववत् । कवित्वेऽखिलग्रहणे सर्वज्ञानाय क्रतुः प्रज्ञा यस्यासौ कविक्रतुः । सद्भिर्गुणैस्ततः सन्ततो खिलं विश्वं यमयति चेति सत्यः । सद्भावे साधुभावे चेति वचनात्सच्छब्दो गुणवाची । सदुपपदात्तनोतेः क्विप्प्रत्ययो डिच्च । यमेश्च डः । सच्चासौ यश्चेति सत्यः । यमयतीति स्वार्थे णिच् । चित्रमद्भुतं श्रवः कीर्तिर्यस्यासौ चित्रश्रवाः अतिशयेन चित्रश्रवाश्चित्रश्रवस्तमः । अग्र्यकीर्तीनां पुरुषाणां मध्ये उत्तम इति यावत् । देवः पूर्ववत् । एवंभूतो भगवान् देवेभिर्विबुधैर्यज्ञभुग्भिरिन्द्रियाभिमानिभिश्च देवैः सह यज्ञस्थानं भक्तशरीरं च

**प्रत्यागमत् । सार्वकालिको लुङ् लोड् वा । आगन्ता भवति । तत्र विशेषतः सन्निहितो भवति । अखिलभक्तानां बाह्याध्यात्मिकपूजा-स्वीकारतत्परः सन्निति शेषः । आगमनं न हविराद्याशया किन्तु भक्तप्रियतयेति भावः ॥ ५ ॥**

### टिप्पणी

**पूर्ववदिति** । अग्निहोतृशब्दयोर्व्याख्यानं पूर्वोक्तप्रकारेणेत्यर्थः । **स उप-पदादिति** । तथा च [१]सत्येत्यत्र सत् य इति विभागो द्रष्टव्यः ।

अखिलं यच्छतीति प्रयोक्तव्ये यमयतीति प्रयोजककर्तृत्वेन कथं निर्देशः तथात्वे भगवदन्यस्यैव साक्षान्नियमनकर्तृत्वप्रसङ्गादित्यत आह **स्वार्थे णिजिति** । अखिलेत्यादिकथनस्य तात्पर्यमाह **आगमनमिति** ॥ ५ ॥

### मंत्रः — ६

(अ.१, सू.१, मं.६)

**यदङ्ग दाशुषे त्वमग्ने भद्रं करिष्यसि ।**
**तवेत्तत्सत्यमङ्गिरः ॥**

### पदपाठः

**यत् । अङ्ग । दाशुषे । त्वम् । अग्ने । भद्रम् ।**
**करिष्यसि ॥ तव । इत् । तत् । सत्यम् । अङ्गिरः ॥**

---

१. सत्येत्यत्र सत् त् य इति पदच्छेदः - क ।

## भाष्यम्

**यजमानाय यद्भद्रं कर्तुमिच्छसि सत्प्रिय ।**
**त्वच्चेष्टयैव कर्माणि वर्तयित्वा तदीहनम् ।**
**तवैव सत्यमङ्गानां रसयद्वह्निगो हरिः ।**
**अङ्गिरा अङ्गिरःपुत्रो यतोऽग्निरभवत्कचित् ॥ ६ ॥**

## टीका

प्रियसम्बोधनेऽङ्गशब्दः योग्यतया सत्सम्बन्धः । अङ्ग सत्प्रियः । अङ्गिरः अङ्गानां रस । सर्वशरीराणां प्रेरक । पूर्वपदस्येकार उत्तरपदलोपश्च च्छान्दसः । तथा च श्रुतिः । 'एतमु एवाङ्गिरसं मन्यन्तेऽङ्गानां यद्रसस्तेनेति' । अग्ने त्वं दाशुषे यजमानाय । दाशृ दाने । 'दाश्वान् साह्वान् मीढ्वांश्चे'ति निपातनात् । भद्रं करिष्यसीति यत् सनर्थे लृट् । भविष्यद्विषयत्वसाम्यात् । कर्तुमिच्छसीति यत् तदिच्छारूपमीहनं तवेत् तवैव । सत्यमवितथम् । अस्मा इदं दास्यामीतीच्छसि चेददास्येव । यत्करिष्यसि तत्सत्यमिति यथास्थितयोजनायां स्तुतिर्न स्यात् । यजमानः पूजयति स्वयं फलं ददातीत्येवं विनिमयमात्रं न भवतीति भावेनोक्तं त्वच्चेष्टयेति । वर्तयित्वा यजमानेनेति शेषः । पूजादिकर्मणां प्रवर्तकोऽपि त्वमेवेति । अनेनाङ्गिरःशब्दप्रयोगस्य प्रयोजनमुक्तं भवति । अङ्गानां रसेत्यध्यात्मं व्याख्यानम् । बहिर्विष्णौ योजयति यदिति । यद्यस्माद्धरिर्वह्निगस्तस्मादङ्गिराः । वह्निगत्वेऽपि कथमङ्गिरा इत्यत आह अङ्गिरः पुत्र इति । यतः कारणात् क्वचित्कालेऽग्निरङ्गिरसःपुत्रोऽङ्गिराः पुत्रोऽस्य वाऽभवत्तेनाङ्गिराः । कार्यकारणशब्दानां साङ्कर्यदर्शनात् । तद्वतोऽपि तदधीनत्वादर्थवदित्यङ्गिरा इति । अनेनाग्नावपि व्याख्यातम् ॥ ६ ॥

**टिप्पणी**

योग्यतयेति । भगवतः सज्जनप्रियत्वादिति भावः । **उत्तरपदलोप इति** । अत्यकारलोप[१] इत्यर्थः । **सनर्थ इति** । धातोः कर्मणः समान-कर्तृकादिच्छायां वा इति इच्छार्थे सन्प्रत्ययविधानेनात्रेच्छार्थो लट् छान्दस इति भावः । **यथास्थितेति** । सनर्थत्वाङ्गीकारेणेत्यर्थः । **न स्तुतिरिति** । सनर्थत्वपक्षे 'इच्छामात्रं प्रभोः सृष्टिः'[२] इतीच्छामात्रेण सर्वाभीष्टदातृत्व-रूपस्तुतिर्लभ्यत इति भावः[३] । **अनेनेति** । त्वयेष्टयेत्यादि कथनेनेत्यर्थः । **प्रयोजनमिति** । विनिमयमात्राभावरूपार्थप्रतिपादनतात्पर्यकत्वरूपप्रयोजन-मित्यर्थः । **साङ्कर्येति** । गोभिः श्रीणीत[४] मत्सरम् इत्यादौ दर्शनादित्यर्थः । गोभिः गोजन्यपयोभिः मत्सरं मदकारित्वहेतुना मत्सरशब्दवाच्यं सोमरसं श्रीणीत[५] सम्बध्नीतेत्यर्थः । तत्र यया गोजन्यपयसि गोशब्दप्रयोगः तद्व-त्प्रकृतेऽपि पितृजन्ययुक्ते पितृवाचकशब्दप्रयोगः ।

यत्र वा पितुस्तद्वा पुत्रस्येति श्रुतेश्चेति भावः । **तद्गतोऽपीति** । अग्निगतोऽपीत्यर्थः । **तदधीनत्वादिति** । अग्नेरङ्गिरस्शब्दवाच्यत्वे प्रवृत्ति-निमित्तस्याङ्गिरःपुत्रत्वस्य तदधीनत्वादग्निगतहर्यधीनत्वात् हरौ अङ्गिरः-शब्दवाच्यत्वं युक्तमित्यर्थः । राजा जयीत्यादौ भृत्यगतजयस्य राजा-धीनत्वेन राज्ञि जयशब्दप्रयोगस्य दर्शनात् तद्वत् प्रकृतेऽपीति भावः । यद्यपि तस्मिन् सूत्रे अवरत्वापेक्षकावधित्वादिवाचिपञ्चम्यादिशब्दजातं परब्रह्मण्यर्थवत् न व्यर्थं कुतः ? अवरत्वदुःखित्वादि तन्निमित्तधर्माणां तस्य विन्यस्तपदेन प्रकृतस्य ब्रह्मणोऽधीनत्वादित्यर्थ इत्यानुमानिकमिति

---

१. सकारस्य लोपः, २. माण्डूकोपनिषत् - प्रथमखण्ड,
३. लभ्यत इत्यर्थः - क, ४. गोभिस्सृणीत - क, ५. शृणीत - क ।

पूर्वसूत्रसङ्गतेन भाष्यादौ योजितम्, तथाप्युपनिषद्भाष्यादौ सार्वत्रिक-न्यायपरत्वेनापि योजितत्वात् तत्र तत्र यथायोगमर्थो ज्ञेय इति भावः । अनेनेति । अङ्गिरश्शब्दस्य हरौ प्रवृत्तिप्रतिपादनपरेण 'अङ्गिरामङ्गिरःपुत्र' इति भाष्येणैव अङ्गिरपुत्रत्वादग्नेङ्गिरश्शब्दवाच्यत्वमिति व्याख्यातमित्यर्थः । ॥ ६ ॥

**मंत्रः – ७**

(अ.१, सू.१, मं.७)

**उप॑ त्वाग्ने दि॒वेदि॑वे दोषा॑वस्तर्धि॒या व॒यम् ।**
**नमो॒ भर॑न्त॒ एम॑सि ॥**

**पदपाठः**

उप॑ । त्वा॒ । अ॒ग्ने॒ । दि॒वेऽदि॑वे । दोषा॑ऽवस्तः । धि॒या । व॒यम् । नम॑ः । भर॑न्तः । आ । इ॒म॒सि॒ ॥

**भाष्यम्**

**वस्तर्दिनमहोरात्रमभीष्टं प्राणिनां सदा ।**
**अल्पा अपि वयं बुद्ध्या त्वामुच्चगुणमीश्वरम् ।**
**उपयाम मनःकर्मवाग्भिस्त्वन्नमसम्भराः ॥ ७ ॥**

**टीका**

अत्र वस्तरिति पदं तावदनूद्य व्याचष्टे वस्तर्दिनमिति । अहरि-त्यर्थः । हे अग्ने धिया बुद्ध्या । बुद्ध्यादिभिर्गुणैः । अल्पा अपीति शेषः । वयं दिवे दिवे दिवसे दिवसे । तत्रापि दोषा वस्तरहोरात्रम् ।

**सदेति यावत् । नमो भरन्तः अध्यात्मं मनसा बहिः कर्मवाग्भ्यां त्वन्नमसम्भराः । तव नमनं सम्बिभ्राणाः सन्तः । नमनं नमः सम्बिभ्रतीति सम्भराः । उच्चगुणमीश्वरमपि त्वा त्वामुपेमसि उपयाम । इदन्तोमसीति इत् । शरणं व्रजेम । बुद्ध्येति पदसामर्थ्यादल्पा अपीति शेषे वक्तव्ये स्तुतित्वसिद्ध्यर्थमीश्वरं त्वामुच्चगुणमपीत्यपि शेषो वक्तव्यो भवति । धियोपेमसीत्यपि सम्भवे गुणाधिक्यलाभाय शेषोक्तिः । महागुणस्य शरणप्राप्तौ साधनहीनश्चेत्कथं शरणं याया इत्यतः प्रागुक्तमङ्गेत्येतदत्राप्याकृष्य व्याख्यातं प्राणिनामभीष्टेति । केवलं भक्त्यतिशयवशाच्छरणमुपयामेति ॥ ७ ॥**

### टिप्पणी

उपत्वा **नमनं नमः** इति ऋचि सुन्[१] प्रत्ययान्ततया नमुधातोर्निर्देशः । भाष्ये कप्प्रत्ययान्ततयेति ज्ञेयम् । **सम्भरा इति** । डुभृञ् धारणपोषणयोरिति धातोः कर्तरि पचाद्यचि रूपमिति भावः । ऋचि बिभ्रत इति श्लुविकरणतया निर्देशो कर्तव्ये भरन्त इति शत्रन्तस्य शपा निर्देशस्तु विकरणव्यत्ययेन वा भृञ् भरण इति ऋकारान्तस्य भौवादिकस्य वा रूपमिति ज्ञेयम् । सनीवन्तर्धीति सूत्रे भर इति रूपसिद्ध्यर्थं ऋकारान्तोऽपि भृञ् भरण इति शब्विकरणो धातुरस्तीति मञ्जर्यादावुक्तेरिति ।

ननु आङ्पूर्वादिण्गतावित्यस्माद्धातोः मस् इत्युत्तमपुरुषबहुवचने सार्वधातुकमपित् इति तस्य ङित्वे क्ङिति चेति सूत्रेण सार्वधातुकार्धकयोः इति प्राप्तगुणनिषेधे आद्गुण इत्याङा सह गुणे सकारस्य रुत्वे विसर्गे च टाम इति ऋचि निर्देशः स्यात्, कथमेममसीति[२] निर्देश इत्यत आह

---

१. ऋच्यमुन् - क ।　　२. एमसीति – पा० ।

**इदन्त इति** । इदन्तो मसीति सूत्रस्य अयमर्थः । मसीत्यविभक्तिको निर्देशः । इकार उच्चारणार्थः । अन्तःशब्दोऽवयववचनः । इत् अन्तो यस्य स इदन्तः मस् इत्ययं शब्द इदन्तो भवति । छन्दोविषय इति तथैव मञ्चर्यादावुक्तेः । तथा च उपशब्दस्य 'व्यवहिताश्च' इति येमसीत्यनेनान्वये ओमाङोश्च इति पररूपत्वे उपेमसीति रूपसिद्धिरिति भावः । **शरणमिति** । अत्र व्रजेमेति तिङन्तपदकथनेन ऋचि उपेमसीति लट् लिङर्थे वर्तते, व्यत्ययो बहुलमित्युक्तत्वादिति भावः । अत एव भाष्ये उपयाम इति लिङर्थकलोडन्तपदं प्रयुक्तम् । तदनुसारेण टीकायामपि तदेव पदमनूदितमिति ज्ञेयम् । भाष्ये प्रयुक्तस्य 'उपयाम' इति लोडुत्तमपुरुषबहुवचनरूपस्य या प्रापण इति धातुनिष्पन्नत्वेन उपेमसीत्यस्य अर्थानुवादोऽयम्, न तु इण् गताविति धातुनिष्पन्नस्य । तथात्वे उपायामेति[१] निर्देशः स्यादिति ज्ञेयम् । भाष्ये क्वचिदुपायामेत्यपि[२] पाठो दृश्यते ॥ ७ ॥

**मंत्रः – ८**

(अ.१, सू.१, मं.५)

**राजन्तमध्वराणां गोपामृतस्य दीदिविम् ।**
**वर्धमानं स्वे दमे ॥**

**पदपाठः**

**राजन्तम् । अध्वराणाम् । गोपाम् । ऋतस्य ।**
**दीदिविम् । वर्धमानम् । स्वे । दमे ॥**

---

१. उपयेमेति - क । २. उपयेमेत्यपि – पा० ।

### भाष्यम्

**देदीप्यमानं स्वे सद्मन्यध्वरेशं सदा वृधम् ।**
**यथार्थज्ञानगोपं त्वामुपेमसि ॥ ८ ॥**

### टीका

**अध्वराणां यज्ञानाम् । राजन्तं राजानम् । राजतेरौणादिको झः झोऽन्तः । बाह्याध्यात्मिकाध्वरेशाम् । ऋतस्य गोपां यथार्थज्ञानगोपम् । यथार्थज्ञानस्य गोप्तारम् । ऋचि गुपेराकारः । भाष्ये पचाद्यच् । स्वेदमे स्वे सद्मनि स्वर्गादौ हृदये च । दीदिविं देदीप्यमानम् । दीव्यतेर्यङ्लुगन्तादिकारप्रत्ययोऽभ्यासस्य चेकारः । वर्धमानं सार्वकालिकः शानच् । ताच्छील्यार्थश्चानश् वा । सदावृधं सदापूर्णम् । इगुपधलक्षणः कः क्विप् वा । त्वामुपेमसीति पूर्वेण सम्बन्धः ॥ ८ ॥**

### टिप्पणी

औणादिक इति । तस्य झोऽन्त इत्यन्तादेशे द्वितीयैकवचने राजन्तमिति रूपमिति भावः । न च वाच्यं राजतेरुभयपदित्वेन शत्रन्तद्वितीयैकवचनेऽप्येवं रूपसिद्धिरिति, तथात्वे न लोकाव्ययनिष्ठेति लादेशयोगे षष्ठ्या निषिद्धत्वेन अध्वराणामिति षष्ठ्यनुपपत्तिप्रसङ्गादिति ।

ननु कर्तृकर्मणोः कृतीति प्राप्तषष्ठ्या एव न लोकाव्ययेति निषेधः, न [१]चाध्वराणामिति कर्मणि कर्तरि वा षष्ठीति चेन्न; भाष्येऽध्वरेशमित्युक्त्या धातूनामनेकार्थत्वाद्वा वेदनिघण्टौ इरज्यते पच्यते क्षीयति राजत इति चत्वार ऐश्वर्यार्था इत्युक्त्या वा राजतेरैश्वर्यार्थत्वेन ऐश्वर्यस्याकाशाधिकरणसुधोक्त-

---

१. चात्राध्वरणामिति - क ।

रीत्या[1] पालनरूपत्वेन कर्माकाङ्क्षायां अध्वरशब्दस्य कर्मार्थकतया तत्रत्यषष्ठी कर्मण्येवेति न लोकेति[2] भवत्येवेति शत्रन्ततया न व्याख्यानं कृतमिति ।

यद्वा शत्रन्तत्वेऽपि शेषत्वविवक्षया वा न लोकेति निषेधस्य नञा निर्दिष्टमनित्यमित्यनित्यत्वाद्वा षष्ठी भवत्येव । परकीयवेदभाष्येऽपि अत्र द्वितीयाध्यायेऽपि सम्राजन्तमध्वराणामित्यत्र च तथैव व्याख्यातम् । तथापि [3]शत्रुर्वर्तमानत्वार्थकलडादेशत्वेन वर्तमानकालीनेशत्वमात्रप्रसक्तेः सार्वकालिकेशत्वलाभायैव पौनःपुन्यार्थक यङ्लुगन्तदीदिविपदव्याख्यानानन्तरं सार्वकालिकाद्यर्थकशानजाद्यन्तवर्धमानपदव्याख्यात् पूर्वं मध्येऽध्वरेशमिति व्याख्यानमिति ज्ञेयम् । अन्यथा स्वस्थान एव व्याख्यानं क्रियेतेति ।

**सार्वकालिक इति** । व्यत्ययो बहुलमित्युक्तेरिति भावः । **इगुपधलक्षण इति** । 'इगुपधज्ञाप्रीकिरः कः' इति सूत्रेण वृधधातोरिगुपधत्वेन कप्रत्यये लशक्वतद्धित इति ककारलोपे पुगन्तलघूपधस्य च इति प्राप्तगुणस्य क्ङिति च इति निषेधे वृध इत्यकारान्तत्वे द्वितीयैकवचने वृधमिति भाष्ये निर्देश इति भावः । **क्विब् वेति** । अस्मिन् पक्षे वृधमिति धकारान्तप्रातिपदिकात् द्वितीयैकवचनमिति ज्ञेयम् । क्विपः सर्वापहारिलोपत्वात् ॥ ८ ॥

**मंत्रः – ९**

(अ.१, सू.१, मं.९)

**स नः॑ पि॒तेव॑ सू॒नवेऽग्ने॑ सूपाय॒नो भ॑व ।**
**सच॑स्वा नः स्व॒स्तये॑ ॥**

---

१. ऐश्वर्यं हि वर्षणशासनपालनादिरूपा चेतनसम्बन्धिनी चेष्टा –न्यायसुधा)

२. षष्ठीनिषेधो - क ।

३. शतृर्वर्तमानमात्रार्थकलडादेशत्वेन - क)

पदपाठः

सः । नः । पिताऽइंव । सूनवें । अग्ने ।
सुऽउपायनः । भव ॥ सचस्व । नः । स्वस्तये ॥

भाष्यम्

पितेव नः ।
सूपाश्रयो भव त्वं च यद्वदौरससूनवे ।
रक्ष सन्ततसौख्याय सम्यक्सत्त्वाय वा सदा ॥ ९ ॥

टीका

हे अग्ने स एवमस्माभिः शरणं प्राप्तस्त्वं च त्वं तु नोऽस्माकं पितेव पुत्राणां सूपायनः अधिकरणे ल्युट् । सूपाश्रयः । शोभनोपाश्रयो भव । पितेवेत्यनेनैव (सूनव इति) लब्धेऽपि पुनः सूनव इत्युक्तस्य तात्पर्यमाह यद्वदिति । न केवलं पितेव पुत्रमात्राणां किन्तु पितौरस-सूनवे । छन्दसि षष्ठ्यर्थे चतुर्थी वक्तव्या । औरससूनोर्यद्वत्तथेति । अत एव भिन्नवाक्यतासूचनायेवेत्युक्त्वा पुनर्यद्वदित्युक्तम् । किं च त्वं नोऽस्मान्स्वस्तये सन्ततसौख्याय सदा सम्यक् सत्त्वाय वा सचस्व रक्ष । यथा रक्षणेन सन्ततसौख्यादिकं भवति तथा रक्षेति । स्वस्तय इति सुपूर्वकं सत्तावाचिविभक्तिप्रतिरूपकमव्ययम् । सत्तावाचिनां सौख्यवाचित्वमपि 'सद्भाववाचिनः शब्दाः सर्वे ते सुखवाचका' इति प्रमाणसिद्धम् । तस्मादुभयथा व्याख्यातम् । अनेकार्थत्वाद्धातूनां सचतिरिह रक्षायां वर्तते । सेवाया अयोगात् ॥ ९ ॥

## टिप्पणी

**अधिकरणे ल्युडिति** । न च ल्युडन्तस्य नपुंसकलिङ्गत्वेन पुंलिङ्गत्वानुपपत्तिरिति वाच्यम्; ल्युटः टित्करणसामर्थ्येनायनशब्दोऽधिकरणे त्रिलिङ्ग इति पुंलिङ्गत्वं चेति चन्द्रिकोक्तदिशा समाधानं द्रष्टव्यम् । विस्तृतं च चन्द्रिकाप्रकाशे । अत एवेत्यस्य विवरणं **भिन्नेति** । पितेव पुत्राणामित्येकं वाक्यम्[१] । एवंविधवाक्यभेदसूचनाय पितेवेत्युक्त्वा पुनः यद्वदित्युक्तमित्यर्थः । अन्यथा यद्वदौरसपदयोर्वैयर्थ्यापत्तेरिति भावः । **सम्यक्सत्त्वायेति** । सम्यगस्थायेत्यर्थः[२] **स च तिरिति** । षच सेवायामिति धातुरित्यर्थः । धात्वादेः षः स इति सकारविशिष्टस्यानुवादः कृतः । ॥ ९ ॥

## भाष्यम्

**मुनिस्तु सर्वविद्यानां भगवान् पुरुषोत्तमः ।**
**विशेषतश्च वेदानां यो ब्रह्माणमिति श्रुतिः ॥**

**ऋग्वेदादिकमस्यैव श्वसितं प्राह चापरा ।**
**वाचो बभूवुरुशतीर्हयग्रीवादिति स्फुटम् ॥**

**वचो भागवतेऽप्यस्ति ब्रह्माण्डेऽपि तथा परम् ।**
**'हयग्रीवादिमा विद्याः श्वसितत्वेन निःसृताः ॥**

**ब्रह्मणा स्वीकृतास्ताश्च रुद्रशेषविपा अपि ।**
**दक्षाद्याः सनकाद्याश्च शक्राद्या मनवस्तथा ॥**

---

१. सूनवे यद्वत् पितेत्यपरं वाक्यम् - क ।      २. सम्यगवस्थानायेत्यर्थः ।

जगृहुस्ते च विश्वस्मिंश्चक्रुर्व्याप्तास्ततोऽखिलाः ।'
उक्तं पद्मपुराणे च 'कपिलो भगवानजः ॥

प्रोवाच ब्रह्मणे विद्याः' 'हृदिस्थो बादरायणः ।
ॐकारपूर्विका विद्याः प्रेरयत्यखिलेष्वपि ॥

सदैव ब्रह्मणे पूर्वमि'ति सात्त्वतसंहिता ।
सकृन्निगदमात्रेण गृहीतं ब्रह्मणाऽखिलम् ॥

अन्तर्गतस्य व्यासस्य प्रसादान्नित्यशक्तितः ।
तेन चानन्तशक्तित्वाद्युगपत्समुदीरितम् ॥

प्रथमप्रतिपत्तृत्वान्मुनिर्ब्रह्माऽखिलस्य च ।
सुपर्णोऽखिलवेदानां पञ्चरात्रस्य नागराट् ॥

द्वितीयप्रतिपत्तृत्वान्मुनित्वे सम्प्रकीर्तितौ ।
यः पश्यति स्वयं वाक्यं स ऋषिस्तस्य कीर्तितः ॥

अर्वाक्तु द्वादशावृत्तेरधीत्याप्यृषिरेव सः ।
यत्स्वयं प्रतिभातस्य संशयार्थं गुरोर्वचः ॥

सुपर्णादिर्विरिञ्चस्य केवलं धर्मकारणम् ।
ऋचामृषिस्ततः शक्रो यजुषां सूर्य एव च ॥

सोमः साम्नां तृतीयास्ते प्रतिपत्तार ईरिताः ।
अथर्वाङ्गिरसामग्निरेकर्षिश्चाप्यथर्वणाम् ॥

इत्युक्ताः समुदायस्य सन्त्यन्ये च पृथक्पृथक् ।
एतज्ज्ञानाददृष्टस्य फलस्याप्तिः स्फुटं भवेत् ॥

**द्रष्टॄणां तु चतुर्थानां ज्ञानादप्यैहिकं भवेत् ।**
**ते चैकस्यापि बहवः स्युः सूक्तस्यर्च एव वा ॥**
**तस्यां तस्यामवस्थायां तत्तत्प्राप्तिविशेषतः ।**
**तेषां वाक्यस्वरूपेण प्रार्थनादिषु पश्यति ॥**
**विष्णुर्ब्रह्मा सुपर्णो वा तत्तद्योग्यार्थभेदतः ।**
**सर्ववेदाभिमानित्वाच्छ्रीर्ब्रह्माणी च भारती ॥**
**द्रष्ट्र्यश्च सर्वविद्यानां व्याख्यातो ब्रह्मणा मरुत् ।**
**स्वभर्त्रनन्तरं द्रष्ट्र्यस्तेभ्यस्तन्नोदिता हिरुक् ।**
**ताः स्तुवन्ति हरिं नित्यं विद्याभिस्ते च सर्वशः ॥**

टीका

एवं व्याख्यातस्य सूक्तस्य व्याकरिष्यमाणानां च ज्ञानादिकमृष्यादिज्ञाने सत्येव सफलं नान्यथा । 'यो ह वा अविदितार्ष(र्षेयछं)-च्छन्दो दैवतब्राह्मणेन मन्त्रेण (यजति) याजयति वाध्यापयति स्थाणुं वर्च्छति गर्ते वापद्यत प्रवामीयते वा' इति श्रुतेः । तस्मादृषिच्छन्दो-दैवतादिकं ज्ञापयन् ऋषिं तावदाह **मुनिस्त्विति** । विशेषतश्च वेदानां भगवानृषिः । पौरुषेयवाक्यानामुत्पत्त्यनन्तरमेव दर्शनं वेदानां तु सर्वदेति विशेषः । कुत एतदित्यत आह **यो ब्रह्माणमिति** । 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मा' इति श्रुतिस्तावद् ब्रह्मणोऽपि भगवान् वेदादिकमुपदिदेशेति प्राह । तेन ज्ञायते स एव सर्वविद्यानामृषिरिति । न ह्येवंविधस्यान्योऽध्यापकः सम्भवति । श्रुतिः प्राहेति वक्ष्यमाणेनान्वयः । 'अस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः

सूत्राण्यनुव्याख्यानानि व्याख्यानान्यस्यैवैतानि निश्वसितानी'त्यपरा च श्रुतिः ऋग्वेदादिकमस्य विष्णोरेव निश्वसितं प्राह तेनापि तस्यर्षित्वं ज्ञायते । निश्वसितमिति हि निश्वसितमिवानायासेनादिकाले तेनोच्चरितमित्यर्थः । 'वाचो बभूवुरुशतीः श्वसतोऽस्य नस्त' इति भागवतेऽपि स्फुटमेतमर्थं प्रतिपादयद्वचोऽस्ति । उशतीरुशत्यः प्रकाशमानाः । ब्रह्माण्डेऽपि पुराणे । तथा एतदर्थस्याभिधायकं परं वचोऽस्ति । तत्पठति हयग्रीवादिति । रुद्रशेषविपा अपि ब्रह्मणो जगृहुः । तेभ्यः शक्राद्याः तेभ्यो दक्षाद्याः तेभ्यः सनकाद्याः मनवश्च । ते च विश्वस्मिंश्चक्रुः जगत्युपदिदिशुः । ततस्तेषामुपदेशादखिला जगति व्यासाश्च । हृदिस्थ इत्यादि सात्वतसंहितावाक्यम् । सदैवाखिलेषु प्रेरयति तत्रापि पूर्वं ब्रह्मणे ददाविति । यो ब्रह्माणमिति श्रुतौ वेदपदं सर्वविद्यापरमिति ज्ञापयितुं द्वितीयश्रुत्युदाहरणम् । उभयत्रापि विष्णोरप्रतीतेः पुराणाद्युदाहरणमिति । एवं परमेश्वरः सर्वविद्यानामृषिरित्युपपाद्य ब्रह्मापि तथेत्याह सकृदिति । यस्मात्तेन परमेश्वरेणानन्तशक्तित्वात् युगपत्समुदीरितमखिलं विद्याजातमादिकाले सकृन्निगदमात्रेण ब्रह्मणान्तर्गतस्य व्यासस्य प्रसादान्नित्यशक्तित इति तत्प्रसादायत्तनित्यशक्त्या गृहीतं तस्मादेवं सर्वविद्यानां प्रथमप्रतिपत्तृत्वाद् ब्रह्माप्यखिलस्य विद्याजातस्य मुनिर्भवति । एवं सर्वविद्यानामृषिमुक्त्वा तत्प्रभेदानामृष्यन्तरं चाह सुपर्ण इति । मुनिरिति सम्बन्धः । एतौ च द्वितीयप्रतिपत्तृत्वात् ब्रह्मणोऽनन्तरप्रतिपत्तृत्वान्मुनित्वे विषये द्वितीयौ सम्प्रकीर्तितौ ।

ननु परमेश्वरः स्वयमेव सर्वविद्यानां प्रतिपत्तेति मुनिर्भवतु अधीतविद्यास्तु ब्रह्मादयः कथमृषय इत्याशङ्कापरिहारार्थमृषित्वं तावदाह य इति । यथा यः स्वयमध्ययनेन विनैव यद्वाक्यं पश्यति स तस्य

वाक्यस्य ऋषिः प्रकीर्तितः एवं यो द्वादशावृत्तेरर्वागधीत्यापि प्रतिपद्यते सोऽप्यृषिरेव । तथा भूतो हि स्वयं प्रतिभातविद्यकल्प एव भवेत् । न ह्यन्य एतावन्मात्रेणाध्ययनेन सर्वविद्याः प्रतिपत्तुं शक्नोति । ब्रह्माद्यास्तु भगवत्प्रसादात्स्वयंप्रतिभाताखिलविद्याः सकृदधीतवन्त इति ऋषित्वं तेषामुपपन्नमिति भावः । यद्येवं ब्रह्मादीनां स्वयंप्रतिभातविद्यत्वादृषित्वं तर्हि तेषामध्ययनं किमर्थमित्यत आह **यत्स्वयमिति** ।

सुपणादिर्यत्स्वयंप्रतिभातस्य वेदादेर्गुरोर्वचोनिगदरूपं तदस्माभिर्दृष्टोऽयं वेदो वा यत्किञ्चिद्वेति संशयनिवृत्त्यर्थं (निरासेन) वेद एवायमिति निश्चयार्थं भवति । विरिञ्चस्य तु संशयाभावात्केवलं धर्मकारणं भवति । महतो हि धर्मस्य कारणं परमेश्वरादध्ययनम् । एवं पौरुषेयापौरुषेयभेदेन सर्वविद्यानामृषिभेदमुक्त्वा वेदेष्वेवावान्तरभेदेन तमाह **ऋचामिति** । ततः सुपर्णाद्यनन्तरमृगादीनामथर्वाद्यन्तानां शक्राद्या एकर्षिपर्यन्ता ऋषयः । कुतस्तेषामृषित्वे सुपर्णाद्यानन्तर्यम् । यतस्ते तृतीया प्रतिपत्तार ईरिताः । एवशब्दः ऋचामेवेत्यादिना सम्बध्यते । चस्त्वर्थः । अथर्वणामङ्गिरसाञ्च । द्विभागस्याप्यथर्ववेदस्येत्यर्थः । तद्वेदानामथर्वणां त्वेकर्षिरप्यृषिर्भवति । ततोऽर्वाक्तनानप्यृषीन् पूर्वोक्तानुवादेनाह **इत्युक्ता इति** । इत्येते प्रायेणाविभक्तविद्यासमुदायानामृषयस्त्रिविधा उक्ताः । **एतेभ्योऽन्ये चतुर्थाश्च** । पृथक् पृथक् एकैकस्मिन्नप्यृगादिसमुदायेऽवान्तरभेदानां शाखादीनामृषयः सन्ति । ते च शास्त्रान्तराज्ज्ञातव्या इत्यर्थः । एवं चतुर्विधानृषीनुक्त्वा तेषां स्मरणं विधातुं तस्य फलमाह **एतज्ज्ञानादिति** । एतदित्याद्यानां त्रिविधानां परामर्शः । दृष्टस्य किम्वित्यर्थः । चतुर्थानामपि प्रतिपत्तॄणां ज्ञानात्फलं भवेत् तत्त्वैहिकमिति योजना । ऋगाद्यवान्तरभेदानां

सूक्तादीनां चतुर्था ऋषयः सन्तीत्युक्तम् । तत्र चैकैकस्यापि सूक्तादेरेकैक एवेति नियमो नास्तीत्याह **ते चेति** । एतच्च सर्वेऽपि स्मर्तव्या इति ज्ञापनार्थमुक्तम् । बहव एवेति सम्बन्धः ।

ननु यदि विष्णवाद्याः सर्वविद्यानामृषयस्तर्हि तद्वाक्यता तासां स्यात् । तथा चोक्तं यस्य वाक्यं स ऋषिरिति । ततश्च 'त्रिष्वादित्यं द्रुपदेषु बद्धः अवैनं राजा वरुणः ससृज्यात् सनो हिरण्यरथमि'त्याद्ययुक्तं स्यात् । न हि विष्णवादीनां बन्धमोक्षप्रार्थनमिन्द्राद्रथप्राप्तिरित्यादिकं युज्यते । अत आह **तस्यामिति** । प्रार्थनादिषु वाक्येषु विवक्षितेषु सत्सु विष्णुस्तानि वाक्यानि तस्यां तस्यां बन्धाद्यवस्थायां तत्तद्रथादिफलप्राप्तिविशेषवत्तया तेषां शुनःशेपादीनां वाक्यतया पश्यति । यूपेऽहं बद्धोऽस्मि बद्धं मां वरुणो मोचयतु इन्द्रप्रसादादहं हिरण्यरथं प्राप्तोऽस्मीत्यादिकं शुनःशेपोऽतीतकल्पे प्रावोचत् वक्ष्यतीति वा विष्णुः पश्यति । न तु स्ववाक्यतयेत्यर्थः । एवं ब्रह्मा सुपर्णोऽन्ये वा मुनयः स्वायोग्यार्थस्य प्रतिपादकानि वाक्यानि येषामृष्यन्तराणां योग्यानि तद्वाक्यतया पश्यन्तीति न कश्चिद्विरोधः । एवमधमा अप्यृषय उत्तमर्षियोग्यार्थाभिधायिवाक्यानि तद्वाक्यतया पश्यन्तीत्यपि द्रष्टव्यम् । यथा 'अहं रुद्राय धनुरातनोमी'त्यादि । यथैकैकमपि वाक्यमनेकर्षिदृष्टं न तथा तदर्थोऽपि साधारण इत्याह **तत्तदिति** । यस्य यस्य ऋषेर्यो यो भगवन्महिमाद्यभिधायि वाक्यार्थो दर्शनयोग्यः तदर्थाभिधायितयैव तत्तद्वाक्यमसावसौ पश्यतीत्यर्थः । एवं पुरुषानृषीनुक्त्वा स्त्रिय आह **सर्वेति** । वेदशब्देन सर्वविद्या उच्यन्ते । न हि स्वाभिमतमपश्यन्त्यभिमानिनी भवति । भारती चेति सम्बन्धः । ननु वायुः कस्मादृषित्वेन नोक्त इत्यत आह **व्याख्यात इति** । ब्रह्मणा ऋषितया

**व्याख्यातेन निमित्तेन मरुदपि सर्वविद्यानामृषिर्व्याख्यात एव । तयोः समगुणत्वात् । एवं रुद्रादिष्वपि द्रष्टव्यम् । यदि लक्ष्म्यादीनामप्यखिलविद्यानां द्रष्टृत्वमस्ति कथं तर्हि विष्णवादीनामेवर्षित्वं शास्त्रेषु उच्यते । न तासामित्यत आह स्वेति । यस्मात्ताः स्वभर्त्रनन्तरं सर्वविद्यानां द्रष्ट्र्य इति भर्त्रुक्त्यैव सिद्ध्यति । यतः प्रायो भार्या भर्तृसमानधर्मिणी भवति तत्तस्मादृषित्वे विद्यमानेऽप्यर्थसिद्धत्वात् तेभ्यो भर्तृभ्यो हिरुक् पृथगृषित्वेन ता नोदिता इति । तासां तेषां चर्षित्वे व्यापारमाह ता इति ।**

## टिप्पणी

अविदितार्षेति । अत्रार्षशब्देन ऋषिसम्बन्ध उच्यते । ऋषिर्वा आद्येऽर्थे तस्येदमिति सम्बन्धार्थेऽण्प्रत्ययः । द्वितीयेऽर्थे प्रज्ञादिभ्यश्चेति स्वार्थेऽण्प्रत्यय इति ज्ञेयम् । पक्षद्वयेऽप्यण्प्रत्ययणकारस्य हलन्त्यमिति लोपे यस्येति चेति ऋषिशब्दान्तस्य इकारान्तस्य लोपे तद्धितेष्वचामादेः इत्यादिवृद्धौ रपरत्वे च आर्षेति रूपमिति ज्ञातव्यम् । छन्दःपदेन गायत्र्यादिछन्दसां ग्रहणम् । दैवतपक्षे[१] [२]नष्टमन्त्रप्रतिपाद्यदेवता ग्राह्या । यद्यपि ब्राह्मणशब्दः विनियोजकवाक्यपरः, तथापि प्रकृते ब्राह्मणपदेन विनियोजकवाक्यवाचिना मन्त्रप्रतिपाद्यार्थ उपलक्ष्यते । ईशावास्यभाष्यटीकायामेतच्छ्रुतिमुदाहृत्य तत्र ब्रह्मपदोपलक्षितार्थज्ञानं व्याख्यानादेव भविष्यतीत्युक्तत्वात् । एवं च ऋषिछन्दोदैवतादिकं ज्ञापयन्नित्युत्तरवाक्ये आदिपदं सङ्गतम् । अन्यथा आदिपदसङ्गृहीतस्य ब्राह्मणशब्दितविनियोजकवाक्यस्योत्तरज्ञापनाभावादसङ्गतं स्यात् । मन्त्रप्रतिपाद्यार्थलक्षणायां तु तस्योत्तरत्र ज्ञापनात् सङ्गतं

---

१. दैवतपदेन - क ।    २. मन्त्रप्रतिपाद्य - क ।

सम्भवति । अविदितान्यार्षछन्दोदैवतब्राह्मणानि यस्य मन्त्रस्य स तथोक्त-स्तेनेत्यर्थः ।

[१]केचित्तु आविदितार्षेति पाठमङ्गीकृत्य ऋषिशब्दात् सम्बन्धार्थे स्वार्थे वा तद्धिता इति बहुवचनज्ञापित छप्रत्यय इति वदन्ति ।

ननु नासिकया[२] निर्गतं हि निश्वसितमित्युच्यते । तत्कथमित्यत आह **निश्वसितमेवेति** । विभक्तिव्यत्ययो वा सुपां सुलुगित्यादिना जसः पूर्व-सवर्णदीर्घो वेत्युपेत्य व्याचष्टे **उशतीरुशत्य इति** । संशयनिवृत्त्यर्थमिति भाष्ये अर्थशब्दो निवृत्तवचन इति भावः । उक्तं च सप्तमस्य प्रथमपादे पुंसो लुङिति सूत्रमञ्जर्यां तदर्थमित्येतावद्व्याख्यानावसरेऽर्थशब्दो निवृत्तिवचनः तस्यानिष्टस्वरस्य निवृत्त्यर्थमित्यर्थशब्दस्य निवृत्तिवाचकत्वम्, तद्वत्प्रकृ-तेऽपि संशयार्थमित्यस्य संशयनिवृत्त्यर्थमित्यर्थः । तस्य पर्यवसितार्थमाह **निश्चयार्थमिति** । **इत्यादिनेति** । यजुषामेव साम्नामेव अथर्वाङ्गिरसामेवेति सम्बध्यत इत्यर्थः[३] । **विधातुमिति** । मुनित्वेत्यादिना विधातुमित्यर्थः । **दृष्टस्येति** । बह्वायाससाध्यादृष्टफलप्राप्तिर्यदा तदाल्पायाससाध्यदृष्टफल-प्राप्तिर्भवतीति किं वक्तव्यमित्यर्थः । [४]**यथेति** । अहं रुद्रायेत्याद्यम्भ्रणीवाक्यं यदा अधमः पश्यति तदा अम्भ्रणीवाक्यतयैव पश्यतीत्यर्थः । **स्त्रिय इति** । स्त्रीरूप ऋषीनित्यर्थः । ऋषीनित्यनुषङ्गेण वा । नन्वभिमानित्वं

---

१. कपुस्तके केचित्तु..........वदन्ति इति वाक्यं नास्ति ।

२. नासिकायाः - क ।

३. यजुषामेव साम्नामेवेत्येवं प्रकारेण सम्बन्ध्यत इत्यर्थः क्वचिदित्यादि सम्बध्यत इति पाठे दृश्यते तदा क्रियाविशेषणमिति ज्ञेयम् । अर्थस्तु पूर्वोक्तप्रकारेणेति ।

४. तथा चोक्तमिति अनुक्रमणिकायामित्यर्थः ।

दृष्टत्वे कथं प्रयोजकमित्याशङ्क्य व्यतिरेकमुखेनोपपादयति न हीति । एवमिति । एकस्य ग्रहणे तत्समस्यापि ग्रहणमित्यर्थः । तासां तेषां चेति । स्त्रीणां पुरुषाणां चेत्यर्थः ।

## भाष्यम्

**छन्दस्त्वेन मुनित्वेन तासां स्मृतिरुदीरिता ।**
**स्मर्तव्यास्ते च सर्वेऽपि मुनित्वेन पृथक्पृथक् ।**
**गायत्री बृहती चैव ताः सर्वा गरुडस्तथा ।**
**ब्रह्माण्यनुष्टुबिन्द्राणी त्रिष्टुप्स्वाहेति चोच्यते ।**
**गायत्री जगती चैव वारुणी रोहिणी तथा ।**
**अनुष्टुब् बृहती चैव तारा पङ्क्तिः शची तथा ।**
**उष्णिक् सौरी जगत्यश्च सर्वदेवस्त्रियो मताः ।**
**विराण्मित्रावरुणयोर्भार्ये इति च कीर्तिते ।**
**अतिच्छन्दांसि सर्वाणि सर्वदेव्यः प्रकीर्तिताः ।**
**विराडिति च नामासां तास्ता ऊनाधिकेष्वपि ।**
**निचृद्भुरिग्विराट्संज्ञाः प्रस्तारेत्यादि नाम च ।**
**बह्वीनामेकमानेन त्वेकं नाम च युज्यते ।**
**सर्वाभिमानिता चैव तिसृणां च यथाक्रमम् ।**
**देवता सर्वविद्यानां स्वयं नारायणः प्रभुः ।**
**ऋते तत्र प्रसिद्धाश्च देवता श्रीस्तथाऽत्र च ।**
**ऋते प्रसिद्धा ब्रह्मैव ततस्तेन क्रमेण च ।**
**पूर्वप्रसिद्धवर्जं तु शक्रान्ता देवता मताः ।**
**ब्रह्मवायू गिरौ वीन्द्रशेषरुद्राश्च तत्स्त्रियः ।**

**शक्रकामौ कामपुत्रमनुदक्षाङ्गिरस्सुताः ।**
**तद्वच्छची रतिः सूर्यसोमधर्मादितत्स्त्रियः ।**
**प्रधानमरुतो वारिपतिरग्निश्च मारुताः ।**
**निर्ऋतिः स्त्रियश्च सूर्यादिरश्विनावितरे तथा ।**
**अनन्तकोटिशतकदशार्धांशतः क्रमात् ।**
**ज्ञानभक्तिबलैश्वर्यपूर्वाखिलगुणैरपि ।**
**मुक्तावपि क्रमो ह्येष देवता उदिता इमाः ।**
**इन्द्रावरा विशेषेण लिङ्गेनैव पृथक्पृथक् ।**
**देवतास्तत्र तत्र स्युरेष एव परो विधिः ।**
**वेदादिवर्णपर्यन्तैर्मूर्तयः केशवस्य तु ।**
**समासव्यासयोगेन वाच्यास्तात्पर्यतः पृथक् ।**
**यथायोगं यथान्यायमन्यासामपि मूर्तयः ।**

टीका

सन्त्वेतास्ते चर्षयस्ततश्च किमित्यत आह **मुनित्वेनेति**। उदीरिता कर्तव्यतया। तात्पर्यद्योतनाय स्मर्तव्यास्ते चेति पृथग्योगः। दृष्टादृष्टफलहेतुत्वादित्यर्थः। एवमृषीनुक्त्वा तत्स्मरणं च विधाय छन्दसामपि स्मरणं विधत्ते छन्दस्त्वेन च तासां स्मृतिरुदीरितेति। तत्र कस्य छन्दसः का देवतेत्यत आह **गायत्रीति**। ताः सर्वाः प्रागुक्ताः श्रीर्ब्रह्माणी च भारती। तथा गरुडश्च गायत्री बृहती च। ब्रह्माण्यनुष्टुप्। इन्द्राणी त्रिष्टुप्। न केवलं गायत्री लक्ष्म्याद्याः किन्तु स्वाहा च गायत्रीत्युच्यते। वारुणी जगती। वक्ष्यमाणदेवतान्तरसमुच्चयार्थश्चशब्दः। एवशब्दोऽन्यथोक्तिनिरासार्थः। न केवलं ब्रह्माण्यनुष्टुप्

किन्तु रोहिणी तथा रोहीणी चानुष्टुप् । एवं तारा च बृहती । शची पङ्क्तिश्च । सौरी उष्णिक् । सर्वदेवस्त्रियश्च जगत्यो मताः । मित्रावरुणयोर्भार्ये विराडिति च कीर्तिते । सर्वदेव्यः सर्वाण्यतिच्छन्दांसि प्रकीर्तिताः । आसां च विराडिति नाम । एवं छन्दसां देवता उक्त्वा तदवान्तरभेदानाह **तास्ता इति** । यस्य छन्दसो यावन्तो वर्णास्तत्तदूनत्वे अधिकत्वे विन्यासभेदेनावान्तरभेदेषु च तास्तास्तत्तच्छन्दोदेवता एव देवता इत्यर्थः । तत्र नामविशेषमाह **निचृदिति** । एकेनाक्षरेण न्यूना निचृत् । एकेनाधिका भुरिक् । द्वाभ्यां न्यूना विराट् । द्वाभ्यामधिका स्वराट् । एवं न्यूनत्वादिना गायत्रीनिचृदादिसंज्ञा भवति । तथोष्णिगाद्या अपीत्यर्थः । प्रस्तारेत्यादिकं च नाम विन्यासभेदेनावान्तरभेदानामित्यर्थः । प्रस्तारेति पङ्क्तिविशेषः । एतच्च छन्दोग्रन्थादवगन्तव्यम् ।

ननु ताः सर्वा गायत्रीत्यादि न युज्यते एकानेकतादात्म्यानुपपत्तेरित्यत आह **वह्वीनामिति** । नात्र देवतानां छन्दसां चैक्यमुच्यते किन्तु तत्तदभिमानितया तत्तन्नामवत्त्वम् । तच्च बह्वीनां देवतानामेकच्छन्दोऽभिमानित्वेनैकनामवत्त्वं तु न विरुध्यत इत्यर्थः । एतेनाग्नेर्गायत्र्यभवदित्यादिकमपि व्याख्यातं भवति । गायत्रीबृहत्योर्लक्ष्म्याद्या देवता उक्ताः नैतावदेवेत्याह **सर्वेति** । तिसृणां श्रीर्ब्रह्माणी च भारतीत्युक्तानाम् । यथाक्रमं सर्वच्छन्दोभिमानिता चास्ति । पूर्वोक्तं तु विशेषविवक्षयेति भावः । एवमृषिच्छन्दसी उक्त्वा देवतामाह **देवतेति** । **स्वयं साक्षात्** ।

रिति देवतात्वोपपादनार्थम् । भगवति । **प्रसिद्धाः** पुरुषसूक्तादिविद्याः । ऋते वर्जयित्वाऽन्यासां विद्यानां श्रीश्च देवता । तथात्र च श्रीदेव्याम् । प्रसिद्धा विद्याः अम्भृणीसूक्ताद्या ऋतेऽन्यासां ब्रह्मैव

देवता । ततःपरं च तेन वक्ष्यमाणेन तारतम्यक्रमेणैव । पूर्वप्रसिद्धवर्जं पूर्वस्यां देवतायां प्रसिद्धा विद्या वर्जयित्वाऽन्यासां विद्यानां तु शक्रान्ता देवता मताः । कोऽसौ देवतानां क्रम इत्यत आह **ब्रह्मेति** । **गिरौ** सरस्वतीभारत्यौ । अङ्गिरः सुतो बृहस्पतिः । **तद्वत्** कामपुत्रादिवत् । तत्स्त्रियो मन्वादिस्त्रियः । प्रधानमरुतः प्रवहाद्याः । मारुतास्तदन्ये । क्रमात्क्रमयुक्ता वर्तन्ते । इत्यनेन क्रमेणोदिता इमा विद्यानां देवता ज्ञातव्याः ।

अत्र प्रायो द्वन्द्वगृहीतानां साम्यं ज्ञातव्यम् । प्रधानमरुत्सु प्रवहः सूर्यादिभ्यः पूर्वं पठितव्यः । सूर्यसोमधर्मादितत्स्त्रिय इत्यत्र सूर्यसोमधर्माणां मनुपत्न्याश्च साम्यम् । आदिपदगृहीतानां प्रसूत्यादिस्त्रीणां तदवरत्वम् । वारिपतिर्धर्माद्यनन्तरः । यद्येताः सर्वाः अपि विद्यादेवताः कथं तर्हि शक्रान्ता देवता इत्युक्तं तत्राह **इन्द्रावरा इति** । यद्यप्येताः सर्वा अपि विद्यादेवता भवन्त्येव तथापि पृथक् पृथक् विशेषेण व्यावर्तकेन । लिङ्गेन श्रुतिलिङ्गादिना ज्ञापकेनैवेन्द्रावराः तत्र तत्र विद्यासु देवताः स्युः न तु श्रुतिलिङ्गाद्यभावे । इन्द्रपर्यन्तास्तु श्रुत्याद्यभावेऽपि पूर्वप्रसिद्धवर्जं देवताः स्युरिति शक्रान्ता देवता इत्युक्तम् । अन्ये तु ब्रुवते तत्तच्छ्रुत्यादिनैव विष्णवाद्या देवताः स्युरिति तदसदिति भावेनाह **एष एवेति** । विधिः प्रकारः । देवतास्थितिः । प्रामाणिकत्वादिति शेषः । विष्णवादीनां विद्यादेवतात्वं विवृणोति **वेदादीति** । वेदादिवर्णपर्यन्तशब्दैः समासव्यासयोगेन पृथक् वाच्या इति समस्तवेदेनैका तत्प्रभेदैस्तावत्यः तदवान्तरभेदैरपि तावत्य इत्येवंप्रकारेण वाच्या इत्यर्थः । तदपि यथायोगं योगवृत्तिमनतिक्रम्य । यथान्यायं तत्तन्मूर्तीनां ज्ञापकं न्यायं चानतिक्रम्य ज्ञातव्यम् । अन्यासामपि लक्ष्म्यादिदेवतानां मूर्तयो विद्यासु वाच्या ज्ञातव्याः ।

## टिप्पणी

ननु स्त्रीपुरुषानुवादेन सर्वेषां स्मृतिरुदीरिता इति वाच्ये पुरुषान् पृथक्कृत्य स्मरणविधानं किमर्थमित्यत आह **तात्पर्येति** । पूर्वोक्तफलमेव हेतुत्वेनाह **दृष्टेति** ।

**वक्ष्यमाणेति** । जगत्यश्चेति वक्ष्यमाणेत्यर्थः । **अन्यथोक्तीति** । प्रकारान्तरेण छन्दोभिमानिदेवतोक्तीत्यर्थः । **एकेति** । एकस्याः गायत्र्यादेरनेकाभिर्देवताभिरित्यर्थः । मानेनेत्यस्यार्थः **तत्तदभिमानितयेति** । **एतेनेति** । अभिमान्यभिमन्यमानयोरेकनामवत्वकथनेनेत्यर्थः । तस्यां श्रुतौ गायत्र्यादिपदेन छन्दसः अभिमानिदेवतायाश्च नैक्यमुच्यते । किन्तु एकनामवत्वमात्रमुच्यत इति व्याख्यातं भवतीत्यर्थः । यद्वा 'अग्नेर्गायत्र्यभवत् सयुग्वोष्णिग्हया सविता सम्बभूव' इत्यादिवाक्यजातमग्न्यादीनां गायत्र्युष्णिगाद्यभिमानिस्वाहासौर्यादिदेवतासम्बन्धपरत्वेन व्याख्यातं भवतीत्यर्थः । उष्णिक्शब्दवत् हलन्ताद्वा इति टापि तृतीयैकवचने उष्णिहयेति रूपमिति ज्ञेयम् । **कामपुत्रा इति** । कामपुत्र अनिरुद्धः, अनिरुद्धस्वायम्भुवमनुदक्षबृहस्पतिवत् शची रतिश्च ज्ञातव्येत्यर्थः । तृतीयाध्यायतृतीयपादान्त अनुव्याख्याने 'उषा स्वाहा च पर्जन्य' इत्यादिना बृहत्संहितावचनेन तारतम्यक्रमः सम्यगुपपादित इति द्रष्टव्यम् । तत्र 'मनुर्दक्षो बृहस्पतिः शची रतिश्चानिरुद्धसमाः' इत्युक्तेरिति ज्ञेयम् । बृहदारण्यकभाष्येऽप्याद्यभागे पैङ्गिश्रुत्युदाहरणेन तारतम्यक्रमः सम्यगुपपादित इति ज्ञेयम् । तत्र 'स्वायम्भुवो मनुर्दक्षो वायुस्स्पर्शाधिपस्तथा । बृहस्पतिश्चानिरुद्ध एते सूर्यादितोऽधिकाः' इति दक्षादिभिः सह स्वायम्भुवमनोः ग्रहणात् । तदनुसारेण सुधायां मनुर्दक्षेत्यत्र मनुशब्दस्य स्वायम्भुवमनुपरतया

व्याख्यानादत्रापि मनुशब्दस्य स्वायम्भुवमनुपरत्वमिति ज्ञेयम् । यद्यपि समानानां मध्ये एकपरामर्शित्वेन साम्योक्तावप्यन्यसाम्यं सिद्धमेव भविष्यति । सोमवच्छतरूपेत्यादौ शतरूपायाः सोमसाम्योक्तौ सोमसमसूर्ययमसाम्यस्यापि[१] प्राप्तत्वात् । [२]तद्वदत्रापि कामवदित्युक्तेऽपि कामपुत्रे समानदक्षादिसाम्यं भविष्यति तथापि तद्वदित्यस्य कामपुत्रादिवदिति सर्वपरामर्शित्वप्रदर्शनं तु तेषु इन्द्रकामवत् कोऽपि विशेषो नास्तीति प्रदर्शनायेति ज्ञेयम् । धर्मादितत्स्त्रिय इत्यत्र श्रुतस्य स्त्रिय इति पदस्य सन्निहितसूर्यादिस्त्रीपरत्वनिरासाय तदनूद्यार्थमाह **तत्स्त्रियो मन्वादिस्त्रिय इति** । न च वाच्यम् तत्स्त्रिय इत्यस्य सूर्यादिपरत्वमेव किं न स्यादिति, 'स्त्रियस्तु सूर्यदिरिति' सूर्यादिस्त्रीणां पृथग्वक्ष्यमाणत्वेन पौनरुक्त्यापत्तेरिति । 'वीन्द्रशेषरुद्राश्च तत्स्त्रियः' इति पूर्वत्र श्रुतस्य तत्स्त्रीशब्दस्य तु वीन्द्रादिस्त्रीपरत्वेन [३]प्रतीयमानत्वान्नोपपादितमिति ज्ञेयम् । 'प्राय इन्द्रवत् काम' इत्यनुव्याख्यानोक्तिमनुसृत्याह **अत्र प्रायो द्वन्द्वगृहीतानामिति** । द्वन्द्वसमासगृहीतानामित्यर्थः ।

प्रधानमरुत्सु प्रवह इति हि एते सूर्यादितोऽधिकाः इति बृहद्भाष्योक्तपैङ्गिश्रुतौ प्रवहस्य सूर्यसोमधर्मेभ्य उत्तमत्वोक्तेरिहापि सूर्यादिभ्यः पूर्वं पठितव्य इति भावः । पैङ्गिश्रुतौ वायुः स्पर्शाधिप इत्यत्र वायुशब्दस्य स्पर्शाधिपप्रवहपरत्वादिति ज्ञेयम् । अनुव्याख्यानेऽपि मित्रोऽग्निर्वरुणो विधुः प्रवह इति प्रवहस्य विधुशब्दित चन्द्रादुत्तमत्वोक्त्या चन्द्रसमानसूर्ययमाभ्यामप्युत्तमत्वस्य प्राप्तत्वाच्चेति ज्ञेयम् ।

---

१. सोमसमानसूर्यस्यापि - क, सोमसमानसूर्ययमसाम्यस्यापि - ख ।
२. तत्रापि - क । ३. स्पष्टं प्रतीयमानत्वात् - क ।

**मनुपत्न्या इति** । प्रकृतस्वायम्भुवमनुपत्न्याः शतरूपाया इत्यर्थः । सोमवच्छतरूपत्वित्यनुव्याख्यानोक्तेरिति भावः । आदिपदगृहीतानां सूर्य-सोमधर्मा इति भाष्योक्तादिपदगृहीतानामित्यर्थः । **प्रसूत्यादिस्त्रीणामिति** । प्रसूतिर्दक्षभार्या । आदिपदेन बृहस्पतिभार्या तारा । प्रवहस्य सूर्यादिभ्यः पूर्वः पठितव्यत्वोक्त्या प्रवहपत्नी प्रावही च । अनिरुद्धस्य पूर्वं पाठात् तद्भार्या उषा च ग्राह्या । तथा च प्रसूतिरादिर्यासां ताराप्रावहीउषादेवीनां ताः प्रसूत्यादयः ताश्च ताः स्त्रियश्च तासां प्रसूत्यादिस्त्रीणामित्यर्थः । उषादेव्या आदिपद-गृहीतत्वाभावे प्रसूत्यादिस्त्रीणामिति बहुवचनानुपपत्तिरिति द्रष्टव्यम् । **तदव-रत्वमिति** । सूर्यादिभ्य अवरत्वमित्यर्थः । यद्यपि अनिरुद्धस्य पूर्वं पठितत्वेन तत्पत्नीमुषामादाय आदिपदगृहीतानामुषाप्रभृतिस्त्रीणामिति निर्देशः कर्तव्यः तथापि अनुव्याख्यानोक्तरीत्या उषायाः सूर्यादिस्त्रीसमानत्वेन प्रसूत्यादिभ्य अत्यन्तावरत्वप्रदर्शनाय प्रसूत्यादिस्त्रीणामित्युक्तमिति ज्ञेयम् । अत एव मन्वादिस्त्रिय इत्युक्तमिति ज्ञेयम् ।

अयं भावः— बृहदारण्यकभाष्योक्तपैङ्गिश्रुतौ 'सूर्यश्च चन्द्रमाश्चैव यमश्चैते त्रयः सुराः । प्रोक्तेभ्यस्त्ववराश्चान्ये देवेभ्योऽपि सदाधिकः' इति । तथानुव्याख्यानोक्तबृहत्संहितावचनेऽपि सूर्यधर्मौ यथा सोम इति सूर्यसोम-धर्माणां त्रयाणामेव परस्परं साम्योक्तेः सूर्याद्यन्यस्य सूर्यसोमसमानस्याभावेन, आदिपदेन सूर्यादिसमानग्रहणायोगात् सूर्यश्च सोमश्च धर्मश्च सूर्यसोमधर्मा आदयः प्रधानाः, श्रेष्ठाः याभ्यस्ताः सूर्यसोमादय इति पञ्चम्यर्थे बहुव्रीह्यनन्तरं सूर्यसोमधर्मादयश्च ताः तत्स्त्रियश्चेति कर्मधारयाश्रयणेन सूर्यसोमधर्मादि-पदस्य तत्स्त्रिय इत्युक्तस्त्रीविशेषणत्वं वाच्यम् । तत्र सोमवच्छतरूपा तु इत्यनुव्याख्यानोक्तबृहत्संहितावचनानुसारेण मनुपत्न्याः सूर्यसोमधर्मसमान-धर्मत्वे सिद्धे परिशेषादादिशब्दो मनुपत्नीव्यतिरिक्तप्रसूत्यादि स्त्रीपर इति ।

तस्मादादिपदगृहीतानामित्यस्य भाष्योक्तादिपदगृहीतानामित्यर्थपरत्वं युक्तमेवेति ।

धर्माद्यनन्तर इति । आदिपदेन धर्मसमानसूर्यसोमयोः ग्रहणम् । तथा च धर्मसूर्यसोमानां त्रयाणामनन्तरो वारिपतिरित्यर्थः । अत्रादिपदकृत्यं [1]कामपुत्रादीत्यत्रास्मदुक्तरीत्या ज्ञेयम् । उपलक्षणमेतत् । अश्विनौ निरृतेरनन्तरावित्यपि द्रष्टव्यम् ।

**भाष्यम्**

**ऋक्संहितायां स्वाध्याये निरुक्ते व्यासनिर्मिते ।**
**प्रवृत्ते चैतदखिलमुक्तं हि प्रभुणा स्वयम् ।**
**सर्वे वेदाश्च नामानि ता वा एता ऋचस्तथा ।**
**इन्द्रं मित्रं च वरुणमित्याद्यत्र प्रमा परा ।**
**'देवतातारतम्यं च सर्वोत्कृष्टं च केशवम् ।**
**ज्ञात्वैव मुच्यते ह्यस्मान्नान्यथा तु कथञ्चन ।'**
**इति पैङ्गिश्रुतिश्चाह दृश्यतेऽत्र च सर्वशः ।**
**न ते महित्वमित्यादिनैश्वरानेव केवलान् ।**
**गुणान्विष्णोः श्रुतिर्ह्याह नैव दोषान् कथञ्चन ।**
**जाता परिबभूवेति मर्यादां ब्रह्मणोऽपि हि ।**
**नैव रेमेऽबिभेद् ब्रह्मा नासीदित्यादिकानपि ।**
**दोषान्रुद्रे च तानेव न मिनन्तीति पूर्वकान् ।**
**'यं कामये तं तमुग्रं' 'रुद्राय धनुरि'त्यपि ।**
**'अस्य देवस्य' 'मा शिश्नदेवा अपि गुरि'त्यपि ।**

---

१. कामपुत्रादिवदित्यत्र - क ।

**घ्रञ्छिश्चदेवानित्याद्या दोषा बह्व ईरिताः ।**
**ततो वितिष्ठे योनिः स एतावत्यहमित्यपि ।**
**अन्याश्रयत्वं देव्याश्च कथितं बहुशोऽपि हि ।**

**टीका**

एवमृषिच्छन्दोदेवतास्वरूपमुक्त्वा तत्र प्रमाणमाह **ऋक्संहितायामिति**। यास्कनिर्मितप्रसिद्धनिरुक्तव्यावृत्तये **व्यासनिर्मित इति**। विष्णोः सर्वविद्याप्रतिपाद्यत्वे श्रुतीरपि पठति **सर्व इति**। 'सर्वे वेदा यत्पदमामनन्ति नामानि सर्वाणि यमाविशन्ति', 'ता वा एताः सर्वा ऋचः इन्द्रं मित्रं वरुणमग्निमाहुः' इत्यादीत्यविभक्तिको निर्देशः। 'सुपां सुलुग्' इति स्मरणात्। इत्यादिका। अत्र विष्णोः सर्वविद्यावेद्यत्वे। परा ऋक् संहितादितोऽन्या च प्रमास्ति। विष्णोः सर्वोत्तमत्वान्मुख्यतः सर्वविद्यावेद्यत्वं लक्ष्म्यादीनामप्याधिक्यतारतम्यानुसारेण विद्यावेद्यत्वमित्युक्तम्। तदाधिक्यतारतम्यं प्रमाणैः साधयन् विष्णोः सर्वोत्तमत्वं तावदादौ साधयति **देवतेति**। अस्मात् संसारात्। अत्र च अस्यामपि शाखायाम्। सर्वशो विष्णोः सर्वोत्तमत्वादिकं दृश्यते। अत्रेति प्राचुर्याभिप्रायम्। यद्वाऽत्र च प्रसिद्धास्वपि श्रुतिष्वित्यर्थः। तत्कथमित्यत आह **न त इति**। 'परोमात्रया तन्वा वृधान न ते महित्वमन्वश्नुवन्ती'त्यादिना श्रुतिः सर्वोत्तमत्वादीन् गुणान् विष्णोराह। तांश्च केवलानैश्वरानेव विष्णुमात्रनिष्ठानाह। दोषांस्तु कापि श्रुतिस्तस्य न वक्ति। अतोऽनन्यसाधारणात्युत्तमानन्तगुणवत्त्वान्निर्दोषत्वाच्च तस्य सर्वोत्तमत्वं ज्ञायते। नन्वेवं भावो ब्रह्मरुद्रादीनामपि विद्यत इति नेत्याह **जातेति**। 'प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परिता बभूव'।

हे प्रजापते भवान् जातानि उत्पत्तिमन्ति । विश्वानि सर्ववस्तूनि । परिभूतवान् । तत्स्वामित्वेन वर्तते । त्वदन्यस्तु न परिता बभूवेति श्रुतिर्ब्रह्मणोऽप्यैश्वर्यस्य मर्यादामाह । जातेति विशेषणेनाजात-विश्वपरिभवनस्य प्रतिषिद्धत्वात् । 'स वै नैव रेमे सोऽबिभेत्' 'एको नारायण आसीन्न ब्रह्मे'त्यादिना दुःखभयादिकान् दोषानपि ब्रह्मणः श्रुतिराह । अतो न तस्य भगवत्साम्यम् । नापि रुद्रस्य । यतो 'नय-स्येन्द्रो वरुणो न मित्रो व्रंतमर्यमा न मिनन्ति रुद्रः । नारातयस्तमिदं स्वस्ति हुवे देवं सवितारं नमोभिरि'त्यादिका श्रुतिः । यस्य विष्णोः व्रतं कर्मेन्द्रो न मिनाति न जानाति । गतिकर्मसु पाठात् । न वरुणः न मित्रो नार्यमा न रुद्रः अरातयो दैत्या अपि न मिनन्ति । विश्वस्य प्रसवितारं देवं नमोभिर्नमनैरिदमैहिकामुष्मिकं स्वस्ति सुखमुद्दिश्य हुवे ह्वयामीत्यज्ञानपूर्वकांस्तान्दोषानेव रुद्रे चाह । तदेव स्पष्टयति **यमिति** । 'यं कामये तं तमुग्रं कृणोमि', 'अहं रुद्राय धनुरातनोमि' 'अस्य देवस्य मीळ्हुषः मा शिश्नदेवा अपि गुर्ऋतं नः घ्नन् शिश्नदेवाम् अभिवर्प-साभूदि'त्यादि श्रुतौ पराधीनपदप्राप्त्याद्या बहवो दोषा रुद्रस्येरिताः । 'अहं सुवे पितरमस्य मूर्धन् मम योनिरप्स्वन्तःसमुद्रे । ततो वितिष्ठे भुवनानु विश्वो तामूं द्यां वर्ष्मणो पस्पृशामि । परो दिवा पर एना पृथिव्यै तावती महिना सम्बभूवे'ति श्रीदेव्या अपि भगवदाश्रयत्वं बहुशः कथितम् । ततो न सापि तत्समेति । यस्मादहं ततः परमे-श्वराद्वितिष्ठे उत्थितोत्पन्ना । तस्मादसौ मम योनिरित्यर्थः । वर्ष्मणा बलेन शरीरेण च । उपस्पृशामि वशीकरोमि । व्याप्नोमि च । सम्बभूव तत इति वर्तते ।

## टिप्पणी

ननु 'न केवला प्रकृतिः प्रयोक्तव्या नापि प्रत्ययः' इति शाब्दिकैरुक्तत्वात् भाष्ये इन्द्रं मित्रं वरुणमित्यादिरत्र प्रमापरेति सविभक्तिकतया निर्देशो कर्तव्ये इत्यादीति कथं निर्देशः कृत इत्यत आह **इत्यादीत्यविभक्तिको निर्देश इति** । अविभक्तिकः लुप्तविभक्तिक इत्यर्थः । तत्र लोपप्रापकं पाणिनिसूत्रं दर्शयति **सुपां सुलुगिति स्मरणादिति**[1] । सुपां सुलुक्पूर्वसवर्णाच्छया इति पाणिनिसूत्रादित्यर्थः । तथा च प्रथमैकवचनस्य लुकि सति अविभक्तिको निर्देश इत्यर्थः । [2]तत्र चेत्यत्र चस्त्वप्यर्थ इत्यभिप्रेत्य योजनामाह **अस्यामपि शाखायामिति** । व्याख्येयत्वेन प्रकृतायां ऋक्शाखायामपीत्यर्थः ।

ननु विष्णोः सर्वोत्तमत्वादेः सर्वशाखासु प्रतिपाद्यत्वेन दर्शनादत्रेति विशिष्यकथनं कथमित्यत आह **अत्रेति प्राचुर्याभिप्रायमिति** । अस्यां शाखायां विष्णोः सर्वोत्तमत्वादिरूपार्थस्य प्राचुर्येण प्रतिपादनात्, इतरशाखापेक्षया वैलक्षण्यज्ञापनाय पुनरत्रेति कीर्तनमित्यर्थः । एवं भावः— **सर्वोत्तमत्वादिकं विशेषणेनेति** । विश्वशब्दितसर्ववस्तुषु विशेषणेनेत्यर्थः । **गतिकर्मस्विति** । गत्यर्थानां ज्ञापनार्थत्वादिति भावः ।

**मेति** । शिश्नदेवा अतीतानागतवर्तमानाः गुह्याभिमानिनो देवाः रुद्रा अपि नोऽस्माकमुपास्यं ऋतं ज्ञानरूपं ब्रह्म मा गुः न ज्ञातवन्त इति । **घ्नन्निति** । शिश्नदेवान् गुह्याभिमानिदेवान् रुद्रान् घ्नन् संहरन् ईश्वरः वर्चसा बलेन सर्वमभ्यभूत् अभिभूतवानिति । पाशुपताधिकरणसुधाद्युक्तरीत्या

---

१. सुपां सुलुगिति - क । २. अत्र चेत्यत्र चशब्दोऽप्यर्थः - क । सर्वोत्तमत्वादिकं विशेषेण विश्वशब्दितसर्ववस्तुविशेषणेनेत्यर्थः ।)

अनयोः श्रुत्योरर्थः ज्ञेयः । इति वर्तत इति । ततो वितिष्ट इत्यतः तत इत्यनुवृत्य ततः परमेश्वरात् महिना महिम्ना एतावती सम्बभूवेत्यन्वय इति भावः ।

भाष्यम्

**तदाश्रयत्वमन्येषामपि तत्रैव निश्चयात् ।**
**ब्रह्मैवाग्र इति ह्युक्त्वा रुद्रादीनां ततो जनिः ।**
**उक्ता जातानि विश्वानि सपर्यभवदित्यपि ।**
**यस्य च्छायाऽमृतं मृत्युरिति चादरतोऽब्रवीत् ।**
**'अनन्तादवरेशाना तस्याः प्राणस्ततश्च वाक् ।**
**तस्या रुद्र उमा तस्मादिन्द्रस्तस्यास्ततोऽपरे' ।**
**सौपर्णश्रुतिरित्याह 'सप्ता क्षितय' इत्यपि ।**
**'वायुरस्मा उपामन्थत्' 'विश्वदेवाय वायवे' ।**
**'विश्वैर्देवैः स' इत्याद्याः प्रमा अत्रापरा अपि ।**
**'नारायणोऽदितिर्वायुर्वाणी रुद्र उमा विभुः ।**
**इतरे च क्रमाद्धीनाः शतांशाद्वायुतोऽवराः' ।**
**इति बर्कुश्रुतिश्चाह शक्रात्सप्ताक्षितिश्रुतिः ।**
**अयं त एमि तन्वेति पूर्वा अन्या अपि स्फुटम् ।**
**वायोराधिक्यमप्याहुः 'इन्द्रं सोमं हुताशनम् ।**
**सूर्यं रुद्रमिमान् पञ्च देवानेको महात्मनः ।**
**सृजत्यत्ति महान्प्राण' इति चाह तुरश्रुतिः ।**
**'वि हि सोतोरसृक्षत नेन्द्रं देवममंसत ।**
**[१](यत्रामदद् वृषाकपिरर्यः पुष्टेषु मत्सखा' ।)**

---

१. इदं न पठ्यते क्वचित् ।

**'न यस्येन्द्र' इति ह्याह विष्णोरिन्द्रस्य हीनताम् ।**
**वेधा अजिन्वदित्यादि वचनं विष्णुनामतः ।**
**आनन्दश्रुतिरप्यस्य जीवतामेव दर्शयेत् ।**
**आह सूर्यादपीन्द्रस्य वायोर्विष्णोरपीशताम् ।**
**यः सूर्यं य उषसं म्रियन्ते पञ्च देवताः ।**
**चक्षुषा द्यौश्चादित्यश्च चक्षोः सूर्यो अजायत ।**
**यमादित्यो न वेदेतिपूर्वा श्रुतिरथापराः ।**
**'विष्णोर्वातो अजनिष्ट वातादिन्द्रस्ततो रविः ।**
**सोमश्चेति लयोऽप्येवं पूर्वे पूर्वे गुणाधिकाः' ।**
**'विष्णोः प्राणो अजनिष्ट प्राणादिन्द्रो रविर्विधुः ।**
**लयोऽप्येतादृशस्तेषां पूर्वः पूर्वो गुणाधिकः' ।**
**तुरश्रुतिश्च सौपर्णी पिङ्गश्रुतिरपीदृशी ।**
**अतः सर्वाधिको विष्णुर्निर्णीतः श्रुतिसञ्चयात् ।**
**अतो दोषवचो यत्र तद्वाक्यमवरं वदेत् ।**
**निर्दोषतैव विष्णोस्तु क्रमान्मध्यगतेष्वपि ।**

टीका

एवं विष्णोः सर्वोत्तमत्वं लक्ष्म्यादीनां ततोऽवरत्वं च प्रसाध्य देव्या ब्रह्माद्युत्तमत्वं च साधयति तदाश्रयत्वमिति । लक्ष्म्याश्रयत्वम् । अन्येषां ब्रह्मादीनामपि । तत्रैव अहं रुद्रेभिरिति सूक्त एव । निश्चयात् स्फुटं कथितम् । अथ ब्रह्मणो रुद्राद्युत्तमत्वं साधयति ब्रह्मैवेति । 'हिरण्यगर्भः समवर्तताग्र' इत्येतस्मिन्सूक्ते ब्रह्मणः प्रथमोत्पत्तिमुक्त्वा यस्य देवा इत्यादिना रुद्रादीनां ततो जनिरुक्ता । विश्वाजातानि परिता बभूवेति जन्मवतां रुद्रादीनां तद्वशत्वं चोक्तम् । 'यस्य

छायाऽमृतं यस्य मृत्युरि'ति पालकानां संहारकाणां चेन्द्रादीनां रुद्रादीनां च तत्प्रतिबिम्बत्वं चाब्रवीत्। पुनर्यस्येति पृथग्योगादादरत इत्युक्तम्। अथ वायोर्विष्णवाद्यवरत्वं रुद्राद्युत्तमत्वं च साधयति **अनन्तादिति**। **ईशाना** लक्ष्मीः । इति वायोर्विष्णवाद्यवरत्वादिकम् । 'तमेताः सप्त क्षितय उपतिष्ठन्ते तद्या इमा अक्षंल्लोहिन्यो राजयस्ताभिरेनं रुद्रोन्वायत्तः', 'वायुरस्मा उपामन्थत्पिनष्टिस्मा कुनन्नमा। केशी विषस्य पात्रेण यद्रुद्रेणापिबत्सह', 'पूषण्वते मरुत्वते विश्वदेवाय वायवे' । इत्याद्या अप्यपराः प्रमाः अत्र वायो रुद्राद्युत्तमत्वे सन्ति। तमक्षणि स्थितं वायुम् एता वक्ष्यमाणा अक्षितयोऽक्षीणगुणाः सप्त देवता उपतिष्ठन्ते सेवन्ते। तत्तत्र या इमा अक्षन्नक्षिणि लोहिन्यो लोहिता राजयो रेखास्ताभिस्तदधिष्ठानेनैनं वायुं रुद्रोऽन्वायत्तः तदधीनो वर्तते। कुत्सितान्नमयतीति कुनन्नमा केशी प्रशस्तकेशवान् वायुर्यद्यदा रुद्रेण सह पात्रेण विषस्य विषमपिबत् । तदाऽस्मै रुद्राय तदनुजिघृक्षयेति यावत् । तद्विषमुपामन्थत्। तस्यैव विवरणं पिनष्टि **प्रमेति**। विश्वेषां रुद्रादीनां देवो विश्वेदेवः । इन्द्रपरिवारत्वाद्वायोरिन्द्राद्युत्तमत्वं विप्रतिपन्नमिति तत्साधयते **नारायण इति**। अदितिर्लक्ष्मीः । विभुरिन्द्रः । 'शतांशाद्वायुतो वरा' इत्यनेन वाय्वादेर्लक्ष्म्यादितोऽधिकावरत्वं सूचयति । शक्राद्वायोराधिक्यमिति सम्बन्धः । 'तमेताः सप्ता क्षितय उपतिष्ठन्ते यच्छुक्लं तेनेन्द्र' इति श्रुतिः । 'अयं त एमितन्वापुरस्ताद्विश्वे देवा अभिमायन्ति पश्चात् । यदा मह्यं दीधरोभागमिन्द्रादिन्मया कृणवो वीर्याणी'त्येतत्पूर्वा अन्या अपि श्रुतयः शक्रादपि वायोराधिक्यमाहुः । कस्याश्चिद्युद्धवेलायामिन्द्रं प्रति वायोर्वचनम् । हे इन्द्र अयमहं तन्वा आयुधादिनिरपेक्षेण शरीरेण ते पुरस्तादेमि युद्धभूमिं प्रवेक्ष्यामि। त्वदा-

दयः सर्वे देवाः मां पश्चान्मदनन्तरमभियन्तु । त्वं तु यदा यस्मान्मया मत्प्रेरणयैव मह्यं भागं दीधरो मदुद्देशेन यज्ञभागमधारयः । मामपूजय इति यावत् । 'आदित्तस्मादेवावां सह वीर्याणि कृणवः कुर्व' इति तुरश्रुतिश्च वायोः शक्रादाधिक्यमाहेति सम्बन्धः । विष्णोरुपेन्द्ररूपेणेन्द्रानुचरत्वा-त्तदाधिक्यं विप्रतिपन्नमिति तत्साधयति **वि हि सोतोरिति** । यज्ञेषु सोमसवनायर्त्विजो व्यसृक्षत विसृष्टाः । प्रेरिता अभूवन् । ते चेन्द्रं देवं द्योतनादिगुणैः परिपूर्णं नामंसत हि । कीदृग्विधेषु यज्ञेषु । यत्र पुष्टेषु पुष्टानां पूर्णानामप्यर्यः स्वामी मत्सखा । वृषाकपिर्विष्णुरमदत्सुखी सम-वर्ततेति । विष्णोरिति पञ्चमी । एतयोः श्रुत्योः विष्णोर्वाचकस्य स्फुट-स्याभावात् श्रुत्यन्तरमुदाहरति **वेधा इति** । 'आयो विवायसचथाय दैव्य इन्द्राय विष्णुः सुकृते सुकृत्तरः । वेधा अजिन्वस्त्रिषधस्थ आर्यमृतस्य भागे यजमानमाभजदि'ति विष्णुनामतो विष्णुनाम्नोपेतं वचनमेतमेवार्थ-माह । यः सुकृते साधुकारिणे । इन्द्राय दैव्यस्तस्य परमं दैवतम् । सुकृत्तरोऽतिशयेनासाधुकारी । वेधाः विशेषेण धारणपोषणकर्ता । त्रिषधस्थः श्वेतद्वीपादिस्थानत्रयस्थो विष्णुरार्यं वामनावतारे ज्यायांसं यजमानम् अश्वमेधयाजिनमिन्द्रम् । सचथाय सुखावस्थित्यै । आवि-वाय अनयत् संवृतवान् । अजिन्वत् अजनयत् । ऋतस्य यज्ञस्य भागे चाभजदिति । 'ते ये शतमिन्द्रस्यानन्दाः स एको बृहस्पतेरानन्द' इति जीवानन्दतारतम्याभिधात्री श्रुतिरस्येन्द्रस्य जीवतामेव दर्शयति । तेन चेश्वरादवरत्वं ज्ञायते । सूर्यस्य कैश्चित्सर्वोत्तमत्वमङ्गीकृतमिति तत्प्रति-योगिकमिन्द्रवायुविष्णूनामाधिक्यं साधयति **आहेति** । श्रुतिरिति वक्ष्य-माणेन सम्बन्धः । ईशतामाधिक्यम् । 'यः सूर्यं य उषसञ्जजान यो अपां नेतासजनास इन्द्र' इति श्रुतिरिन्द्रस्य सूर्यादाधिक्यमाह । **जजान**

छायाऽमृतं यस्य मृत्युरि'ति पालकानां संहारकाणां चेन्द्रादीनां रुद्रादीनां च तत्प्रतिबिम्बत्वं चाब्रवीत्। पुनर्यस्येति पृथग्योगादादरत इत्युक्तम्। अथ वायोर्विष्णवाद्यवरत्वं रुद्राद्युत्तमत्वं च साधयति **अनन्तादिति**। **ईशाना** लक्ष्मीः । इति वायोर्विष्णवाद्यवरत्वादिकम् । 'तमेताः सप्त क्षितय उपतिष्ठन्ते तद्या इमा अक्षंल्लोहिन्यो राजयस्ताभिरेनं रुद्रोन्वायत्तः', 'वायुरस्मा उपामन्थत्पिनष्टिस्मा कुनन्नमा। केशी विषस्य पात्रेण यद्रुद्रेणापिबत्सह', 'पूषण्वते मरुत्वते विश्वदेवाय वायवे' । इत्याद्या अप्यपराः प्रमाः अत्र वायो रुद्राद्युत्तमत्वे सन्ति। तमक्षणि स्थितं वायुम् एता वक्ष्यमाणा अक्षितयोऽक्षीणगुणाः सप्त देवता उपतिष्ठन्ते सेवन्ते। तत्तत्र या इमा अक्षन्नक्षिणि लोहिन्यो लोहिता राजयो रेखास्ताभिस्तदधिष्ठानेनैनं वायुं रुद्रोऽन्वायत्तः तदधीनो वर्तते। कुत्सितान्नमयतीति कुनन्नमा केशी प्रशस्तकेशवान् वायुर्यद्यदा रुद्रेण सह पात्रेण विषस्य विषमपिबत् । तदाऽस्मै रुद्राय तदनुजिघृक्षयेति यावत् । तद्विषमुपामन्थत्। तस्यैव विवरणं पिनष्टि **प्रमेति**। विश्वेषां रुद्रादीनां देवो विश्वेदेवः । इन्द्रपरिवारत्वाद्वायोरिन्द्राद्युत्तमत्वं विप्रतिपन्नमिति तत्साधयते **नारायण इति**। अदितिर्लक्ष्मीः । विभुरिन्द्रः । 'शतांशाद्वायुतो वरा' इत्यनेन वाय्वादेर्लक्ष्म्यादितोऽधिकावरत्वं सूचयति । शक्राद्वायोराधिक्यमिति सम्बन्धः । 'तमेताः सप्ता क्षितय उपतिष्ठन्ते यच्छुक्लं तेनेन्द्र' इति श्रुतिः । 'अयं त एमितन्वापुरस्ताद्विश्वे देवा अभिमायन्ति पश्चात् । यदा मह्यं दीधरोभागमिन्द्रादिन्मया कृणवो वीर्याणी'त्येतत्पूर्वा अन्या अपि श्रुतयः शक्रादपि वायोराधिक्यमाहुः। कस्याश्चिद्युद्धवेलायामिन्द्रं प्रति वायोर्वचनम् । हे इन्द्र अयमहं तन्वा आयुधादिनिरपेक्षेण शरीरेण ते पुरस्तादेमि युद्धभूमिं प्रवेक्ष्यामि। त्वदा-

दयः सर्वे देवाः मां पश्चान्मदनन्तरमभियन्तु । त्वं तु यदा यस्मान्मया मत्प्रेरणयैव मह्यं भागं दीधरो मदुद्देशेन यज्ञभागमधारयः । मामपूजय इति यावत् । 'आदित्तस्मादेवावां सह वीर्याणि कृणवः कुर्व' इति तुरश्रुतिश्च वायोः शक्रादाधिक्यमाहेति सम्बन्धः । विष्णोरुपेन्द्ररूपेणेन्द्रानुचरत्वा-त्तदाधिक्यं विप्रतिपन्नमिति तत्साधयति **वि हि सोतोरिति** । यज्ञेषु सोमसवनायर्त्विजो व्यसृक्षत विसृष्टाः । प्रेरिता अभूवन् । ते चेन्द्रं देवं द्योतनादिगुणैः परिपूर्णं नामंसत हि । कीदृग्विधेषु यज्ञेषु । यत्र पुष्टेषु पुष्टानां पूर्णानामप्यर्यः स्वामी मत्सखा । वृषाकपिर्विष्णुरमदत्सुखी सम-वर्ततेति । विष्णोरिति पञ्चमी । एतयोः श्रुत्योः विष्णोर्वाचकस्य स्फुट-स्याभावात् श्रुत्यन्तरमुदाहरति **वेधा इति** । 'आयो विवायसचथाय दैव्य इन्द्राय विष्णुः सुकृते सुकृत्तरः । वेधा अजिन्वस्त्रिषधस्थ आर्यमृतस्य भागे यजमानमाभजदि'ति विष्णुनामतो विष्णुनाम्नोपेतं वचनमेतमेवार्थ-माह । यः सुकृते साधुकारिणे । इन्द्राय दैव्यस्तस्य परमं दैवतम् । सुकृत्तरोऽतिशयेनासाधुकारी । वेधाः विशेषेण धारणपोषणकर्ता । त्रिषधस्थः श्वेतद्वीपादिस्थानत्रयस्थो विष्णुरार्यं वामनावतारे ज्यायांसं यजमानम् अश्वमेधयाजिनमिन्द्रम् । सचथाय सुखावस्थित्यै । आवि-वाय अनयत् संवृतवान् । अजिन्वत् अजनयत् । ऋतस्य यज्ञस्य भागे चाभजदिति । 'ते ये शतमिन्द्रस्यानन्दाः स एको बृहस्पतेरानन्द' इति जीवानन्दतारतम्याभिधात्री श्रुतिरस्येन्द्रस्य जीवतामेव दर्शयति । तेन चेश्वरादवरत्वं ज्ञायते । सूर्यस्य कैश्चित्सर्वोत्तमत्वमङ्गीकृतमिति तत्प्रति-योगिकमिन्द्रवायुविष्णूनामाधिक्यं साधयति **आहेति** । श्रुतिरिति वक्ष्य-माणेन सम्बन्धः । ईशतामाधिक्यम् । 'यः सूर्यं य उषसञ्जजान यो अपां नेतासजनास इन्द्र' इति श्रुतिरिन्द्रस्य सूर्यादाधिक्यमाह । जजान

जनयामास। 'एष ह वै ब्रह्म योऽयं पवते तमेताः पञ्च देवताः परिम्रियन्ते विद्युद्वृष्टिश्चन्द्रमा आदित्योऽग्निरि'ति श्रुतिर्वायोः सूर्यादाधिक्यमाह। तं परिम्रियन्त इति तेन संह्रियन्त इत्यर्थः। चक्षुषा सृष्टौ द्यौश्चादित्यश्चेत्येतत्पूर्वा श्रुतिर्विष्णोः सूर्यादाधिक्यमाह अथापराश्च श्रुतय एतदर्थत्रये सन्ति। ताः पठति विष्णोरिति। एतासां श्रुतीनां प्रत्येकं सर्वार्थप्रतिपादकत्वात् पृथक्करणम्। 'विष्णोर्वात' इति तुरश्रुतिः। 'विष्णोः प्राण' इति सौपर्णश्रुतिः। पिङ्गश्रुतिरपीदृशी एवं पाठा। अतो न पृथक् पठ्यत इत्यर्थः। लयोऽप्येवमिति क्रममात्रमतिदिश्यते स च वैपरीत्येनेति हृदयम्। विष्णुः सर्वाधिको निर्णीत इत्युपलक्षणम्। लक्ष्म्यादयोऽपि यथास्वरूपं निर्णीताः।

ननु नैव दोषानित्ययुक्तं 'जनितोत विष्णोरि'त्यादौ दोषप्रतीतेरित्यत आह अत इति। यत्र वाक्ये विष्णोर्दोषवचोदोषाभिधानं प्रतीयते तद्वाक्यमवरं सम्भावितदोषं वस्त्वन्तरं वदेदिति योज्यम्। ननु लक्ष्म्यादीनां यत्स्वरूपमुक्तं तदयुक्तं क्वचिदधिकदोषश्रवणादित्यत आह अत इति। दोषवचोऽधिकदोषाभिधानम्। अत्रोभयत्रापि दोषग्रहणं गुणाल्पताया अप्युपलक्षणम्। अत इत्युभयत्रोक्तमेव हेतुं दर्शयति निर्दोषतैवेति। यतो विष्णोः सर्वथा निर्दोषता प्रमाणैर्निर्णीता यतश्च मध्यगतेष्वपि लक्ष्म्यादिषु क्रमान्निर्दोषता निर्णीता अत इत्यर्थः। निर्दोषतेत्युपलक्षणम्। गुणपूर्तिरपीति द्रष्टव्यम्।

### टिप्पणी

**ततो जनिरिति।** हिरण्यगर्भाज्जनिरित्यर्थः। तथाच समवर्तत इति पदं वा ज्ञानपदं वा बहुवचनान्ततया विपरिणामेन देवा इत्यनेनाप्यन्वेतीति भावः।

'हिरण्यगर्भः समवर्तत' इत्यादेरर्थस्तु हिरण्यगर्भसूक्तार्थसङ्ग्रहे स्वामिभिः[1] सम्यगुपपादितो द्रष्टव्यः । **अब्रवीदिति** । तथा च यस्य हिरण्यगर्भस्य अमृतशब्दितेन्द्रादयः मृत्युशब्दितरुद्रादयश्च छायाप्रतिबिम्बभूता इत्यर्थ उक्तो भवति । **पृथग्योगादिति** । यस्य च्छायामृतं मृत्युरित्येतावत्युच्यमानेऽपि प्रथमश्रुतस्यैव षष्ठ्यन्तस्य मृत्युरित्यनेनाप्यन्वयसम्भवादिति भावः । स्रोतोरित्यस्यार्थमाह **यज्ञेषु सोमसवनायेति** । वि इत्यस्य [2]व्यवहिता च्छन्दसीत्युपेत्यान्वयमाह **व्यसृजतेति** । यत्रमदद्वृषाकपिरर्थः पुष्टेषु मत्सखा इति श्रुतिशेषार्थं पूर्वसङ्गतत्वेन वक्तुमवतारयति **कीदृग्विधेष्विति** । **पञ्चमीति** । तथा च विष्णोरस्सकाशादिन्द्रस्य हीनतामित्यर्थः । **एते शतमिति** । अत्रेन्द्रशब्देन दक्ष उच्यते । बृहस्पतिशब्देनेन्द्र उच्यत इति ज्ञातव्यम् । उक्तं च तैत्तरीयभाष्ये तेभ्यो दक्षश्चेन्द्रनामा स [3]हीन्दुरावयत् पुरा । तस्माद् बृहस्पतिर्नाम महेन्द्रत्वात् पुरन्दरः ।

**तत्प्रतियोगिकमिति** । सूर्यप्रतियोगिकमित्यर्थः । **एतदर्थत्रय इति** । सूर्यादिन्द्राधिक्यं वायोराधिक्यं विष्णोराधिक्यमित्येवंरूपार्थत्रय इत्यर्थः । ननु [4]मायादिभ्यो न चेदित्यनन्तरं विष्णोर्वात इत्यादि श्रुतयः पठितव्याः । एकप्रमेयप्रतिपादकत्वात् किमथापरा इति विच्छिन्नपाठेनेत्यत आह **एतासामिति** । तुरश्रुतिसौपर्णश्रुतिपिङ्गश्रुतीनामित्यर्थः । **सर्वार्थेति** । पूर्वोक्तासु यः सूर्यमित्यादि श्रुतिषु प्रत्येकं सूर्यादिकैकस्याधिक्यरूप एकैक एवार्थः प्रतिपादितः । अत्र त्वेकैकस्यामेव श्रुतौ सूर्यादिन्द्रस्याधिक्यं वायोराधिक्यं विष्णोराधिक्यमित्येवंरूप सर्वार्थप्रतिपादनात् पृथक्करण-

---

१. स्वामिभिरिति क पुस्तके नास्ति ।

२. व्यवहिताश्चेत्युपेत्यान्वयमाह - क ।

३. हीन्दुं राय यत् पुरा । ४. यमादित्यो न वेदेत्यनन्तरं - क ।

मित्यर्थः । **नैवेति**। नैष दोषान् कथं न चेति[1] हरौ दोषान् न वक्ति श्रुतिरिति यत्प्रागुक्तं तदयुक्तमित्यर्थः । **वस्त्वन्तरमिति**। जनितोऽत विष्णोरिति श्रुतौ विष्णुरिति यजमानस्य यज्ञस्य वा नाम तौ सोमाद्भवत इति तयोर्जनकः सोम उच्यते । तथा च जनितोत विष्णोरिति श्रुतिर्विष्णुशब्दितम् उत्पत्त्यादिदोषविशिष्टं यजमानाख्यं यज्ञाख्यं वा वस्त्वन्तरं वदेदित्यर्थः । तथैव जन्माधिकरणसुधायामुक्तत्वात् । एवं तत्र तत्र दोषवचनेषु अन्यपरत्वं द्रष्टव्यमिति भावः । तदेव वाक्यं प्रकारान्तरेण योजयितुमवतारयति **नन्विति**। **यत्स्वरूपमिति**। तारतम्यानुसारेण यत्स्वरूपमुक्तमित्यर्थः । **क्वचिदिति**। प्रमाणेष्वित्यर्थः । [2]**इत्युक्तत्वादिति**। 'देवतातारतम्यं च सर्वोत्कृष्टं च केशवम् । ज्ञात्वैव मुच्यते' इति पूर्वमुक्तत्वादित्यर्थः ।

**भाष्यम्**

**'त्रयोऽर्थाः सर्ववेदेषु दशार्थाः सर्वभारते ।**
**विष्णोः सहस्रनामापि निरन्तरशतार्थकम्' ।**
**इति स्कान्दवचो यस्मादर्थभेदव्यपेक्षया ।**
**निर्दोषत्वं हरेर्वक्ति दोषमन्येष्वपि क्रमात् ।**
**तारतम्यस्य विज्ञप्त्यै वचो दोषस्य चार्थवत् ।**
**'गुणाः श्रुता' इति ह्याह गुणैकनियतिं हरौ ।**
**'निर्दोषगुणपूर्णश्च विष्णुरेको न चापरः ।**
**अपूर्णा दोषरहिता मायैका तद्वशैव च ।**

---

१. नैष दोषान् कथञ्चनेति - पाठः साधु भवति ।

२. अधिकदोषाभिधानमिति लक्ष्म्यादीनामिति शेषः । **अत्रोभयत्रापीति** । अतो दोषवचो यत्रेति वाक्ये योजनाभेदेन पदद्वयेऽपीत्यर्थः - क)

**अदोषः प्रायशो ब्रह्मा दोषवन्तः क्रमात्परे' ।**
**इति मान्यश्रुतिश्चाह भेदोऽर्थानां ततो मतः ।**
**'रूढिमेव समाश्रित्य विभज्यार्थान्यथाक्रमम् ।**
**विदोषगुणपूर्त्यर्थं विष्णौ योगार्थमानयेत् ।**
**पश्चादेव यथायोगमितरेष्वपि सन्नयेत्' ।**
**ऋग्वेदसंहितायां च प्रभुणैवं समीरितम् ।**
**पृथग्रूपाणि विष्णोस्तु देवतान्तरगाणि च ।**
**अग्न्यादिसूक्तवाच्यानि नाम्ना सूक्तभिदा भवेत् ॥**

**टीका**

यदि दोषाभिधायिवाक्यमन्यपरं तर्हि विष्ण्वादीनां सर्ववेदादिवेद्यता न स्यादित्यत आह **त्रय इति** । निरन्तरशतार्थकमित्यनेन सर्वाण्यपि पदानि शतार्थानीत्युच्यते । इति स्कान्दवचो यस्माद्वेदस्यानेकार्थतां वक्ति तस्मादर्थभेदव्यपेक्षया योजनाविशेषविवक्षयैकमेव वाक्यं हरेर्निर्दोषत्वमन्येषु क्रमाद्दोषमपि वक्तीत्यङ्गीकाराददोष इत्यर्थः ।

ननु दोषाभिधायिवाक्यं देवतान्तरेऽपि कस्मादन्यथा न योज्यते दोषाभिधाने प्रयोजनाभावादित्यत आह **तारतम्यस्येति** । यदि तत्तद्देवतासु विद्यमाना दोषा नैवोच्येरन् न तर्हि तासां तारतम्यं विज्ञायेत । तज्ज्ञानं चावश्यमपेक्षितं मुमुक्षोः । देवतातारतम्यं चेत्युक्तत्वात् । अतस्तज्ज्ञापनाय दोषवचनमपि सार्थकमित्यर्थः । अतो दोषवचो यत्रेत्युक्तं द्रढयति **गुणा इति** । आह श्रुतिः । माया श्रीः । निर्दोषेत्यादिकामान्यश्रुतिश्चाह **गुणैकनियतिं हरौ** । अन्येषु च यथास्वरूपमिति शेषः । ततः परमेश्वरस्य निर्दोषगुणपूर्णत्वादन्येषां चोक्तस्वरूपत्वाद्योजनाभेदेनार्थानां भेदो वैलक्षण्यमेव मतमित्यर्थः । यथायोगमिति योगवृत्त्या विष्णोर्वेदवेद्यत्व-

मुक्तम् । तन्नोपपद्यते । सर्वज्ञ इत्यादौ सर्वादिशब्दानामन्यपरत्वे हरेः सर्वशब्दाभिधेयत्वस्य व्याघातात् । भगवत्परत्वे योगायोगादित्याशङ्कां स्मृत्यैव परिहरति **रूढिमिति** । सर्वादिशब्दानां रूढिमेव वृत्तिं तावत्समाश्रित्य निखिलादीनर्थान् विभज्य विस्पष्टं ज्ञात्वा । अनन्तरं यथाक्रमं शब्दानुशासनादिक्रमानतिक्रमेण । विष्णौ सर्वज्ञादिशब्दानां योगार्थमानयेत् । पश्चात्सर्वादिशब्दानामपि सरवादिशब्दानां रूढार्थानुपादायैव सरवः = सर्व इत्यादि योगवृत्तिमानयेदित्यर्थः । किमनेन रूढ्यैव परमेश्वरस्य वेदवेद्यतास्त्वित्यत उक्तं **विदोषेति** । भगवतो दोषाभावगुणपूर्तिज्ञापनार्थं हि वेदानां प्रवृत्तिः न च रूढिमात्रेण सम्यक् तद्भवति । अतो योग एवाश्रयणीयः । यथायोगं तत्तद्देवतायोग्यतानतिक्रमेण ।

ननु यदि सर्वोऽपि वेदो भगवत्परः । कथं तर्हीदमग्निसूक्तमिदं वायुसूक्तमिति सूक्तभेद इत्यत आह **पृथगिति** । द्विविधानि भगवद्रूपाण्यग्न्यादिसूक्तवाच्यानि । अग्न्यादिदेवतान्तरगाणि पृथक्तदनन्तर्गतानि च । सर्वाणि चाग्न्यादिनामवन्ति । तत्राद्यानां स्वनाम्नाधिष्ठाननाम्ना चाग्न्यादिसूक्तभेदो भवेत् । इतरेषां तु स्वनाम्नैवेति ।

### टिप्पणी

यथायोगमितीति । यथान्यायमिति पूर्वत्रेत्यर्थः । सरव इति । रवेण[1] केशादिशब्दजातेन प्रतिपाद्यतया सहित इत्यर्थः । आद्यानामिति । देवतान्तर्गतानामित्यर्थः । इतरेषां पृथग्रूपाणाम् । भाष्ये व्यत्यय इत्यस्य [2]प्रतिसम्बन्ध्यपेक्षायां स्वयमाह ।

---

१. वेदादिशब्दजातेन - क । २. प्रतिबन्ध्यपेक्षायाम् - क ।

भाष्यम्

नकिर्माकिः स्मसीत्यादि प्रोक्ताधिक्यविवक्षया ।
'आधिक्येऽधिकमि'त्येव हरिणा सूत्रमीरितम् ।
कृत्वी हत्वीतिपूर्वाश्च 'तृतीयोऽतिशये' यतः ।
विश्लिष्टार्थे च विश्लिष्टमूनार्थे चोनमिष्यते ।
व्यत्ययोऽभेदकरणस्वातन्त्र्येषु समीरितः ।
अभेदो हरिरूपाणां गुणानां च क्रियासु च ।
तस्यैवावयवानां च भेदः श्रीब्रह्मपूर्वकैः ।
मुक्तैरपि जडैर्भेदः कैमुत्यादेव दृश्यते ।
ऋग्वेदसंहितायां च प्रोक्तमेतत्समस्तशः ।
'अभेदः स्वगुणाद्यैश्च मुक्तानामपि सर्वशः ।
भेदाभेदस्त्वभेदश्च गुणैः संसारिणामपि ।
जडानामंशतोऽभेदः समुदायेन चोभयम्' ।
'मनुष्यगन्धर्वपितृगणकार्मिकतात्त्विकाः ।
देवाः शक्रः शिवो ब्रह्मा मुक्तौ सौख्यादिभिर्गुणैः ।
शतायुतोत्तरा नित्यमन्योन्यप्रीतिसंयुताः' ।
इति सिद्धान्तगं वाक्यं स्वयं भगवतेरितम् ।
स्वाध्यायस्तत्त्वविज्ञानं विष्णुभक्तिर्विरागता ।
निषिद्धकर्मसन्त्यागो विहितस्य सदा क्रिया ।
सदा विष्णुस्मृतिश्चैव केवलं मोक्षसाधनम् ।
एतैर्विना न मोक्षः स्याद्धवेदेतैरपि ध्रुवम् ।

मुक्तम् । तन्नोपपद्यते । सर्वज्ञ इत्यादौ सर्वादिशब्दानामन्यपरत्वे हरेः सर्वशब्दाभिधेयत्वस्य व्याघातात् । भगवत्परत्वे योगायोगादित्याशङ्कां स्मृत्यैव परिहरति **रूढिमिति** । सर्वादिशब्दानां रूढिमेव वृत्तिं तावत्समाश्रित्य निखिलादीनर्थान् विभज्य विस्पष्टं ज्ञात्वा । अनन्तरं यथाक्रमं शब्दानुशासनादिक्रमानतिक्रमेण । विष्णौ सर्वज्ञादिशब्दानां योगार्थमानयेत् । पश्चात्सर्वादिशब्दानामपि सरवादिशब्दानां रूढार्थानुपादायैव सरवः = सर्व इत्यादि योगवृत्तिमानयेदित्यर्थः । किमनेन रूढ्यैव परमेश्वरस्य वेदवेद्यतास्त्वित्यत उक्तं **विदोषेति** । भगवतो दोषाभावगुणपूर्तिज्ञापनार्थं हि वेदानां प्रवृत्तिः न च रूढिमात्रेण सम्यक् तद्भवति । अतो योग एवाश्रयणीयः । यथायोगं तत्तद्देवतायोग्यतानतिक्रमेण ।

ननु यदि सर्वोऽपि वेदो भगवत्परः । कथं तर्हीदमग्निसूक्तमिदं वायुसूक्तमिति सूक्तभेद इत्यत आह **पृथगिति** । द्विविधानि भगवद्रूपाण्यग्न्यादिसूक्तवाच्यानि । अग्न्यादिदेवतान्तरगाणि पृथक्तदनन्तर्गतानि च । सर्वाणि चाग्न्यादिनामवन्ति । तत्राद्यानां स्वनाम्नाधिष्ठाननाम्ना चाग्न्यादिसूक्तभेदो भवेत् । इतरेषां तु स्वनाम्नैवेति ।

## टिप्पणी

यथायोगमितीति । यथान्यायमिति पूर्वत्रेत्यर्थः । सरव इति । रवेण[१] केशादिशब्दजातेन प्रतिपाद्यतया सहित इत्यर्थः । आद्यानामिति । देवतान्तर्गतानामित्यर्थः । इतरेषां पृथग्रूपाणाम् । भाष्ये व्यत्यय इत्यस्य [२]प्रतिसम्बन्ध्यपेक्षायां स्वयमाह ।

---

१. वेदादिशब्दजातेन - क । २. प्रतिबन्ध्यपेक्षायाम् - क ।

भाष्यम्

नकिर्माकिः स्मसीत्यादि प्रोक्ताधिक्यविवक्षया ।
'आधिक्येऽधिकमि'त्येव हरिणा सूत्रमीरितम् ।
कृत्वी हत्वीतिपूर्वाश्च 'तृतीयोऽतिशये' यतः ।
विश्लिष्टार्थे च विश्लिष्टमूनार्थे चोनमिष्यते ।
व्यत्ययोऽभेदकरणस्वातन्त्र्येषु समीरितः ।
अभेदो हरिरूपाणां गुणानां च क्रियासु च ।
तस्यैवावयवानां च भेदः श्रीब्रह्मपूर्वकैः ।
मुक्तैरपि जडैर्भेदः कैमुत्यादेव दृश्यते ।
ऋग्वेदसंहितायां च प्रोक्तमेतत्समस्तशः ।
'अभेदः स्वगुणाद्यैश्च मुक्तानामपि सर्वशः ।
भेदाभेदस्त्वभेदश्च गुणैः संसारिणामपि ।
जडानामंशतोऽभेदः समुदायेन चोभयम्' ।
'मनुष्यगन्धर्वपितृगणकार्मिकतात्त्विकाः ।
देवाः शक्रः शिवो ब्रह्मा मुक्तौ सौख्यादिभिर्गुणैः ।
शतायुतोत्तरा नित्यमन्योन्यप्रीतिसंयुताः' ।
इति सिद्धान्तगं वाक्यं स्वयं भगवतेरितम् ।
स्वाध्यायस्तत्त्वविज्ञानं विष्णुभक्तिर्विरागता ।
निषिद्धकर्मसन्त्यागो विहितस्य सदा क्रिया ।
सदा विष्णुस्मृतिश्चैव केवलं मोक्षसाधनम् ।
एतैर्विना न मोक्षः स्याद्ब्रह्वेदैरपि ध्रुवम् ।

## टीका

एवम् ऋषिच्छन्दोदेवतास्वरूपं यथाक्रममुपपाद्य इदानीमसमस्तव्याख्यानस्य प्रतिज्ञातत्वाद्व्याख्यानप्रकारं शिक्षयति **नकिरित्यादिना**। 'नकिरिन्द्रत्वदुत्तरः' 'माकिर्नेशत्' 'स्मसिस्थातर्हरीणामि'त्यादौ यल्लक्षणप्रासाधिकं शब्दरूपं तत्तत्र प्रोक्तस्यार्थस्याधिक्यविवक्षया प्रयुक्तं ज्ञातव्यम् । 'आधिक्येऽधिकमि'ति सूत्रात् अर्थाधिक्ये विवक्षितेऽधिकं शब्दरूपं भवतीति कृत्वी देवैर्निकिल्बिषं हत्वी दस्यूनिति पूर्वा वर्णविकाराश्च प्रोक्ताधिक्यविवक्षया प्रयुक्ता ज्ञातव्याः। यतस्तृतीयोऽतिशय इति सूत्रम्। अर्थातिशये विवक्षिते लक्षणप्राप्तस्य स्थाने तत्तृतीयो वर्णो भवति। अः इति ब्रह्मेत्यादि विश्लिष्टमसंहिततया निर्दिष्टं शब्दस्वरूपं विश्लिष्टार्थे तस्यार्थस्य विश्लिष्टत्वे व्यावृत्तत्वे व्याख्यातव्यम्। 'सलिलं सर्वमा इदमि'त्यासीदिति वक्तव्ये आ इत्याद्यूनं चार्थस्योनत्वे विवक्षिते ज्ञेयम् । सुप्तिङ्विकरणलिङ्गपुरुषकालहलच् स्वरकृत्तद्धितसमाससन्यङादि व्यत्ययस्त्वभेदकरणस्वातन्त्र्येषु व्याख्यातव्यः । तत्राभेदः कुत्र व्याख्येय इत्यत आह **अभेद इति**। हरिणा परस्परं च। परिगणनस्य निमित्तमाह **भेद इति**। एतत्पृथग्रूपाणीत्यारभ्योक्तम्। समस्तशः समस्तम्। न केवलमुदाहृतसूत्रसिद्धमिति चार्थः। अभेदस्य स्थलान्तरं दर्शयति **अभेद इति**। चिं(तनादि)तादिभिर्गुणैर्भेदसहितोऽभेदः ज्ञानादिभिरभेदः नैवं मुक्तानामिति तुशब्दः। जडानामपि घटादीनामवयविनामंशत एकैकांशेन संस्थानविशेषरहितांशसमुदायेन चोभयं भेदाभेदौ। समुदायेन संस्थाविशेषविशिष्टैः सर्वांशैरभेद इत्यावृत्त्या योज्यम् । प्रकृतमुक्तस्वरूपमेव विवृणोति **मनुष्येति** । देवा इत्येतत्सामर्थ्यात् कार्मिकतात्त्विकविशेष्यम्। केचिच्छतोत्तराः केचिदयुतोत्तराः। सिद्धान्तो

**नाम कश्चित् ग्रन्थः । एवमुक्त-ऋषिच्छन्दोदेवतादिज्ञानपूर्वस्य वेद-स्वाध्यायादेः फलमित्थम्भावान्तरं च प्रमाणैर्दर्शयति स्वाध्याय इति । एतैर्विनेत्युक्तमेव व्यतिरेकान्वयाभ्यामुच्यते ।**

## टिप्पणी

**सुप्तिङिति** । सुप् तिङ् ग्रहेति गीतातात्पर्योदहृतमहाव्याकरणवाक्यमर्थतोऽनूदितं तत्रोपग्रहशब्दो विकरणार्थत्वेन व्याख्यातः । महाभाष्ये तु परस्मैपदात्मनेपदार्थत्वेन व्याख्यातः । नरशब्दस्य पुरुषेति व्याख्यानं तेन परमपुरुषादिर्गृह्यते । कालशब्देन भूतादिकालो ग्राह्यः । कर्तृशब्दः कारकमात्रपरः, अतस्तदर्थक कृत्तद्धितसमासेति व्याख्यातः । यङिति यङोपशब्दाल्लिङाशिष्यङिति ङकारेण प्रत्याहारः । सनादीनामप्युपलक्षणमिति भावेनोक्तं **सन्यङादीति** । करणं शब्दादि, लिङ्गं नपुंसकादि, पुरुषः प्रथमपुरुषादि, कालः लडादिप्रापकवर्तमानादिः । आदिपदेन परस्मैपदादिग्रहणम् । **परिगणनस्येति** । रूपादिपरिगणनस्येत्यर्थः । **निमित्तमिति** । श्रीब्रह्मादिप्रतियोगिकभेददर्शनरूपनिमित्तमाहेत्यर्थः । कैमुत्यादेवेति भाष्यस्य यदा चेतनैर्भेदो दृश्यते तदा जडैर्भेदो दृश्यत इति किमु वक्तव्यमिति कैमुत्यन्यायादेवेति प्रकृताभिप्रेतार्थो ज्ञेयः[1] । **उदाहृतेति** । आधिक्येऽधिकमित्येवेत्याद्युदाहृतेत्यर्थः । **नैवमिति** । संसारिवत् वैरूप्यं न किन्तु सर्वैरप्यभेद एवेत्यर्थसूचनाय भेदाभेदस्त्वित्यु ................ [2]शब्द इत्यर्थः । एवेत्यभेदपदेन पूर्वत्रश्रुतेनैवान्वेतीति ज्ञेयम् ।

पूर्वार्धगततुशब्दस्तु एवार्थकतया अभेदगुणाद्यैस्त्विति । अंशत इत्यस्यार्थः **एकैकांशेनेति** । अस्योभयमित्यनेनान्वयः । समुदायो

१. ज्ञेय इत्यर्थः ।    २. अत्र ग्रन्थपातः अस्तीति भाति ।

द्विविधः— संस्थानशब्दितव्यतिषङ्गविशेषरहितः, तद्विशिष्टश्चेति । तत्राद्ये समुदायेनेत्यस्य उभयमित्यनेनान्वयः । द्वितीये तस्यैवावृत्त्याभेदेत्यनेनान्वय इत्युपेत्य क्रमेणार्थमाह **संस्थानेत्यादिना** । विस्तृतं चैतद्वैशेषिकनयसुधायाम् 'अंशिनोंऽशौरभेदोऽयमंशेन तु भिदाभिदा' इत्येतद्व्याख्यानावसरे । **सामर्थ्यादिति** । मनुष्यगन्धर्वपितृगणयोर्देवत्वाभावात्तत्रानन्वितं सद्देवत्वं तद्योग्यकार्मिकतात्त्विकेषु विशेष्यतयान्वेतीत्यर्थः । **इत्थंभावान्तरं चेति** । विष्णुभक्त्यादिलक्षणेतिकर्तव्यतानन्तरं चेत्यर्थः । **उक्तमेवेति** । स्वाध्यायादिः [१]मोक्षसाधनमिति ज्ञेयम् । एतैर्विनेति वाक्येन व्यतिरेकान्वयाभ्यामुच्यत इत्यर्थः ।

### भाष्यम्

**ऋषिच्छन्दोदैवतानि ज्ञात्वाऽर्थं चैव भक्तितः ।**
**स्वाध्यायेनैव मोक्षः स्याद्विरक्तस्य हरिस्मृतेः ।**
**'जप्येनैव तु संसिद्ध्येद्ब्राह्मणो नात्र संशयः ।**
**कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते' ।**
**तस्मान्नित्यं हरिं ध्यायन्कुर्यात्स्वाध्यायमञ्जसा ।**
**ऐहिकामुष्मिका भोगा रक्तस्यान्यस्तु मुच्यते ।**
**इति स्वाध्यायवचनं स्वयं भगवतोदितम् ।**
**स्वाध्यायात्तु प्रवचने सहस्रगुणितं फलम् ।**
**अर्थद्रष्टुः कोटिगुणं ततोऽनन्तं नियामके ।**
**तर्कागमाभ्यां नियतिं यः करोत्यधिकं ततः ।**
**पूर्णं वेदाखिलद्रष्टुर्ब्रह्मणः फलमुच्यते ।**

---

१. मोक्षसाधनमित्युक्तमेव प्रमेयमेतैर्विनेति वाक्येन व्यतिरेकान्वयाभ्यामुच्यत इत्यर्थः - क ।

## टीका

**ऋषीति** वचनान्तरम् । हरिविषया स्मृतिर्यस्यासौ हरिस्मृतिः तस्य । एतेन छन्दोज्ञानमनुपयुक्तमिति कस्यचिन्मतं निराकृतं भवति । **जप्येनैवेति** वाक्यान्तरम् । जप्येनोक्तलक्षणेन संसिध्येत् मुक्तो भवेत् । कुतः मित्रदेवताकगायत्रीजपेनैव फलवत्त्वाद्धि मैत्रो ब्राह्मणः । **तस्मा-दित्यादि** स्वाध्यायाख्यग्रन्थगतं वाक्यम् । तस्मादित्युक्तमेव दर्शितम् **ऐहिकेति** । यथाश्रुतव्याख्यानादपि स्वयमर्थद्रष्टुरनन्तमनन्तगुणम् । बहुतरगुणमिति यावत् । नियामके स्वोक्तार्थस्य परं प्रत्युपदेशयितरि । आप्तिमात्रेणोपपादकादपि तर्कागमाभ्यां नियतिमुपपादनं यः करोति तस्याधिकं फलम् । यदैवं वेदार्थद्रष्टादिमात्रस्य महाफलं तदा ब्रह्मणः पूर्णं फलं किं वक्तव्यम् । वेदाखिलद्रष्टुरित्यखिलवेदतदर्थद्रष्टुरित्यर्थः । नियामकत्वं चात्र ग्राह्यम् ।

## टिप्पणी

**एतेनेति** । प्रमाणसिद्धत्वकथनेनेत्यर्थः । **उक्तलक्षणेनेति** । विष्णुभक्त्यादिविशिष्टेनेत्यर्थः । भक्त्यादिरहितजपस्य [१]निरर्थकत्वादिति भावः । **उक्तमेवेति** । निष्कामनया सर्वदा हरिध्यानपूर्वकस्वाध्यायकरणे हेतुत्वेनोक्तमेवेत्यर्थः । रक्तस्य विषयेष्वासक्तस्य ऐहिकामुष्मिकशब्दित-दारापत्यादि [२]स्वर्गादिभोगा भवन्तीति शेषः । अन्यस्तु अनासक्तस्तु मुच्यत इत्युक्त्या सकामनिष्कामभेदेन फलद्वयसत्त्वं तस्मादित्यनेनोक्तं विवृत-मित्यर्थः । **नियामकत्वं चेति** । स्वोक्तार्थस्य परं प्रत्युपपादयितृत्वं चेत्यर्थः ।

---

१. निष्कलत्वादिति - क ।　　२. स्वर्गादि इति नास्ति कपुस्तके ।

भाष्यम्

दार्ढ्यमेवानुदात्तार्थ उदात्तस्योच्चतार्थता ।
नीचता स्वरितस्यार्थः प्रचयस्य यथास्थितिः ।
समाहारेऽखिला अर्थाः स्वरार्थानामियं स्थितिः ।
स्तुत्यधर्मस्य भेदेन पदाद्यादिस्वरे भिदा ।
साधारणो विधिस्त्वेष विशेषो यत्र यत्र च ।
क्रमादेव तदन्येषामृष्यादीनां स्वयोग्यतः ।
विपर्ययार्थकथने विपरीतं तथा तमः ।
यावत्प्रयोजको ज्ञाने तावत्तावच्छुभाधिकः ।
तथैव विपरीतेऽपि स्मृतौ ज्ञाने च तत्समम् ।
तमोनिरयमानुष्यस्वर्गमोक्षातिरेकतः ।
योग्यतातारतम्येन फलं सर्वेषु चोच्यते'' ।
इति प्रवृत्तवचनं विवेकेऽप्येतदीरितम् ।
'यादृशो योग्यतां यायात्स ज्ञेयोऽर्थस्तथा स्फुटम् ।
अनन्तनियमैर्युक्ता अनन्तार्थविशेषिणः ।
वेदा इति समासेन नियमोऽयं समीरितः' ।
ऋक्संहितागतं वाक्यमिति चान्यन्नियामकम् ।
तस्माद्वन्द्याश्च पूज्याश्च ब्रह्माद्या ज्ञानयोजकाः ।
गुरुत्वेन क्रमेणैव विशेषेणैव केशवः ।
आरभ्य स्वगुरुं यावद्विष्णुरेवोत्तरोत्तराः ।
क्रमान्निष्फलताऽन्यत्र गुरुतत्त्वे समीरिता ।

टीका

वेदार्थज्ञानस्य फलमुक्तं वेदश्च स्वरवर्णात्मकस्तत्र स्वरा निरर्थका इति केषाञ्चिन्मतं तदसदिति भावेनाह **दार्ढ्यमेवेति** । स्वरवद्वर्णार्थस्य दार्ढ्यमित्यादि । **यथास्थितिरिति** वर्णार्थस्यानन्यथात्वमविकारित्वं दार्ढ्यादन्यत् । समाहारो नाम सामस्वर्यमङ्गीकुर्वाणैः पातञ्जलैः स्वर-विशेषो व्युत्पादितः । तस्याखिला अप्यर्थाः सन्ति । प्रकरणादिवशात् तद्विशेषग्रहणमित्याशयः । यद्वाऽनेकाक्षरे पदे स्वरसमाहारे सत्यखिला अप्यर्थाः प्रतिपत्तव्याः ।

नन्वेवं सति तत्र विरोधः स्यात् । एकस्य पदस्य ह्येकोऽर्थः अनेकाक्षरत्वादनेके स्वराः न ह्येकार्थस्योक्तानेकार्थैर्विशेषणं युक्त-मित्यत आह **स्तुत्येति** । एकस्मिन्नपि पदे नैकवर्णैः स्तुत्यानां भगवद्धर्माणामनेकत्वेन तत्तद्विशेषणार्थं पदस्यादिमध्यान्तस्वराणां भिदाभिन्नार्थत्वं न विरुद्धमित्यर्थः । उक्तं चैतन्न नियतमतोऽपि न विरोध इत्याह **साधारण इति** । विधिः प्रकारः स्वरार्थानाम् । अतो यत्र यत्र विशेष उच्यते तत्र तत्रोक्तः सोऽपि ग्राह्य इत्यर्थः । पुनर्वेदव्याख्यानस्येत्थंभावमाह **क्रमादेवेति** । उत्तमा ऋषयोऽशेषार्थान् पश्यन्ति । तदन्येषामृषीणां क्रमादेव स्वयोग्यतानुसारेण तत्तद्वाक्या-र्थज्ञानम् ।

इदमुक्तं भवति । यो योऽर्थो येन येनर्षिणा द्रष्टुं योग्योऽसा-वसावेव तत्तद्दृष्टतया ज्ञातव्यो न व्यत्यासेनेति । आदिपदेन देवताया-मप्येतज्ज्ञातव्यमित्युच्यते । वेदार्थव्याख्यानं च यथावस्तुकृतमेवोक्त-फलप्रदं नान्यथेति भावेनाह **विपर्ययेति** । विपर्ययेणार्थकथने विपरीतं

फलं भवति । किं तत् । तमस्तथा । तदसद्व्याख्याने च स्वाधिक्यानुसारेण फलप्रदे इत्याह **यावदिति** । ज्ञाने सज्ज्ञाने । विपरीते ज्ञान इति सम्बन्धः । स्मृतौ च सत्यां विपरीतायां च तदुक्तं सममित्यर्थः ।

ननु मोक्षादिकं हि तत्फलं तच्चैकप्रकारमिति कथमेतदित्यत आह **तम इति** । तमःप्रभृतीनामतिरेकतस्तारतम्यवत्त्वात् । सर्वेषु उक्तेषु व्याख्यात्रादिषु । प्रवृत्तवचनं स्वाध्यायादित्यादिकम् । विवेके विवेकाख्येऽपि ग्रन्थे । यद्येवं तर्हि वेदव्याख्यानमेवोपरम्यताम् । सदसदर्थविवेकस्य कर्तुमशक्यत्वादित्याशङ्कां स्मृत्या परिहरति **यादृश इति** । योग्यतां यायात् प्रमाणतस्तत्प्रतिपाद्यैरन्वितः स्यात् । सोऽर्थः । तथा सन् । ज्ञेय इत्यर्थः । नन्वेवं संक्षिप्य कस्मादुच्यते अत्रायं सन्नर्थ इति विस्तरेणैवोच्यतामित्यत आह **अनन्तेति** । नियमैर्व्याख्यानादीत्थंभावैः । अनन्ता अर्थविशेषा येषां सन्ति ते तथोक्ताः । नियमः सदसदर्थव्यवस्था । नियामकं विवक्षितार्थस्य प्रतिपादकम् । यत एवमसदर्थकथने महाननर्थस्तस्मात्प्रामादिकापराधपरिहाराय प्राचीनव्याख्यातृवन्दनादिकं कार्यमित्याह **तस्मादिति** । क्रमादित्युक्तं क्रममेव दर्शयति **आरभ्येति** । अन्यत्र अन्यथा । निष्फलता विपरीतफलता च । गुरुतत्त्वे गुरुतत्त्वाख्ये ग्रन्थे ॥

**टिप्पणी**

स्वरेति । उदात्तादि स्वरेत्यर्थः । ननु स्वरस्य कुत्र दार्ढ्यादिप्रतिपादकत्वमित्यत आह **स्वरवदिति** । [१]अनुदात्तस्वरवदित्यर्थः । [२]आदिपदेन अनुदात्तस्वरवद्वर्णार्थस्योच्यतेत्यादि ग्राह्यम् । उक्तेति ।

१. अनुदात्तादि – ख पाठः । २. आदिपदेनोक्तोदात्तस्वर – ख पाठः ।

उच्चत्वादिरूपानेकार्थोक्त्येत्यर्थः । **उक्तं चैतदिति** । समाहारे अखिला अर्था इत्येतदित्यर्थः । **देवभागा अपीति** । या देवता यद्वाक्यार्थतया प्रत्येतुं योग्या [1]सैव तद्वाक्यार्थे व्यत्यासेनेति योग्यतानुसारेण प्रतिपाद्यत्वं ज्ञातव्यमित्यर्थः । उत्तमदेवता तु सर्वप्रतिपाद्येति भावः । **सत्यमिति** । समीचीनायामित्यर्थः । तत्प्रतिपाद्यैरितरप्रमाणप्रतिपाद्यैरित्यर्थः । **संक्षिप्तेति** । यादृश इति संक्षिप्येत्यर्थः । अन्यत्रेत्यस्यार्थः **अन्यस्येति** । **गुरुतत्वे** गुरुतत्वाख्ये ॥

### भाष्यम्

**एवं स्थितेऽग्निगं विष्णुमग्निनामानमेव च ।**
**मधुच्छन्दा ऋक्शतेन वाय्वादिगतमेव च ।**
**साग्न्यादि स्तौति सद्भक्त्या तत्तन्नामानमेव च ॥**

### टीका

तत्किमग्न्यादिदेवता मधुच्छन्दःप्रभृतयः परोक्ता ऋषयश्च न भवन्त्येवेत्याशङ्कां परिहरन्नाद्यस्यर्क्शतस्य देवतामवान्तरमृषिं च वक्ति **एवं स्थित इति** । एवं प्रमाणतो निर्णीते सति । **तत्तन्नामानं** वाय्वादिनामानम् ।



---

१. सा तद्वाक्यार्थो न व्यासेनेति ।

# सूक्तम् – २

नवर्चम् । मधुच्छन्दाः ।
१-३ वायुः, ४-६ इन्द्र-वायू, ७-९ मित्रावरुणौ । गायत्री ।

मंत्रः – १०
(अ.१, सू.२, मं.१)

**वायवा याहि दर्शते मे सोमा अरंकृताः ।**
**तेषां पाहि श्रुधी हवंम् ॥**

पदपाठः

वायो इति । आ । याहि । दर्शत । इमे । सोमाः ।
अरंम्ऽकृताः । तेषांम् । पाहि । श्रुधि । हवंम् ॥

भाष्यम्

**बलत्वादयनाच्चैव वायुरित्यभिधीयते ।**
**वात्यायुरिति वा ज्ञानाद्धरणादाश्रयत्वतः ।**
**वय बन्धन इत्यस्मात्संसारादेर्व्ययादपि ।**
**व्ये(व्यै)त्यस्मिन्निति वा वायुर्वयश्रेष्ठत्व इत्यपि ।**
**मुख्यतो वासुदेवे ते गुणाः सन्त्येव सर्वशः ।**
**अनिषिद्धास्तदन्येषु यथायोग्यतया मताः ।**
**दर्शतस्ततदृष्टित्वात्सर्वज्ञोऽसौ यतो विभुः ।**
**भक्त्याद्यलङ्कृताः सोमा मनांस्यन्ये हिरण्यतः ।**
**हिरण्यालङ्कृता यस्माद्धूयन्ते वायवे सुताः ।**

**तान्पाहि श्रुधि चाह्वानं स्वातन्त्र्ये व्यत्ययोऽप्ययम् ।**
**मनोऽपि भोग्यमीशस्य प्रीतिमात्रेण केवलम् ।**
**गुणाधिक्यं येन भवेद्वेदस्यार्थः स एव हि ।**
**प्रयोजकत्वान्नान्यस्य फलाभावात्तदर्थता ।**
**उपक्रमादयो यत्र तात्पर्यार्थस्स एव हि ॥ १० ॥**

टीका

एवमग्निमीळ इत्यादि नवर्चमाग्नेयं सूक्तं व्याख्यायोपयुक्तं च प्रमेयमभिधा(याथेदा)येदानीं वायवायाहीत्यादि नवर्चं सूक्तं व्याख्यातव्यम् । तत्राद्यस्तृचो वायव्यः तत्र वायुशब्दं व्याचष्टे बलत्वादिति । बशब्दो बलवाची । न तत्र व्युत्पादनापेक्षेत्येवशब्दः । अयनाद्गमनकर्तृत्वात् । अयतेरिणो वोण्प्रत्ययः । वश्चासावायुश्चेति वायुः । वाति गच्छत्यायुश्च लोकस्य प्राणधारणहेतुत्वात् । वातेः कप्रत्ययः । इणश्छन्दसीतीण उण् । पूर्ववद्विग्रहः । ज्ञानात् ज्ञानकर्तृत्वात् । वातेर्गत्यर्थत्वेन ज्ञानार्थत्वात् 'कृवापाजी'त्यादिना कर्तर्युण् । 'आतोयुक् चिण्कृतोः' । वाति जानातीति वा वायुः । वरणात्स्वीकरणात् । वृणोतेः कर्तरि कर्मणि वा डायुप्रत्ययः । वृणोति व्रियते वेति वायुः । आश्रयत्वत इति वातेरधिकरण उण्प्रत्ययः । वान्ति गच्छन्ति प्रवर्तन्तेऽस्मिन्निति वायुः । वयबन्धन इत्यस्माद्धातोः कर्तर्युणि कृते बन्धकत्वाच्च वायुर्भवति । व्ययाद्विनाशात् । विपूर्वादयतेरुकारप्रत्ययः । उपसर्गेकारस्य चाकारः । संसारादेरिति योग्यतया सम्बन्धः । व्ययते विनश्यत्यनेनेति वायुः । व्येति लीयते । विपूर्वादिणोऽधिकरणे पूर्ववदुण् । वयश्रेष्ठत्व इति धातोरुणि कृते श्रेष्ठत्वादपि वायुः । श्रेष्ठत्वं नाम (मैत) तद्व्यापारो

विवक्षितः । गडिवदनैकदेश इति यथा । एतद्व्याख्यानं भगवतीव किं तदन्यदेवतायामपि ज्ञातव्यमित्यत आह **मुख्यत इति** ।

अनिषिद्धाः ये भगवतो लक्षणभूता न भवन्ति । तदन्येष्विति बहुवचनेनाग्न्यादिशब्दव्याख्यानेऽप्ययं न्यायो बोद्धव्य इत्याह **ते च यथायोग्यतयैव** । न तु निरतिशयाः । तथात्वे पुनर्भगवल्लक्षणत्वापत्तेः । दृशेर्भावे घञ् तनोतेर्डः दर्शो दर्शनं तेन तः ततः । दर्शत इत्यस्य तात्पर्यं **दर्शतस्ततदृष्टित्वादिति** । तदुपपादयति **सर्वज्ञ इति** । **मनांसि** इत्यध्यात्मम् । अन्ये बहिष्ठाः हिरण्यत इत्युपपादयति **हिरण्येति** । सुताः सोमाः । पाहि पिब । श्रुधि शृणु । तेषामित्येतत् तानिति व्याख्यातम् । तत्रायं विभक्तिव्यत्ययः किंनिमित्त इत्याह **स्वातन्त्र्य इति** । त्वदीयानेव सोमांस्त्वं पिबेत्युक्तं भवति । अपिपदेन श्रुधीति संहितायां दैर्घ्यमुक्तार्थाधिक्ये इति समुच्चिनोति । यद्यध्यात्मं मनः सोमः कथं तर्हि तस्य पानमित्यत आह **मनोऽपीति** ।

ननु तेषां पाहीत्यत्र विभक्तिव्यत्ययमङ्गीकृत्य स्वातन्त्र्ये व्याख्यानादपि वरं तेषामंशं पाहीति व्याख्यानमिति तत्राह **गुणाधिक्यमिति** । भवेत् देवतायां ज्ञापितमिति शेषः । येनार्थेन व्याख्यातेन । प्रयोजकत्वात् फलवत्त्वात् । अन्यस्य गुणाधिक्यविरोधिनः । फलाभावात् तदर्थता वेदार्थता नास्ति । ज्ञातगुणाधिक्यो हि परमेश्वरः फलं प्रयच्छति । गुणाधिक्यं च विभक्तिव्यत्यय एव भवतीति भावः । फलवत्त्वेऽप्यनेनार्थेन भवितव्यमित्यत्र किं नियामकमिति तत्राह **उपक्रमादय इति** । यत्र यस्यार्थस्यानुकूलाः उपक्रमादयः खल्वर्थस्य निश्चायकाः । तत्र च फलं सर्वाधिकमिति । ततश्चैवं योजना । हे दर्शत वायो

**आध्यात्मिकं बाह्यं च यज्ञं प्रत्यायाहि। किमिति। अध्यात्मं मनोवृत्तयो भक्त्यादिभिः बहिः प्रसिद्धाः हिरण्येनारङ्कृताः अलङ्कृता इमे सोमाः सन्ति तेषां तान्। पाहि पिब। छान्दसः पिबादेशाभावः। हवमाह्वानम्। भावेऽनुपसर्गस्येति शब्दार्थात् ह्वयतेर्भावे अप्प्रत्ययः। सम्प्रसारणं च। श्रुधि शृणु। आगमनेन सफलं कुरु। 'श्रुशृणुपृकृवृभ्यश्छन्दसी'ति हेर्धिर्विकरणाभावश्च॥ १०॥**

## टिप्पणी

## वायुशब्दनिर्वचनम्

**आद्यस्तृच इति**। तिस्रः ऋचो यस्मिन् समुदाये स तृच इत्यर्थः। तृचशब्दनिष्पत्तिप्रकार अग्नेयं यज्ञमध्वरमित्यास्यामृचि मया उपपादित इति तत्रैव ज्ञेयम्। **वायव्य इति**। वायुदेवताक इत्यर्थः।

वायुर्देवता अस्येति देवतार्थे वायुशब्दात् यत्प्रत्यये 'ओर्गुणः' इति गुणे वान्तो यि प्रत्यय इत्यवादेशे वायव्यशब्दनिष्पत्तिर्ज्ञेया। **अयतेरिति**। अय गतौ इणगतौ आभ्यामणप्रत्यये आद्यस्य 'अत उपधायाः' ति वृद्धौ, द्वितीयस्य 'अचो ञ्णिति' इति वृद्धौ 'एचोऽयवायावः' इत्यायादेशे आयुरिति रूपमिति ज्ञेयम्। **कृवापाजीति**। 'कृवापाजिमिस्वदिसाध्यशऊभ्य उण्' इत्यौणादिकाद्यपादीयप्रथमसूत्रे वृत्तौ डुकृञ् करणे, पा पाने, वा गतिगन्धनयोः, जि जये, डुमिञ प्रक्षेपणे, स्वदि आस्वादने, राधसाध संसिद्धौ, अशू व्याप्तौ एतेभ्यः धातुभ्यः लुप्तानुबन्धेभ्य उणप्रत्ययो भवतीत्युक्तत्वेन प्रकृते वा गति गन्धनयोरिति धातोः कर्त्रर्थे उणप्रत्यये सति 'हलन्त्यम्' इत्युणप्रत्यय-णकारलोपे तस्मिन् प्रत्यये परतः 'आतो युक् चिण् कृतोः' इति सूत्रेण धातोर्युगागमे ककारोकारयोर्लोपे वायुरिति रूपमिति भावः। आतो युक्

चिण् कृतोः' इति सूत्रस्यायमर्थः— आकारान्तस्याङ्गस्य युगागमो भवति चिणि परतः कृति ञिति णिति[1] च प्रत्यये परत इति। स च युगागमः 'आद्यन्तौ टकितौ' इति धातोरन्त्यतया भवतीति ज्ञेयम्। कर्तरि कर्मणि चेत्युक्तं विवृणोति विवृणोतीति। वातेरधिकरण इति पूर्ववद्युगागम इति ज्ञेयम्। [2]आकारस्य चकारः। पूर्ववदिति। 'इणश्छन्दसि' इति सूत्रेणेत्यर्थः। वातेरिति वेति वा।

ननु श्रेष्ठत्वस्याक्रियारूपत्वात् कथं धात्वर्थत्वमित्यत आह **श्रेष्ठत्वं नामेति**। गडीति शाब्दिकैर्वदनैकदेशव्यापारस्यैव धात्वर्थत्वाङ्गीकारादिति भावः। ननु वायोरेकत्वात्तदन्येष्विति बहुवचनं कथमित्यत आह **तदन्येष्वितीति**। तनोतेरिति कर्मणि 'उ'प्रत्ययः॥ १०॥

**मंत्रः – ११**

(अ.१, सू.२, मं.२)

**वाय उक्थेभिर्जरन्ते त्वामच्छा जरितारः।**
**सुतसोमा अहर्विदः॥**

**पदपाठः**

**वायो इति। उक्थेभिः। जरन्ते। त्वाम्। अच्छ। जरितारः। सुतऽसोमाः। अहःऽविदः॥**

---

१. णिति इति नास्ति – क पुस्तके। २. अकार इति तथा च अकस्सवर्णे दीर्घ इति दीर्घे वायुरिति रूपसिद्धिः। ननु 'अतो गुण' इति पररूपेण भाव्यमिति वाच्यम्, अपदान्तत्वाभावात् आकार इति विच्छेदः कार्यः। विपूर्वादिति पूर्ववदुपसर्गेऽकारस्य चाकारः।

भाष्यम्

**स्तुवन्ति शस्त्रैः स्तोतारो यथावद्यज्ञवेदिनः ॥ ११ ॥**

टीका

हे वायो ! सुतः सोमो यैस्ते सुतसोमाः । अच्छेति निपातोऽभेरर्थे वर्तते । अहरिति यज्ञोपलक्षणम् । अच्छाहर्विदोऽभितो यथावद्यज्ञवेदिनः । **जरितारः** स्तोतारः । स्तोतृनामसु पाठात् । उक्थेभिरुक्थैः शस्त्रैस्त्वां जरन्ते स्तुवन्ति । स्तुतिकर्मसु पाठात् ॥ ११ ॥

टिप्पणी

अर्चति कर्मस्विति । स्तुतिकर्मस्वित्यर्थः । ऋच स्तुताविति धातोः । यद्वा पूजा कर्मस्वित्यर्थः । अर्च पूजायामिति धातोः । तथा च स्तुतेरपि पूजाविशेषत्वादिति भावः ॥ ११ ॥

**मंत्रः – १२**

(अ.१, सू.२, मं.३)

**वायो तव॑ प्रपृ॒ञ्च॒ती धेना॑ जिगाति दा॒शुषे॑ ।**
**उ॒रू॒ची सोम॑पीतये ॥**

पदपाठः

वायो॒ इति॑ । तव॑ । प्र॒ऽपृ॒ञ्च॒ती । धेना॑ । जि॒गा॒ति॒ । दा॒शुषे॑ । उ॒रू॒ची । सोम॑ऽपीतये ॥

चिण् कृतोः' इति सूत्रस्यायमर्थः— आकारान्तस्याङ्गस्य युगागमो भवति चिणि परतः कृति ञिति णिति[1] च प्रत्यये परत इति । स च युगागमः 'आद्यन्तौ टकितौ' इति धातोरन्त्यतया भवतीति ज्ञेयम् । कर्तरि कर्मणि चेत्युक्तं विवृणोति **विवृणोतीति** । वातेरधिकरण इति पूर्ववद्युगागम इति ज्ञेयम् । [2]आकारस्य चकारः । **पूर्ववदिति** । 'इणश्छन्दसि' इति सूत्रेणेत्यर्थः । वातेरिति वेति वा ।

ननु श्रेष्ठत्वस्याक्रियारूपत्वात् कथं धात्वर्थत्वमित्यत आह **श्रेष्ठत्वं नामेति** । गडीति शाब्दिकैर्वदनैकदेशव्यापारस्यैव धात्वर्थत्वाङ्गीकारादिति भावः । ननु वायोरेकत्वात्तदन्येष्विति बहुवचनं कथमित्यत आह **तदन्येष्वितीति** । तनोतेरिति कर्मणि 'उ'प्रत्ययः ॥ १० ॥

**मंत्रः – ११**

(अ.१, सू.२, मं.२)

**वाय॑ उ॒क्थेभि॑र्जरन्ते॒ त्वाम॒च्छा॑ ज॒रि॒तार॑ः ।**
**सु॒तसो॑मा अ॒ह॒र्विद॑ः ॥**

**पदपाठः**

**वायो॒ इति॑ । उ॒क्थेभि॑ः । ज॒रन्ते॒ । त्वाम् । अच्छ॑ ।**
**ज॒रि॒तार॑ः । सु॒तऽसो॑माः । अ॒ह॒ःऽविद॑ः ॥**

---

१. णिति इति नास्ति – क पुस्तके । २. अकार इति तथा च अकस्सवर्णे दीर्घ इति दीर्घे वायुरिति रूपसिद्धिः । ननु 'अतो गुण' इति पररूपेण भाव्यमिति वाच्यम्, अपदान्तत्वाभावात् आकार इति विच्छेदः कार्यः । विपूर्वादिति पूर्ववदुपसर्गेऽकारस्य चाकारः ।

भाष्यम्

**स्तुवन्ति शस्त्रैः स्तोतारो यथावद्यज्ञवेदिनः ॥ ११ ॥**

टीका

हे वायो ! सुतः सोमो यैस्ते सुतसोमाः । अच्छेति निपातोऽभेरर्थे वर्तते । अहरिति यज्ञोपलक्षणम् । अच्छाहर्विदोऽभितो यथावद्यज्ञवेदिनः । **जरितारः** स्तोतारः । स्तोतृनामसु पाठात् । उक्थेभिरुक्थैः शस्त्रैस्त्वां जरन्ते स्तुवन्ति । स्तुतिकर्मसु पाठात् ॥ ११ ॥

टिप्पणी

अर्चति कर्मस्विति । स्तुतिकर्मस्वित्यर्थः । ऋच स्तुताविति धातोः । यद्वा पूजा कर्मस्वित्यर्थः । अर्च पूजायामिति धातोः । तथा च स्तुतेरपि पूजाविशेषत्वादिति भावः ॥ ११ ॥

मंत्रः – १२

(अ.१, सू.२, मं.३)

**वायो तव प्रपृञ्चती धेना जिगाति दाशुषे ।**
**उरूची सोमपीतये ॥**

पदपाठः

वायो इति । तव । प्रऽपृञ्चती । धेना । जिगाति ।
दाशुषे । उरूची । सोमऽपीतये ॥

भाष्यम्

**वाक्त्वत्सम्पर्किणी यज्ञकृते प्रापयतीप्सितम् ।**
**सोमपायातिमहती महार्थत्वात्त्वदर्थतः ॥ १२ ॥**

टीका

हे वायो ! तव त्वाम् । प्रपृश्चती पृची सम्पर्के । त्वत्सम्पर्किणी त्वत्स्तुतिरूपा । उरूची अतिमहती । आधिक्येऽधिकमित्युक्तत्वात् । धेना वाक् वाङ्नामसु पाठात् । सोमपीतये सोमस्य पीतिर्यस्येति व्यधिकरणो बहुव्रीहिः । तस्मै सोमपाय । 'आतोऽनुपसर्गे कः' । दाशुषे यज्ञकृते । निपातनात्साधुः । जिगाति । गतिकर्मायम् । अन्तर्णीतण्यर्थश्च प्रापयति । ईप्सितमिति शेषः । कथं वाचोऽतिमहत्वं महार्थत्वात् अतिमहार्थत्वात् । तदपि कुतः त्वदर्थः त्वदर्थत्वात् । त्वं ह्यतिमहान् । अनेन यतस्तव प्रपृश्चती तत एवोरूचीत्युक्तं भवति । यद्वा महार्थत्वादित्युरुमं चतीत्युरूचीशब्दस्य निर्वचनान्तरम् । तस्योपपादनं त्वदर्थत इति । त्वत्स्तुतिर्हि यजमानाभीप्सितसाधनस्वभावा अतः स्तुवतामस्माकमभीप्सितं कुर्विति ॥ १२ ॥

टिप्पणी

आधिक्येति । उरुशब्दप्रयोगे कर्तव्ये तदर्थकतया उरुचीपदप्रयोगेण अतिमहत्वं लभ्यत इति भावः । निपातनादिति । 'दाश्वान् सौढ्वान् मीढ्वांश्च' इति निपातनादित्यर्थः ॥ १२ ॥

मंत्रः – १३
(अ.१, सू.२, मं.४)

इन्द्रवायू इमे सुता उप प्रयोभिरा गतम् ।
इन्दवो वामुशन्ति हि ॥

पदपाठः

इन्द्रवायू इति । इमे । सुताः । उप । प्रयःऽभिः ।
आ । गतम् । इन्दवः । वाम् । उशन्ति । हि ॥

भाष्यम्

इन्द्रः स परमैश्वर्यादिदमुद्दिश्य च द्रुतेः ।
ददर्शेदं दीप्तिमत्त्वादिदं रातीति वा भवेत् ।
सोमाभिमानिनो देवा वामिच्छन्ति हि सोमगाः ।
प्रियैरुपागतं तेनोपेन्द्रः सङ्कर्षणो हरिः ।
द्विरूपत्वाद्बहुत्वं च विशेषादेव केवलम् ।
एकस्यैव हरेर्नात्र भेदः शङ्क्यः कथञ्चन ।
'एकमेवाद्वितीयं तं' 'नेह नानास्ति किञ्चन' ।
'मृत्योः स मृत्युमाप्नोति' 'य हि नानेव पश्यति' ।
'यथोदकं दुर्गे वृष्टं पर्वतेषु विधावति ।
एवं धर्मान्पृथक्पश्यंस्तानेवानु विधावति' ।
उक्त्वा धर्मान्पृथक्त्वस्य निषेधादेवमेव हि ।
विशेषो ज्ञायते श्रुत्या भेदादन्यश्च साक्षितः ॥ १३ ॥

## टीका

द्वितीयस्तृच ऐन्द्रवायवः । अत्रेन्द्रशब्दं व्याख्याति इन्द्र इति । इन्दतेः परमैश्वर्यार्थादौणादिको रप्रत्ययः । इदं विषयजातमुद्दिश्य द्रुतेर्द्रवणात्सर्वविषयोपभोगाच्चेन्द्रः । इदंशब्दोपपदात् ऋगतावित्यस्माड्डुः । उपपदस्य चेमित्यादेशः । इदं सर्वं ददर्शेति चेन्द्रः । पूर्ववत् दृशेर्डः । तथा च श्रुतिः 'इदमदर्शमि'त्यादि । दीप्तिमत्त्वाच्चेन्द्रः । इन्धी दीप्तावित्यस्माद्रप्रत्ययः । धस्य चदः । 'इन्धो ह वै नामेत्या'दि श्रुतेः । इदमभीष्टं राति ददातीति वा निर्वचनं भवेत् । रातेः कः । इदमश्चेन्दादेशः । हे इन्द्रवायू इमे सुताः सोमाः सम्पादिताः सन्ति ते चेन्दवः सोमाः सोमानामचेतनत्वाद् बहिः सोमगाः सोमाभिमानिनो देवाः । अध्यात्ममस्मन्मनोवृत्तयो हि यस्माद्वां युवामुशन्ति इच्छन्ति युवयोरागमनं कामयन्ते । तेन कारणेन । प्रयोभिः प्रेयोभिः । ईयसुन ईकारस्याकारः । अतिशयेन प्रियैः सहोपागतमुपागच्छतम् । छान्दसः छत्वाभावः । अत्रेन्द्रवायुशब्दाभ्यां विवक्षितं भगवद्रूपद्वयमाह उपेन्द्र इति । इन्द्रशब्देनोपेन्द्रो वायुशब्देन सङ्कर्षणो हरिरुच्यत इत्यर्थः ।

ननु परमेश्वरे द्विवचनं कथमित्यत आह द्विरूपत्वादिति । नन्वेकस्यैव हरेर्द्विरूपत्वं च कथम् । द्वित्वस्य भेदाविनाभूतत्वात् । तत्राह बहुत्वं चेति । चशब्देन द्वित्वम् । बहुत्वग्रहणमन्यत्र बहुवचनसम्पादनार्थम् । द्विवचनादिकं भेदेनैव सम्पाद्यतामित्यत आह नात्रेति । कथञ्चन केवलोऽभेदसहितश्च । कुत इति चेत् श्रुतिविरोधादित्याह एकमेवेति । अनेन विग्रहभेदोऽपि द्विवचनादिविषयो निरस्तः । भेदं विना विशेषमात्रेणैव द्विवचनादिकं घटत इत्ययुक्तम् ।

**भेदादन्यस्य विशेषस्यैवाप्रमाणिकत्वादिति। तत्राह उक्त्वेति। तं दुर्दर्शमित्यादिना काठके परमेश्वरस्यानेकान् धर्मानुक्त्वैकमेवाद्वितीयमित्येवं पुनः पृथक्त्वस्य निषेधात् भेदादन्यो विशेषो भगवति श्रुत्या ज्ञायते। अखण्डत्वे धर्मकथनानुपपत्तेः। भेदे च निषेधायोगात्। किं च घटादौ भेदादन्यो विशेषः साक्षितश्च ज्ञायत इति॥ १३॥**

**टिप्पणी**

**ऐन्द्रवायव इति।** इन्द्रश्च वायुश्च इन्द्रवायू तौ देवते यस्य स ऐन्द्रवायवः। इन्द्रवायुशब्दात् 'सास्य देवता' इत्यण्प्रत्यये आदिवृद्धौ वायुशब्दोकारस्य गुणेऽवादेशे ऐन्द्रवायव इति रूपसिद्धिरिति ज्ञेयम्। इन्द्रशब्दस्य 'देवताद्वन्द्वे च' इति प्राप्तानङादेशस्तु उभयत्र वायोः प्रतिषेधवचनान्न प्रवर्तत इति ज्ञेयम्। अत्र देवतात्वस्येन्द्रवाय्वोः व्यासक्तत्वेन केवलवायोः देवतात्वाभावात् केवलवायुशब्दादेव 'वाय्वृतुपित्रुषसो यत्' इति यत्प्रत्ययविधानेन वायुशब्दान्तात् यत्प्रत्ययाप्राप्तेः ऐन्द्रवायव इत्यणन्ततयैव निर्देशः कृतः। अत एव याजुषशाखायां 'वायव्यं श्वेतमालभेत भूतिकामः' इत्यादौ केवलवायुशब्दादेव यत्प्रत्ययो दृश्यते। ऐन्द्रवायवो गृह्यते, ऐन्द्रवायवाग्रान् ग्रहान् गृह्णीयात्' इत्यादौ अणप्रत्यय एव दृश्यत इति ज्ञेयम्।

**इत्यादीति।** 'इदमदर्शम्' इतीञ् तस्माद् [1]इन्द्रो नाम 'इन्द्रो ह वै नाम तमिदन्त सन्तमिन्द्र इत्याचक्षते' इत्यैतरेयकश्रुतिरित्यर्थः। इत्यादिश्रुति-

---

१. तस्मादिदब्दो नामेदन्द्रो ह वै नाम तमिदन्द्रं सन्तमिन्द्र इत्याचक्षते परोक्षेण परोक्षप्रिया इव हि देवाः परोक्षप्रिया इव हि देवाः।

—महैतरेयोपनिषत् २ प्रघट्टक अध्याय ३।

रिति । इन्द्रो ह वै नाम[१] योऽयं दक्षिणेऽक्षन् पुरुषः तमिन्धं सन्तमिन्द्र इत्याचक्षते परोक्षेण' इति काण्वश्रुतेरित्यर्थः । रातेरिति । रा दान इति धातोः कप्रत्यये 'लशक्वतद्धिते' इति ककारलोपे 'आतो लोप इटि च' इत्याकारलोपे 'र' इति रूपमिति ज्ञेयम् ।

ननु प्रियशब्दस्येयसुन् प्रत्यये परतः 'प्रियस्थिरस्फिरोरुबहुल गुरुवृद्ध-तृप्तदीर्घवृन्दारकाणां प्रस्थस्फवर्बंहिगर्वर्षित्रद्राघिवृन्दाः' इति सूत्रेण प्रेत्यादेशे सति इष्ठेमेयस्सु परतः 'टे' इति प्राप्तटिलोपस्य 'प्रकृत्यैकाच्' इति प्रकृति-भावेन निषेधे आद्गुण इति गुणे प्रेयोभिरिति स्यात् । कथं प्रयोभिरिति श्रुतौ निर्देश इत्यत आह ईयसुन् । तथा च ईकारस्य छान्दस अकारादेशे अतो गुण इति पररूपत्वे प्रयोभिरिति रूपसिद्धिरिति ज्ञेयम् । ननु प्रकृति-भावेन यथा टिलोपस्य प्रतिषेधः तथा 'आद्गुण' इति प्राप्तगुणस्य 'अतोगुण' इति पररूपस्य च प्रतिषेधः कस्मान्न भवति । मैवम्, [२]आधिकाराय कार्यस्यैव प्रतिषेधो नान्यस्य, अन्यथा वृत्त्यादौ श्रेष्ठः श्रेयानित्याद्युदाहरण-कथनानुपपत्तेरिति ज्ञेयम् ।

अन्यत्रेति । यस्मिन् 'पञ्चपञ्चजना' इत्यादि श्रुतावित्यर्थः । तस्याः भगवत्परस्य 'न सङ्ख्योपसङ्ग्रहात्' इति सूत्रे निर्णीतत्वादिति ज्ञेयम् । अत्रापि 'ओमासश्चर्षणी धृत' इत्यादावपीति ज्ञेयम् । अनेनेति । 'एकमेव' इत्यादि श्रुतिकथनेनेत्यर्थः । विग्रहेति । रामकृष्णादिविग्रहभेद इत्यर्थः । इत्यादि-नेति । 'तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्टं पुराणम्, आध्यात्मयोगाधि-गमेन देव मत्वा धीरो हर्षशोकौ जहाति' इत्यादिनेत्यर्थः ॥ १३ ॥

---

१. इन्धो ह वै नामैष योऽयं दक्षिणेऽक्षन् पुरुषस्तं वा एतमिन्धं सन्तमिन्द्र इत्या-चक्षते परोक्षेणैव परोक्षप्रिया इव हि देवाः प्रत्यक्षद्विषः । —बृह.अध्या.६ ब्रा.२.

२. नाधिकाराय ।

मंत्रः – १४

(अ.१, सू.२, मं.५)

**वाय॒विन्द्र॑श्च चेतथः सु॒ताना॑ वाजिनीवसू ।**
**तावा या॑त॒मुप॑ द्र॒वत् ॥**

पदपाठः

वायो॒ इति॑ । इन्द्र॑ः । च॒ । चे॒त॒थ॒ः ।
सु॒ताना॑म् । वा॒जि॒नी॒व॒सू॒ इति॑ वाजिनीऽवसू ।
तौ । आ । या॒त॒म् । उप॑ । द्र॒वत् ॥

भाष्यम्

**विजानतः सुतानन्नपतौ सूर्ये सदा स्थितौ ।**
**द्रवद्द्रुतं सुतात्पर्यद्योतकोऽभ्यास इष्यते ॥ १४ ॥**

टीका

हे वायो ! वाजमन्नं तदेव वाजि तृतीयोऽतिशाय इत्युक्तत्वात् । तन्नयतीति वाजिनीः सूर्यः । स हि वर्षणादिनाऽन्नं प्रवर्तयति । 'सत्सूद्विषे'त्यादिना क्विप् । तत्र वसत इति वाजिनीवसू । वसतेरुः । अन्नपतौ सूर्ये सदा स्थितौ । इन्द्रः चशब्दात्त्वं च । सुतानां सुतान् । चेतथः चितीसंज्ञाने विजानतः विजानीथः । द्विविकरणतावर्ण-व्यत्ययश्च छान्दसः । अस्मत्स्वीकारयोग्या भवन्तीमे सोमा इति युवां विजानीथः । अतः कारणात् द्रवत् द्रुतम् । क्षिप्रनामसु पाठात् । तौ युवामुपायातम् । यद्वा चेतथश्चेततो विजानतो युष्मत् ज्ञानिनो

**यजमानस्य सुतानुपायातमिति योज्यम् । वायवायाहि उपप्रयोभिरागतं तावायातमिति पुनरुक्तिरित्यत्र आह सुतात्पर्येति ॥ १४ ॥**

### टिप्पणी

द्विविकरणता । [१]श्नाविकरणता श्नाविकरणता चेत्यर्थः । तथा च 'लशक्वतद्धिते' इति शप्रत्यय शकारलोपे 'तिङशित्सार्वधातुकम्' इति सार्वधातुकसंज्ञायां 'सार्वधातुकमपित्' इति ङित्वे तस्मिन् परतः 'श्नाभ्यस्तयोरातः' इत्याकारलोपे थकारस्य वर्णव्यत्ययेन तकारे विजानत इति भाष्ये निर्देश इति ज्ञेयम् । यद्यपि ज्ञा अवबोधने इति धातोः क्र्यादित्वेन 'क्र्यादिभ्यः ना' श्नाविकरणता स्वतः प्राप्तैव तथापि शप्रत्ययश्च छान्दस इति भावः । यद्वेति । अस्मिन् पक्षे ऋचि चेतथ इत्यत्र शतृप्रत्ययतकारस्य थकारमात्रं व्यत्यासेन न तु भाष्ये व्यत्ययादिकमिति ज्ञेयम् । ॥ १४ ॥

### मंत्रः – १५

(अ.१, सू.२, मं.६)

**वायविन्द्रश्च सुन्वत आ यातमुप निष्कृतम् ।**
**मक्ष्वि१त्था धिया नरा ॥**

### पदपाठः

**वायो इति इन्द्रः । च । सुन्वतः । आ । यातम् ।**
**उप । निःऽकृतम् । मक्षु । इत्था । धिया । नरा ॥**

---

१. शविकरणता – इति पा० ।

भाष्यम्

**यजन्सुन्वन्कृतस्यानुसारि कर्मैव निष्कृतम् ।**
**तदर्थं क्षिप्रमायातं धियेत्थंभूतयाऽचलौ ।**
**नरौ तावविनाशित्वादुपचारः क्वचिद्भवेत् ।**
**अमरत्ववद्यतो मोक्षो देवतानां सुनिश्चितः ॥ १९ ॥**

टीका

सुन्वत इति व्याख्याति **यजन्निति** । यजन्यजमानः सुन्वन्नित्युच्यते । ऋत्विग्भिः क्रियमाणस्यापि सवनस्य यजमानार्थत्वात् । सुन्वानिति क्वचित्पाठः । तत्र दीर्घश्छान्दसः । निष्कृतशब्दार्थमाह **कृतस्येति** । यद्वै निष्कृतं तत्संस्कृतमाहेति श्रुतावप्ययमेवार्थः । कृतप्रतीकारेऽस्य शब्दस्य रूढत्वादित्येवार्थः । विभक्त्यर्थमाह **तदर्थमिति** । हे वायो ! नरा नरौ । सुपांसुलुगित्यादिना प्रथमाद्विवचनः स्यात् । युवामिन्द्रश्च त्वं च । सुन्वतो यजतो । निष्कृतं तत्कृतपूजानुसारिफलदानं प्रति तदर्थं तत्कर्तुम् । इत्था इत्थंभूतया ददान्येवास्मै फलमित्येवंभूतया धिया । मक्षु क्षिप्रं तन्नामसु पाठात् । उपायातम् । नरौ तावित्यनूद्याचलाविति व्याख्यातम् । निर्विकारौ । ला परिवर्तने । ततो न पूर्वात्कः । अविनाशित्वादित्यर्थान्तरम् । रीङ् क्षये रिषहिंसायां ततो डः । किमेवं नरशब्दव्याख्यानं सर्वत्र नेत्याह **उपचार इति** । क्वचित्प्रसिद्धे वायाविन्द्रे च । उपचारो गौणी वृत्तिः । विष्णावेव च मुख्यता । अमरत्ववत् । न हि देवानां मुख्यतो मरणाभावः । उपचारे बीजमाह **यत इति** । मोक्षे चाविनाशित्वं नियतमिति सर्वदाप्युपचर्यत इत्यर्थः ॥ १९ ॥

**टिप्पणी**

ननु सोमाभिषवकर्ता हिं सुन्वन्नित्युच्यते, सोमाभिषवश्च ऋत्विग्भिः क्रियते तत्कथं यजमानः सुन्वन्नित्युच्यते, इत्यत आह ऋत्विग्भिरिति । प्रयोजककर्तृत्वात्तस्येति भावः ।

ननु 'यद्वै निष्कृतं तत्संस्कृतमाह' इति श्रुतौ यन्निष्कृतमिति शब्दरूपं तत्संस्कृतमाहेति निष्कृतशब्दस्य संस्कृतार्थत्वोक्तेः, कथं कृतानुसारिकमार्थकत्वं निष्कृतशब्दस्य उच्यत इत्यत आह यद्वै निष्कृतमिति । अयमेवार्थ इति । तथा च 'आयातमुपनिषत्कृतम्' इति मन्त्रव्याख्यानपराया यद्वै निष्कृतमिति श्रुतेः निष्कृतशब्दतात्पर्यमादाय [१]प्रवृत्तेर्भाष्यस्य रूढार्थमादाय प्रवृत्तेः न विरोध इति भावः ।

विभक्त्यर्थमिति । द्वितीयाविभक्त्यर्थमित्यर्थः । अत एव प्राक् निष्कृतशब्देति प्रातिपदिकमात्रानुवादः कृतः । तदर्थमिति । तदुद्दिश्येत्यर्थः । न पूर्वादिति । तथा च न समास इति भावः । यद्यनुबन्धरहितस्य नञो ग्रहणं तदा न लोपाभावश्छान्दस इति ज्ञेयम् ॥ १५ ॥

**मंत्रः – १६**

(अ.१, सू.२, मं.७)

**मि॒त्रं हु॑वे पू॒तद॑क्षं॒ वरु॑णं च रि॒शाद॑सम् ।**
**धियं॑ घृ॒ताचीं॒ साध॑न्ता ॥**

---

१. प्रवृत्तभाष्यस्य - क ।

**पदपाठः**

मि॒त्रम् । हु॒वे । पू॒तऽदं॑क्षम् । वरु॑णम् । च॒ ।
रि॒शाद॑सम् । धिय॑म् । घृ॒ताची॑म् । साध॑न्ता ॥

**भाष्यम्**

**मित्वा त्रातीति मित्रोऽयं मितमह्ना करोति वा ।**
**मितं रातीति वा नित्यं मितं रमयतीति वा ।**
**आवृणोतीति वरुणस्तमसाऽज्ञानतोऽपि वा ।**
**वरमुन्नयतीत्यस्माद्वरानन्दत्वतोऽपि वा ।**
**पूता दक्षा अनेनेति पूतदक्ष इतीरितः ।**
**तमाह्वयामि सुखिनं शमदन्नमते यतः ।**
**अनूनसुखभोक्तृत्वाद्रिशादा इति कीर्तितः ।**
**हरिर्घृतः सुशुद्धत्वाद्धृताची च तदञ्चनात् ।**
**स्वधीतिसाधको विष्णुर्भक्तानां च यथार्थतः ॥ १६ ॥**

**टीका**

तृतीयस्तृचो मैत्रावरुणः । मित्रावरुणशब्दौ निर्वक्ति मित्वेति । मित्वा रक्षणीयं ज्ञात्वा । त्रातीति प्रकृत्यन्तरस्येदं रूपम् । मात्रा इत्येताभ्यां क(अकार)प्रत्ययः । आद्यस्य चेकारः । माति त्राति चेति मित्रः । तस्य तात्पर्यं मित्वा त्रातीति । अयं विष्णुः । अह्ना निमित्तेन वस्तुजातं मितं ज्ञातं करोतीति मित्रस्तदन्तर्गतो हरिश्च । मित-शब्दोपपदाद्रातेः करोत्यर्थादकार उपपदलोपश्च । मितं परिमितं यथायोग्यमेव राति ददाति । रमयतीत्यनेन रमेरन्तर्णीतण्यर्थात्

## टिप्पणी

ननु सोमाभिषवकर्ता हिं सुन्वन्नित्युच्यते, सोमाभिषवश्च ऋत्विग्भिः क्रियते तत्कथं यजमानः सुन्वन्नित्युच्यते, इत्यत आह ऋत्विग्भिरिति । प्रयोजककर्तृत्वात्तस्येति भावः ।

ननु 'यद्वै निष्कृतं तत्संस्कृतमाह' इति श्रुतौ यन्निष्कृतमिति शब्दरूपं तत्संस्कृतमाहेति निष्कृतशब्दस्य संस्कृतार्थत्वोक्तेः, कथं कृतानुसारिकमार्थकत्वं निष्कृतशब्दस्य उच्यत इत्यत आह **यद्वै निष्कृतमिति** । **अयमेवार्थ इति** । तथा च 'आयातमुपनिषत्कृतम्' इति मन्त्रव्याख्यानपराया यद्वै निष्कृतमिति श्रुतेः निष्कृतशब्दतात्पर्यमादाय [१]प्रवृत्तेर्भाष्यस्य रूढार्थमादाय प्रवृत्तेः न विरोध इति भावः ।

विभक्त्यर्थमिति । द्वितीयाविभक्त्यर्थमित्यर्थः । अत एव प्राक् निष्कृतशब्देति प्रातिपदिकमात्रानुवादः कृतः । तदर्थमिति । तदुद्दिश्येत्यर्थः । न पूर्वादिति । तथा च न समास इति भावः । यद्यनुबन्धरहितस्य नञो ग्रहणं तदा न लोपाभावश्छान्दस इति ज्ञेयम् ॥ १५ ॥

**मंत्रः – १६**

(अ.१, सू.२, मं.७)

**मि॒त्रं हु॑वे पू॒तद॑क्षं॒ वरु॑णं च रि॒शाद॑सम् ।**

**धियं॑ घृ॒ताचीं॒ साध॑न्ता ॥**

---

१. प्रवृत्तभाष्यस्य – क ।

### पदपाठः

मि॒त्रम् । हु॒वे । पू॒तऽदं॑क्षम् । वरु॑णम् । च॒ ।
रि॒शाद॑सम् । धिय॑म् । घृ॒ताची॑म् । साध॑न्ता ॥

### भाष्यम्

**मित्वा त्रातीति मित्रोऽयं मितमह्ना करोति वा ।**
**मितं रातीति वा नित्यं मितं रमयतीति वा ।**
**आवृणोतीति वरुणस्तमसाऽज्ञानतोऽपि वा ।**
**वरमुन्नयतीत्यस्माद्वरानन्दत्वतोऽपि वा ।**
**पूता दक्षा अनेनेति पूतदक्ष इतीरितः ।**
**तमाह्वयामि सुखिनं शमदन्नमते यतः ।**
**अनूनसुखभोक्तृत्वाद्रिशादा इति कीर्तितः ।**
**हरिर्घृतः सुशुद्धत्वाद्घृताची च तदश्नात् ।**
**स्वधीतिसाधको विष्णुर्भक्तानां च यथार्थतः ॥ १६ ॥**

### टीका

तृतीयस्तृचो मैत्रावरुणः । मित्रावरुणशब्दौ निर्वक्ति मित्वेति । मित्वा रक्षणीयं ज्ञात्वा । त्रातीति प्रकृत्यन्तरस्येदं रूपम् । मात्रा इत्येताभ्यां क(अकार)प्रत्ययः । आद्यस्य चेकारः । माति त्राति चेति मित्रः । तस्य तात्पर्यं मित्वा त्रातीति । अयं विष्णुः । अह्ना निमित्तेन वस्तुजातं मितं ज्ञातं करोतीति मित्रस्तदन्तर्गतो हरिश्च । मित-शब्दोपपदाद्रातेः करोत्यर्थादकार उपपदलोपश्च । मितं परिमितं यथायोग्यमेव राति ददाति । रमयतीत्यनेन रमेरन्तर्णीतण्यर्थात्

'ञमन्ताड्ड' इति डप्रत्यय उक्तो भवति । तमसा बहिः अज्ञानतोऽध्यात्मम् । 'कृवृतृदारिभ्य उनन्नि'ति वृणोतेरुन(त्)न् । वरमुत्तमं जीवमुन्नयति ऊर्ध्वं नयति । वरशब्दोपपदादुत्पूर्वान्नयतेर्डः । उपपदोपसर्गयोर्लोपश्च । वरानन्दत्वतः 'णोहिनिर्वृतिवाचक' इति वचनात् णशब्द आनन्दवाची । वरो णो यस्यासौ वरुणः । पूर्वपदस्योकारः । दक्षा यजमानाः । पूर्वार्धं योजयति **तमिति**। हुवे आह्वयामि । बहुलं छन्दसीति ह्वयतेः सम्प्रसारणम् । शपो लुक्च । रिशादसमित्येतत्सुखिनमिति व्याख्यातं तत्कथमित्यवयवार्थमाह **शमिति**। तस्मादिति शेषः । ननु रमणमपि सुखम् अतः पुनरुक्तिरित्यतोऽभिप्रायमाह **अनूनेति** । रमेर्भावे डिः । रिशमनूनसुखमत्त्यनुभवतीति रिशादा इत्यर्थः । अदेरौणादिकोऽसुन्प्रत्ययः । घृक्षरणदीप्त्योरित्यस्माच्छुध्यर्थात्कर्तरि क्तः । तदश्नात् तं प्रति गमनात् विषयीकरणात् । उत्तरार्धं योजयति **स्वेति**। स्वविषयाधीतिर्ध्यानं स्वधीतिः । यथार्थत्वं स्वधीतेर्विशेषणम् । यद्वा शोभनाऽधीतिरधिगतिः स्वधीतिः । शोभनत्वस्य विवरणं यथार्थत इति । भक्तानामित्यादिशेषकथनम् । साधन्ता साधयन्तौ ॥ १६ ॥

## टिप्पणी

**मैत्रावरुण इति** । मित्रावरुणदेवताक इत्यर्थः । मित्रश्च वरुणश्च मित्रावरुणौ । 'देवताद्वन्द्वे च' इति मित्रशब्दस्यानङादेशः । तौ देवते अस्य तृचस्येति देवतार्थेऽण्प्रत्यये आदिवृद्धौ मैत्रावरुणाविति रूपमिति ज्ञेयम् । **मित्रावरुणशब्दाविति**। मित्रावरुणयोः शब्दौ मित्रावरुणशब्दौ मित्रावरुणप्रातिपदिकौ मित्रशब्दो वरुणशब्दश्च तौ निर्वर्त्तीत्यर्थः । अन्यथा शब्दपदार्थकत्वे मित्रशब्दस्यानङादेशाप्रसक्तेरिति ज्ञेयम् ।

ननु त्रैङ् पालन इति धातोः ङित्वेनात्मनेपदित्वाद्भाष्ये त्रायत इति निर्देशे कर्तव्ये त्राहीति कथं निर्देशः कृत इत्यत आह **प्रकृत्यन्तरस्येति** । त्रा पालने इति प्रकृत्यन्तरस्येत्यर्थः ।

केचित् त्रैङ् पालन इति धातोः त्रायत इति कर्तरि क्विपि 'आदेच उपदेशेऽशिति' इति आत्वे च निष्पन्नात् त्राशब्दात् 'सर्वप्रादिकेभ्यः क्विब्वाचारे' त्रा वाचरतीत्यर्थे क्विपि तदन्तस्य 'सनाद्यन्ता धातवः' इति धातुसंज्ञायां तस्मात् तिपि कृते सुब्धातुरूपप्रकृत्यन्तरस्य त्रातीति रूपं प्रक्रियाकौमुदीव्याख्याने प्रसादे चक्रिंस्त्राहीति एतद्व्याख्यानावसरे उक्तरीत्या सुब्धातुरूपत्वोक्तेरिति वदन्ति । **अकारप्रत्यय इति** । तस्मिन् परतः त्राधातोराकारलोपः छान्दस इति भावः । मुक्तानुबन्धस्य उप्रत्ययस्य कप्रत्ययस्य वाकार इति निर्देशः कृतः । तथा च उप्रत्ययपक्षे 'डित्यभस्यापि टेर्लोपः' इत्यकारलोपः । कप्रत्ययपक्षे 'आतो लोप इटि च' इत्याकारलोप इति ज्ञेयम् । **आद्यस्य चेति** । माधातोः इकार अन्तादेश इत्यर्थः । मातीति अदादिषु लुग्विकरणेषु पठितस्य मा मान इत्यस्य मातीति रूपमिति ज्ञेयम् । **करोत्यर्थादिति** । रा दान इति दानार्थकतया धातुपाठेऽपि धातूनामनेकार्थत्वात् प्रकृते करोत्यर्थतया व्याख्यातमिति भावः । **अकार इति** । पूर्ववत् त्रेधा योजना ध्येया । **उपपदेति** । उपपदमितशब्दान्त्याकारलोप इत्यर्थः । मितं परिमितमित्यस्मिन् पक्षेऽपि पूर्ववत्प्रक्रिया ज्ञेया । **ञमन्ताड्ड इतीति** । उणादिप्रथमपादे 'ञमन्ताड्डः' इति सूत्रे उणादिवृत्तिकारेण ञमिति प्रत्याहार इत्युक्तः । मकारस्यापि ञमङणनमिति ञम्प्रत्याहारमध्यपठितत्वेन तदन्तात् रम्धातोः उप्रत्यये 'चुटू' इति उकारलोपे 'डित्यभस्यापि टेर्लोपः' इति टिलोपे[1] 'उपपदमतिङ्' इति शब्दगताकारस्य च लोपे मित्रेति प्रातिपदिकनिष्पत्तिरिति भावः ।

---

१. उपपदमितशब्दगताकारस्य - क ।

नन्वस्मिन् सूत्रे उणादिवृत्तौ दमु उपशमने दम्यन्ते बाध्यन्ते अनेन जना इति दण्डः । दमनं चतुर्थोपायः यष्टिश्च । गम्लृ गतौ गच्छति उपधानमिति गण्डः । रमु क्रीडायां रम्यते रमते वा रण्डा पुनर्भूः । वनसम्भुक्तौ वण्डः इत्याद्युदाहृत्य डकारस्य 'चुटू' इतीत्संज्ञाप्राप्त्या बहुलग्रहणात् न प्रवर्तत इत्युक्तेः कथमत्र उकारलोप इति चेत् उच्यते— 'क्वचित् प्रवृत्तिः, क्वचिदप्रवृत्तिः, क्वचिद् विभाषा, क्वचिदन्यदेव' इति बहुलग्रहणस्यानेकप्रयोजनत्वोक्तेः । 'उणादयो बहुलम्' इति बहुलग्रहणेन दण्ड इत्यादि प्रयोगेषु चुटू इत्यस्याप्रवृत्तावपि तेनैव बहुलग्रहणेन प्रयोगान्तरे लोपसम्भवात् प्रकृते उकारस्य लोप उपपन्न इति । उक्तं च 'उणादयो बहुलम्' इति सूत्रे वृत्तौ 'संज्ञासु धातुरूपाणि प्रत्ययाश्च ततः परे । कार्याद् विद्याद् अनुबन्धमेतच्छास्त्रमुणादिषु' इति ।

यद्वा 'चटुषाः प्रत्ययस्य' इत्येकयोगे कर्तव्ये षः प्रत्ययस्य, चुटू इति योगद्वयकरणं 'चुटू' इत्यस्य नित्यत्वज्ञापनार्थम् । तेन विद्यया ज्ञातो विद्याचुञ्चुः, विद्याचणः इत्यादिप्रयोगेषु चुटू इति लोपो न प्रवर्तते इत्युक्तम् 'तेन वित्तश्चुञ्चुप्चणपौ'[1] इति सूत्रे वृत्त्यादौ । तथाच दण्ड इत्यादिप्रयोगेषु 'चुटू' इत्यस्याप्रवृत्तावपि प्रयोगान्तरे प्रवृत्तिसम्भवात् प्रकृतेऽपि उकारस्य लोप उपपन्न इति । अत एव चन्द्रिकायां 'अन्तर उपपत्तेः' इति सूत्रे अन्तरुपपदात् रमतेः 'अमन्ताड्डः' इति डप्रत्ययान्तेनान्तरशब्देनेत्युक्तम् । तत्र स्वामिभिः कृतायां चन्द्रिकाटीकायां डकारस्य लोपविषये पूर्वोक्तरीत्या समाधानद्वयमिति[2] ज्ञेयम् ।

---

१. पा. सू. ५-२-२६ । २. समाधानद्वयमुक्तमिति - क ।

**उनदिति** । उननिति पाठः स्वरसः, उणादितृतीयपादे 'कृवृदारिभ्य उनन्'[1] इति सूत्रपाठात् तत्र वृत्तौ कृ वृ तृ दारि इत्येतेभ्यो धातुभ्यः उनन् प्रत्ययो भवति । करुणादया वरुणः - अपां पतिः पानाय च तरुणः युवा दारुणः घोरः इत्युक्तत्वेन प्रकृते वृञ् वरणे इति धातोः उनन् प्रत्यये 'हलन्त्यम्' इति[2] नकारस्योपसर्ग तकारस्य च लोप इत्यर्थः । अस्मिन् पक्षे 'पूर्वपदात् संज्ञायामगः' इति नस्य णत्वमिति ज्ञेयम् । **पूर्वपदस्येति** । वरशब्दान्त्याकारस्य उकार इत्यर्थः ।

**बहुलं छन्दसीति** । षष्ठस्य प्रथमपादे 'ह्वः सम्प्रसारणम्' इति सूत्रस्यानन्तरं पठिते 'बहुलं छन्दसि' । इति सूत्रवृत्तौ ह्व इति वर्तते । छन्दसि विषये ह्वयतेर्धातोः बहुलं सम्प्रसारणं भवति । इन्द्राग्नी हुवे हुवे देवीं सरस्वतीम् । ह्वयतेर्लटि आत्मनेपदोत्तमपुरुषैकवचने 'बहुलं छन्दसि' इति शपो लुकि कृते सम्प्रसारणम्-उवङ्-गुणादेशश्च भवतीत्युक्तत्वेन प्रकृते ह्वेञ् स्पर्धायां शब्दे च इति धातोः लडुत्तमपुरुषैकवचने लटि तस्य 'टित आत्मनेपदानां टेरे' इति एत्वे धातोर्वकारस्य उकारस्वरूपसम्प्रसारणे 'सम्प्रसारणाच्च' इति पूर्वरूपे 'अदिप्रभृतिभ्यः शपः' इत्यस्मादनन्तरपठितेन 'बहुलं छन्दसि' इति सूत्रेण शब्विकरणस्य लुकि सति उकारस्योवङादेशे हुवे इति रूपसिद्धिरिति भावः । न च वाच्यं 'हुश्नुवोः सार्वधातुके' इति यणादेशः कस्मान्न भवतीति लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणं

---

१. ३-३३ पा.सू. सि.कौ. । २. 'हलन्त्यम्' इति नकारलोपे धातोर्गुणे 'अट्कुप्वाङ्नुम् व्यवायेऽपि' इति नकारस्य णत्वे वरुणमिति रूपमिति भावः । उनन् प्रत्ययस्य नित्वादेव 'ञ्नित्यादिर्नित्यम्' इति वरुणशब्दस्याद्युदात्तत्वं चेति ज्ञेयम् । उपपदोपसर्गयोरिति उपपदवर-शब्दान्त्याकारस्योपसर्गतकारस्य च लोप इत्यर्थः ।. - क ।

नन्वस्मिन् सूत्रे उणादिवृत्तौ दमु उपशमने दम्यन्ते बाध्यन्ते अनेन जना इति दण्डः। दमनं चतुर्थोपायः यष्टिश्च। गम्लृ गतौ गच्छति उपधानमिति गण्डः। रमु क्रीडायां रम्यते रमते वा रण्डा पुनर्भूः। वनसम्भुक्तौ वण्डः इत्याद्युदाहृत्य डकारस्य 'चुटू' इतीत्संज्ञाप्राप्त्या बहुलग्रहणात् न प्रवर्तत इत्युक्तेः कथमत्र उकारलोप इति चेत् उच्यते— 'क्वचित् प्रवृत्तिः, क्वचिदप्रवृत्तिः, क्वचिद् विभाषा, क्वचिदन्यदेव' इति बहुलग्रहणस्यानेकप्रयोजनत्वोक्तेः। 'उणादयो बहुलम्' इति बहुलग्रहणेन दण्ड इत्यादि प्रयोगेषु चुटू इत्यस्याप्रवृत्तावपि तेनैव बहुलग्रहणेन प्रयोगान्तरे लोपसम्भवात् प्रकृते उकारस्य लोप उपपन्न इति। उक्तं च 'उणादयो बहुलम्' इति सूत्रे वृत्तौ 'संज्ञासु धातुरूपाणि प्रत्ययाश्च ततः परे। कार्याद् विद्याद् अनुबन्धमेतच्छास्त्रमुणादिषु' इति।

यद्वा 'चटुषाः प्रत्ययस्य' इत्येकयोगे कर्तव्ये षः प्रत्ययस्य, चुटू इति योगद्वयकरणं 'चुटू' इत्यस्य नित्यत्वज्ञापनार्थम्। तेन विद्यया ज्ञातो विद्याचुञ्चुः, विद्याचणः इत्यादिप्रयोगेषु चुटू इति लोपो न प्रवर्तते इत्युक्तम् 'तेन वित्तश्चुञ्चुप्चणपौ'[1] इति सूत्रे वृत्त्यादौ। तथाच दण्ड इत्यादिप्रयोगेषु 'चुटू' इत्यस्याप्रवृत्तावपि प्रयोगान्तरे प्रवृत्तिसम्भवात् प्रकृतेऽपि उकारस्य लोप उपपन्न इति। अत एव चन्द्रिकायां 'अन्तर उपपत्तेः' इति सूत्रे अन्तरुपपदात् रमतेः 'ञमन्ताड्डः' इति डप्रत्ययान्तेनान्तरशब्देनेत्युक्तम्। तत्र स्वामिभिः कृतायां चन्द्रिकाटीकायां डकारस्य लोपविषये पूर्वोक्तरीत्या समाधानद्वयमिति[2] ज्ञेयम्।

---

१. पा. सू. ५-२-२६।    २. समाधानद्वयमुक्तमिति - क।

उनदिति । उननिति पाठः स्वरसः, उणादितृतीयपादे 'कृवृदारिभ्य उनन्'[1] इति सूत्रपाठात् तत्र वृत्तौ कृ वृ तृ दारि इत्येतेभ्यो धातुभ्यः उनन् प्रत्ययो भवति । करुणादया वरुणः - अपां पतिः पानाय च तरुणः युवा दारुणः घोरः इत्युक्तत्वेन प्रकृते वृञ् वरणे इति धातोः उनन् प्रत्यये 'हलन्त्यम्' इति[2] नकारस्योपसर्ग तकारस्य च लोप इत्यर्थः । अस्मिन् पक्षे 'पूर्वपदात् संज्ञायामगः' इति नस्य णत्वमिति ज्ञेयम् । पूर्वपदस्येति । वरशब्दान्त्याकारस्य उकार इत्यर्थः ।

बहुलं छन्दसीति । षष्ठस्य प्रथमपादे 'ह्वः सम्प्रसारणम्' इति सूत्रस्यानन्तरं पठिते 'बहुलं छन्दसि' । इति सूत्रवृत्तौ ह्व इति वर्तते । छन्दसि विषये ह्वयतेर्धातोः बहुलं सम्प्रसारणं भवति । इन्द्राग्नी हुवे हुवे देवीं सरस्वतीम् । ह्वयतेर्लटि आत्मनेपदोत्तमपुरुषैकवचने 'बहुलं छन्दसि' इति शपो लुकि कृते सम्प्रसारणम्-उवङ्-गुणादेशश्च भवतीत्युक्तत्वेन प्रकृते ह्वेञ् स्पर्धायां शब्दे च इति धातोः लडुत्तमपुरुषैकवचने लटि तस्य 'टित आत्मनेपदानां टेरे' इति एत्वे धातोर्वकारस्य उकारस्वरूपसम्प्रसारणे 'सम्प्रसारणाच्च' इति पूर्वरूपे 'अदिप्रभृतिभ्यः शपः' इत्यस्मादनन्तरपठितेन 'बहुलं छन्दसि' इति सूत्रेण शब्विकरणस्य लुकि सति उकारस्योवङादेशे हुवे इति रूपसिद्धिरिति भावः । न च वाच्यं 'हुश्नुवोः सार्वधातुक' इति यणादेशः कस्मान्न भवतीति लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणं

---

१. ३-३३ पा.सू. सि.कौ. । २. 'हलन्त्यम्' इति नकारलोपे धातोर्गुणे 'अट्कुप्वाङ्नुम् व्यवायेऽपि' इति नकारस्य णत्वे वरुणमिति रूपमिति भावः । उनन् प्रत्ययस्य नित्वादेव 'ञ्नित्यादिर्नित्यम्' इति वरुणशब्दस्याद्युदात्तत्वं चेति ज्ञेयम् । उपपदोपसर्गयोरिति उपपदवर-शब्दान्त्याकारस्योपसर्गतकारस्य च लोप इत्यर्थः ।. - क ।

न तु लाक्षणिकस्येति न्यायेन हु दानादानयोरिति धातोरेव तस्मिन् सूत्रे ग्रहणात् । यद्वा 'आर्धधातुकं शेषः' इत्यार्धधातुकसंज्ञाविधायकप्रकरणे 'छन्दस्युभयथा' इति सार्वधातुकस्थलेऽप्यार्धधातुकसंज्ञाविधानेन प्रकृते सार्वधातुकसंज्ञाया अभावेन यणादेशाप्रसक्तिरित्यर्थः[१] । **तस्मादिति शेष इति** । यत इत्यस्य प्रतिसम्बन्धितया तस्मादित्यध्याहृत्य तस्य सुखिनमित्यनेनान्वयः कर्तव्य इति भावः ।

**पुनरुक्तिरिति** । रिश इत्यनयोः पुनरुक्तिरित्यर्थः । **रमेति** । रमु क्रीडायाम् इति धातोः भावार्थे औणादिक डिप्रत्यये चुटू इति उकारलोपे 'डित्यभस्यापि टेर्लोप' इति टिलोपे 'रि' इति रूपमिति भावः । **रिशमिति** । रिच तत् शं चेति विग्रहः । सुखसुखमित्यर्थः । तस्य तात्पर्यम् **अनूनेति** । अतिशयितसुखमित्यर्थः । **अदेरिति** । रिशिपदोपपदाद् भक्षण इति धातोः कर्तरि औणादिकेऽसुन्प्रत्यये नकारोकारयोर्लोपे कृत्तद्धितेति प्रातिपदिकसंज्ञायां द्वितीयैकवचने रिशादशमिति रूपमिति भावः । **तं प्रति गमनादिति**। घृतशब्दवाच्यहरिं प्रति गमनात्तद्विषयीकरणात् घृताचीत्यर्थः । घृतशब्दोपपदात् अञ्चु गतिपूजनयोरिति धातो 'ऋत्विग्दधृक्' इत्यादिसूत्रेण क्विन्प्रत्यये क्विनः सर्वापहारिलोपे अनिदितामिति धातुनकारस्य लोपे 'उपदेशोऽननुनासिक इत्' इति धात्वान्तोकारलोपे च स्त्रीत्वविवक्षायां 'इगितश्च' इति प्राप्तङीपः 'धातोर्न' इति निषिद्धत्वेऽपि 'अञ्चतेस्विष्ट' इति ङीपः प्रतिप्रसवेन ङीपि सति 'अच' इत्यकारलोपे चाविति घृतशब्दस्य दीर्घे द्वितीयैकवचने घृताचीरूपमिति भावः । **स्वविषया धीतिर्ध्यानमिति** । परा मेयन्ति धीतय इत्यादौ धीशब्दस्य बुद्धिविशेषवाचकतया

---

१. यणादेशाप्रसक्तेरिति ।

प्रसिद्धत्वात् प्रकृतेऽपि स्वधीतीत्यत्र धीतिशब्दः ध्यानरूपबुद्धिविशेषपर इति भावः । यद्यपि ध्यै चिन्तायामिति धातोः 'ध्यायतेः सम्प्रसारणं च' इति क्विपि सम्प्रसारणे 'सम्प्रसारणाच्च' इति पूर्वरूपे 'हल' इति दीर्घे च धीरित्येव रूपं भवति । तथा अस्मादेव धातोः स्त्रियां क्तिन्प्रत्यये 'पृषोदरादीनि यथोपदिष्टम्' इति छान्दसव्यत्ययेन यकारैकारयोरीकाररूपवर्णागमे धीतिरिति रूपमिति ज्ञेयम् ।

यदा धातूनामनेकार्थत्वाद् ज्ञानार्थकत्वमाश्रित्य धीङ् आधार इति धातोः स्त्रियां क्तिन्प्रत्यये धीतिशब्देन ज्ञानविशेषलाभ इति ज्ञेयम् । **शोभना धीरिति** । अ धीतिरिति पदविभागो ज्ञेयः । स्वधीतीत्यत्र सु अधीति पदविभागाश्रयणेन सुशब्देन शोभनत्वमुच्यते । इङिकावध्युपसर्गं न व्यभिचरतः इत्युक्तेरधिपूर्वादिक् स्मरण इति धातोः स्त्रियां क्तिन्प्रत्यये उपसर्गेकारधात्विकारयोः सवर्णदीर्घे च निष्पन्नेनाधीतिशब्देनाधिगतिशब्दितज्ञानमुच्यत इति भावः । **शोभनत्वस्येति** । 'स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः' इति स्वपदवर्णनस्य भाष्यलक्षणत्वोक्तेः । स्वधीतीत्यत्र सु इति स्वप्रयुक्तपदेनोक्तं शोभनत्वमेव यथार्थत इति पदेन विवृतमिति भावः ।

ननु 'भक्तानां च यथार्थतः' इत्येतद्भाष्यं कस्य व्याख्यानं ऋचि व्याख्येयपदादर्शनादित्यत आह **भक्तानामित्यादीति** । आदिपदेन चशब्दस्य यथार्थत इति पदस्य च ग्रहणम् । चशब्द एवार्थकः सन् भक्तानामेवेति वा यथार्थत एवेति वा अन्वेतीति ज्ञेयम् । ननु द्वितीयपक्षे यथार्थत इत्यस्य सु इत्येतद्विवरणरूपत्वात् कथं शेषकथनरूपत्वमिति चेन्न, ऋचि धियमित्यत्र सु इत्यस्य श्रवणात् धीगतशोभनत्वोपपादनाय तस्यैव शेषत्वेन भाष्ये

कथनात् तद्विवरणरूपस्यापि यथार्थमित्यस्य शेषकथनरूपत्वमेवेति । अत्र पदानामपेक्षितप्रक्रियाविशेषः ऋगर्थमञ्जर्यां सम्यगुपपादितो द्रष्टव्यः ॥ १६ ॥

**मंत्रः – १७**

(अ.१, सू.२, मं.८)

**ऋतेन॑ मि॒त्राव॑रुणावृतावृधावृतस्पृशा ।**
**क्रतुं॑ बृ॒हन्त॑माशाथे ॥**

**पदपाठः**

**ऋ॒तेन॑ । मि॒त्रा॒व॒रु॒णौ॒ । ऋ॒त॒ऽवृ॒धौ॒ । ऋ॒त॒ऽस्पृ॒शा॒ ।**
**क्रतु॑म् । बृ॒हन्त॑म् । आ॒शा॒थे॒ इति॑ ॥**

**भाष्यम्**

**नित्यवृद्धः स भगवानृतेनानुपचारतः ।**
**ऋतस्पृग्वेदवाच्यत्वादन्यौ चेद्भगवानृतः ।**
**ऋगतावित्यतः सर्ववस्तुष्वनुगतत्वतः ।**
**तेन वृद्धौ तत्स्पृशौ च सर्वदा मित्रवारिपौ ।**
**संहितायां तु दैर्घ्यादिरुक्ताधिक्ये पदेऽन्यथा ।**
**अनन्यार्थत्वविज्ञप्त्या ईशाथे च महाक्रतुम् ।**
**महत्सुखं वा ॥ १७ ॥**

**टीका**

यस्मान्नित्यवृद्धः स भगवांस्तस्मादृतवृधः । ऋतमनुगतं सर्वकाल इति ऋतशब्दो नित्यपर्यायः । वर्धतेरिगुपधलक्षणः कः । ऋतं नित्यं वृधो

वृद्धः ऋतवृधः । ऋतेन सत्येन सत्यतयैव न तूपचारत इत्यभिप्रायोक्तिः । यथार्थत्वादृतो वेदः तं स्पृशतीति ऋतस्पृक् । स्पृशोनुदके क्विन् । वेदवाच्यः । एवं पूर्वार्धं विष्णौ योजयित्वा देवतान्तरे योजयितुमाह **अन्यौ चेदिति** । भगवतोऽन्यौ मित्रावरुणौ विवक्षितौ चेत्तदा द्वितीयतृतीयाभ्यामृतशब्दाभ्यां हरिरुच्यते । कुतः ऋगतावित्यतो धातोः कर्तरि क्ते कृते सर्ववस्तुष्वनुगतत्वतः सर्वगतत्वादृतो हरिः । तथा च तेन ऋतेन हरिणा वृद्धाविति मित्रवारिपावृतवृधौ । तत्स्पृशौ तत्सम्बन्धिनाविति ऋतस्पृशौ । सर्वदेति प्रथमऋतशब्दार्थः । ऋतावृधावित्यत्र संहितायां दैर्घ्यं पदे ह्रस्वता । तदभिप्रायमाह **संहितायामिति** । आदिपदेनान्ये वर्णविकारा गृह्यन्ते । यः संहितायां दैर्घ्यादिः पदे त्वन्यथा स उक्ताधिक्ये उक्तार्थस्याधिक्यज्ञापनार्थम् । अनन्यार्थत्वविज्ञप्त्यै उक्तस्यावधारणार्थं चेति यावत् । उत्तरार्धं व्याख्याति **ईशाथे इति** । प्रेरयथः । तृतीयोऽतिशये । क्रतुशब्दः सुखनामापि भवतीति बृहन्तं क्रतुं महत्सुखं वा । छन्दस्त्वात् 'अधीगर्थदयेशां कर्मणी'ति न भवति ॥ १७ ॥

## टिप्पणी

नित्यवृद्ध इत्येतदहेतुगर्भविशेषणमित्यभिप्रेत्य योजनामाह **तस्मादिति** । नित्यवृद्धत्वादेव ऋतो वृद्ध इत्युच्यत इत्यर्थः । तत्कथमित्यतस्तदुपपादयति **ऋचमित्यादिना** । ऋतमनुगतं **सर्वकाल इतीति** । तथा च ऋगताविति धातोः क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः इति सूत्रेण प्रकृते कालरूपाधिकरणेऽर्थे क्तप्रत्यय इति भावः । **वर्धतेरिति** । वृधुवृद्धाविति धातोः 'इगुपधज्ञाप्रीकिरः कः' इति सूत्रेण कप्रत्यये

'लशक्वतद्धिते' इति ककारलोपे 'पुगन्तलघूपधस्य च' इति प्राप्तगुणस्य क्ङिति च इति निषेधे वृधशब्दनिष्पत्तिरिति भावः ।

**ऋतेन सत्येनेति**। ऋतं च स्वाध्यायप्रवचने च इत्यादौ ऋतशब्दस्य सत्यपर्यायतया प्रसिद्धत्वात् प्रकृते भावप्राधान्यविवक्षया ऋतेनेत्यस्य सत्यतयेत्यर्थपरत्वमिति भावः । अनुपचारत इत्यस्य तात्पर्यकथनपरत्वस्य स्फोरणाय ऋतेनैवेत्यवधारणपरतया योजयति **सत्यतयैवेति**। 'स्पृशोनुदके क्विन्' इत्यस्मिन् सूत्रे वृत्तौ स्पृशेर्धातोरनुदके सुबन्तोपपदे क्तिन्प्रत्ययो भवति । घृतं स्पृशतीति घृतस्पृक् । अनुदक इति किम् ? उदकस्पृश इत्याद्युक्तत्वेन प्रकृते ऋतं स्पृशतीति ऋतशब्दोपपदात् स्पृश संस्पर्शन इति धातोः क्विन्प्रत्यये तस्य सर्वापहारिलोपे क्विन्प्रत्ययस्य कुरिति कुत्वेन शकारस्य ककारे 'उपपदमतिङ्' इति समासे ऋतस्पृक् इति रूपमिति भावः ।

**कर्तरीति**। 'गत्यर्थाकर्मक श्लिष-शीङ-स्थासवसजनरुहजीर्यतीभ्यश्च'[1] इति सूत्रेण कर्त्रर्थे क्तप्रत्यये कृते तदन्तेन ऋतशब्देन सर्वगतो हरिरुच्यत इत्यर्थः ।

**मित्रवारिपाविति** । देवताद्वन्द्वे च इत्यनङादेशस्य देवतावाचक-द्वन्द्वसमास एव विधानेन वारिपशब्दस्य वरुणे यौगिकत्वेन तस्मिन् परतः मित्रशब्दस्यानङादेशो न प्रवर्तत इति ज्ञेयम् ।

सर्वदित्यस्य व्याख्येयपदं दर्शयति **सर्वदेति**। **प्रथमर्तशब्दार्थ इति**। ऋतमनुगतं सर्वकाल इति पूर्वोक्तरीत्या ऋतेनेत्यस्य सर्वदेत्यर्थपरत्वमुपपद्यत इति भावः । प्रथमश्चासौ ऋतशब्दश्चेति समासे आद्गुण इति गुणे प्रथमर्तशब्द इति निर्देश इति ज्ञेयम् । 'ऋत्यकः' इति प्रकृतिभावस्य वैकल्पिकत्वोक्तेरत्र

---

१. पा.सू. ३-४-७२ ।

प्रकृतिभावो न प्रवर्तत इति ज्ञेयम्। सुखार्त इत्यादौ 'ऋते च तृतीयासमासे' इति सूत्रेण तृतीयासमास एव वृद्धिविधानात् प्रकृते वृद्धिर्नास्तीति ज्ञेयम्।

ननु ईश ऐश्वर्ये इति धातोः लण्मध्यमपुरुषद्विवचने ईशाय इति निर्देशः स्यात्, कथमीशीय इति निर्देश इत्यत आह **तृतीय इति**। व्युत्क्रमेण आकारस्य ईकारापेक्षया तृतीयत्वादिति भावः। **सुखानामपीति**। न केवलं यागानामित्यपिशब्दार्थः। यद्यप्युणादिप्रथमपादे 'कृञः कर्तुः' इति सूत्रे वृत्तौ करोतेः कतुप्रत्ययो भवति। ककार कित्कार्यर्थः, यणादेशः क्रियतेऽसौ धर्मार्थिभिरिति क्रतुयोग इति क्रतुशब्दो यागपरतया व्याख्यातः, तथापि 'गीभिः श्रीणीत मत्सरमि'त्यादौ गोजन्यपयसि गोशब्दप्रवृत्तिवत् क्रतु-साध्यसुखरूपफले क्रतुशब्दवृत्तिरुपपद्यत इत्यभिप्रेत्य भाष्ये सुखं वेति सुखपरतयापि व्याख्यातमिति भावः। उपलक्षणमेतत् क्रतुशब्दितयाग-जन्यज्ञानपरत्वमपि क्रतुशब्दस्येति ज्ञेयम्। ननु 'अधीगर्थदयेषां कर्मणि' इति सूत्रे वृत्त्यादौ शेष इति वर्तते। अधीगर्थाः स्मरणार्थाः दयादानगतिरक्षणेषु, ईश ऐश्वर्ये एषां कर्मकारके शेषत्वेन विवक्षिते षष्ठीविभक्तिर्भवति। मातु-रध्येति, पितुरध्येति, मातुः स्मरति सर्पिषो दयते सर्पिष ईष्टे जगतामीष्टे। शेष इत्येव मातरं स्मरतीत्याद्युक्तत्वेन प्रकृते क्रतोरिति वाच्ये क्रतुमिति कथं द्वितीयानिर्देश इत्यत आह **छन्दस्त्वादिति**। उपलक्षणमेतत्। वृत्त्यादा-वनुक्तरीत्या शेषत्वविवक्षाभावाच्च षष्ठी न भवतीति ज्ञेयम्॥ १७॥

**मंत्रः — १८**

(अ.१, सू.२, मं.९)

**क॒वी नो॑ मि॒त्रावरु॑णा तुविजा॒ता उ॑रु॒क्षया॑।**
**दक्षं॑ दधाते अ॒पसं॑म्॥**

पदपाठः

कवी इति । नः । मित्रावरुणा । तुविऽजातौ ।
उरुऽक्षया । दक्षम् । दधाते इति । अपसम् ॥

भाष्यम्

**तुविजौ ब्रह्मजातौ तथाविधौ ।**
**हरिस्तथैव भूतत्वात्स्थानं क्षय इहोच्यते ।**
**कर्मापसं च कर्तारं दक्षं कर्तारमेव वा ।**
**अस्मदर्थे दधाते तौ नित्यं बुद्धौ गतागतौ ॥ १८ ॥**

टीका

तुविजातावित्यनूद्य द्वेधा व्याचष्टे तुविजाविति। तुवीति बहुनाम बहुशब्दश्च पूर्णवाची अतः परब्रह्मणो जातौ तुविजातौ । तथाविधौ तुवित्वेन पूर्णत्वेन जातावविस्थितौ तुविजाताविति वा । अर्थद्वयस्य व्यवस्थां दर्शयति हरिरिति। तथैव भूतत्वात्तुवित्वेनावस्थितत्वात् तुविजातो हरिः । अन्यौ मित्रावरुणौ तु ब्रह्मजातत्वेन तुविजाताविति भावः । उरुक्षयावित्यत्र क्षयशब्दार्थमाह स्थानमिति। क्षिनिवास-गत्योरित्यस्मादेरजित्यधिकरणेऽच् । शिष्टं व्याख्याति कर्मेति। कवी नित्यं बुद्धौ सर्वज्ञौ । तुविजातावुरुक्षयौ महास्थानौ सर्वगतौ । तौ मित्रावरुणौ । नोऽस्मदर्थे । नो दक्षं यजमानं प्रत्यपसं कर्म दधाते तं कर्तारं कुर्वात इति यावत् । अपः शब्दः कर्मनाम । ततश्छान्दसोऽमो-ऽलुक् । अथवा नः अपसं कर्तारम् अर्शादिभ्योच् । यजमानं दक्षं पटुं दधाते कुर्वाते । अत्र दक्षमिति पूर्वोत्तरयोः संयोजनीयम् । गतागता-

**वित्युरुक्षयशब्दस्यार्थान्तरम्। क्षयोगतिः भावेऽच्। उरुः क्षयो ययोस्तौ तथोक्तौ। गतागतौ गत्यागतिमन्तौ ॥ १८ ॥**

## टिप्पणी

**तुवीति बहुनामेति** । ऊरु तुवि पूरु भूरि इत्यादिना तुविशब्दस्य बहुनामसु पाठादिति भावः। बहुशब्दाश्चेति छान्दोग्यभाष्ये तृतीयाध्याये गायत्रीप्रकरणे भू बहौ बहुः पूर्णतायामिति बहुशब्दस्य पूर्णार्थकत्वोक्तेः। पूर्णं दत्तमित्यर्थे बहुदत्तमित्यर्थदर्शनाच्च । तथा च बहुशब्दसमानार्थक तुविशब्दोऽपि पूर्णवाचीत्यभिप्रेत्य भाष्ये सकलगुणपूर्णब्रह्मपरतया तुविशब्दो व्याख्यातमिति भावः।

**परब्रह्मणो जाताविति** । तथा च ऋचि तुविशब्दस्य पञ्चम्यन्ततामाश्रित्य 'पञ्चमीभयेन' इत्यत्र पञ्चमीति योगविभागाश्रयणेन जातपदेन सह पञ्चमीसमासो वा । तुविशब्दस्य षष्ठ्यन्ततामाश्रित्य जातपदेन षष्ठीसमासो वा ज्ञेय इति भावः। षष्ठ्यन्तत्वे सकाशादिति योज्यम्। भाष्ये तु पञ्चम्यन्तस्य तुविशब्दस्य जातपदेन 'उपपदमतिङ्' इति सूत्रेण पञ्चम्यन्त उपपदे जनेर्धातोर्डप्रत्ययो भवति। बुद्धेर्जातो बुद्धिजः, संस्कारजः, सुखजः। अजाताविति किम् ? अश्वाज्जात अश्वजातः, हस्तिजातः इति वृत्त्यादावुक्तेरिति ज्ञेयम्।

**तुवित्वेनेति** । तथा च ऋचि प्रकृत्यादिभ्य उपसङ्ख्यानम् इति तृतीयान्ततया निष्पन्नेन भावप्रधानेन तुविशब्देन जातपदस्य 'कर्तृकरणे कृता बहुलम्' इति बहुलग्रहणात् तृतीयासमासो ज्ञेय इति भावः। **व्यवस्थामिति** । भगवत्परत्वे तुवित्वेन जातत्वमेव। प्रसिद्धदेवतापरत्वे तु

तुविशब्दित ब्रह्मजातत्वमेवेत्येवंरूपव्यवस्थामित्यर्थः । तामेव व्यवस्था-मुपपादयति **तथैव भूतत्वादित्यादिना।**

**एरजितीति।** तृतीयस्य तृतीयपादे 'एरच्' इति सूत्रे भावेऽकर्तरि च कारके इत्यनुवर्तते । अवर्णान्ताद्धातोः भावेऽकर्तरि च कारके संज्ञायाम् अच्प्रत्ययो भवति । रयः जयः क्षयः इति वृत्त्यादावुक्तत्वेन प्रकृते क्षि निवासगत्योरित्यस्माद्धातोः अधिकरणकारकेऽर्थेऽच्प्रत्यये चकारलोपे धातोर्गुणेऽयादेशे क्षय इति रूपमिति भावः ।

**अपः शब्दः कर्मनामेति।** अपः, अप्नः, दंस, वेपः इत्यादिना अपश्शब्दस्य कर्मनामसु पाठादिति भावः । नन्वपश्शब्दात्परस्य अमिति द्वितीयैकवचनस्य 'स्वमोर्नपुंसकात्' इति लुक् कस्मान्न भवतीत्यत आह **तत इति।** अपश्शब्दात् परस्य स्वमोर्लुगभावश्छान्दस इत्यर्थः । **अथवेति।** वः इत्यस्य यजमानमित्यनेनान्वयः । **कर्तारमिति।** कर्म-कर्तारमित्यर्थः । कथमपसमित्यस्य कर्मकर्तारमित्यर्थपरत्वमित्यत आह **अर्शादिभ्योऽजिति।** पञ्चमस्य द्वितीयपादे 'तदस्यस्त्यस्मिन्निति मतुप्' इति मतुप्प्रकरणे 'अर्शादिभ्योऽच्' इति सूत्रवृत्तौ अर्शस् इत्येवमादिभ्यः प्रातिपदिकेभ्यः अच्प्रत्ययो भवति। अर्शांस्यस्य अन्तीत्यर्शसः। अकृति-गणोऽयम् यत्राभिन्नरूपेण शब्देनाभिधानं तद्वतः तत्सर्वमिह द्रष्टव्यमि-त्युक्तत्वेन प्रकृते अपः कर्म अस्येति मत्वर्थे अपश्शब्दादच्प्रत्यये चकारलोप अपस् इत्यकारान्तत्वे सति द्वितीयैकवचने अपसमित्यनेन कर्मवन्तं कर्तारमित्यर्थलाभादिति भावः ।

**अत्रेति।** अस्मिन् पक्षे दक्षपदं पूर्वोत्तरयोः पूर्वत्र दधात इति क्रिया-पदे, उत्तरत्र अपसमिति पदे अपसं कर्मकर्तारं दक्षं यजमानं पटु दधात इत्यर्थबोधनाय आवृत्त्या संयोजनार्थमित्यर्थः ।

भावेऽजिति । क्षि निवासगत्योरिति धातोः 'एरज्' इति सूत्रेण भावेऽच्प्रत्यय इत्यर्थः । गत्यागतिमन्ताविति । गतिश्चागतिश्च गत्यागती ते अनयोस्त इति गत्यागतिमन्तौ गमनागमनक्रियोपेतावित्यर्थः । आगमनस्यापि गतिरूपत्वाद्धात्वर्थानुगम इति ज्ञेयम् । तथा च भाष्ये गतागतावित्यत्र गम्लृगताविति धातोः गत्यर्थाकर्मकेत्यादिना कर्तरि क्तप्रत्यये गतश्चागतश्च गतागताविति निर्देश इति भावः । यद्वा भावे क्तप्रत्यये गतं चागतं च गतागते गमनागमने तेऽनयोः स्त इति मत्वर्थे 'अर्शादिभ्यो अच्' इति अच्प्रत्यये गतागते गत्यागतिमन्तावित्यर्थ-परत्वोपपत्तेरिति भावः ॥ १८ ॥

## सूक्तम् – ३

द्वादशर्चम् । १२ मधुच्छन्दाः । १-३ अश्विनौ, ४-६ इन्द्रः,
७-९ विश्वे देवाः, १०-१२ सरस्वती । गायत्री ।

### मंत्रः – १९

(अ.१, सू.३, मं.१)

**अश्विऽना यज्वरीरिषो द्रवत्पाणी शुभस्पती ।**
**पुरुभुजा चनस्यतम् ॥**

पदपाठः

अश्विना । यज्वरीः । इषः । द्रवत्पाणी इति
द्रवत्ऽपाणी । (शुभस्पती इति) शुभः ।
पती इति । पुरुऽभुजा । चनस्यतम् ॥

भाष्यम्

**अन्नानि यज्ञयोग्यानि क्षिप्रहस्तौ शुभाधिपौ ।**
**बहुगोपौ बहुभुजौ नो योजयतमश्विनौ ।**
**यज्ञे वृत्तान्स्वभागान्वा संयोजयतमाशु वै ।**
**आशु वानाद्गतेरश्वी क्षिप्रावगतितोऽथवा ।**
**अश्नुतेऽखिलमित्येवाप्यश्वजत्वात्तथाऽश्विनौ ।। १९ ।।**

टीका

अश्विनेत्यादि द्वादशर्चं सूक्तम् । तत्राद्यस्तृच अश्विनः । द्वितीय ऐन्द्रः । तृतीयो वैश्वदेवः । चतुर्थः सारस्वतः ।।

हे द्रवत्पाणी ! क्षिप्रहस्तावौदार्यवन्तौ । शुभस्पती शुभाधिपौ पारस्करप्रभृतित्वात्सुट् । पुरुभुजौ बहुगोपौ बहोर्विश्वस्य गोप्तारौ बहुभुजौ वा बहोर्भोक्तारौ भुजेरुभयार्थत्वात् अश्विनौ युवां यज्वरीरिषो यज्ञयोग्यानि यज्ञसाधनान्यन्नानि यजतेः करणे वरट्प्रत्ययः । नः चनस्यतं योजयतं प्रयच्छतम् । यद्वा यज्वरीरिषो यज्ञे वृतान् स्वभागान् संयोजयतम् । स्वार्थे णिच् स्वीकुरुतम् । आशुवा इति द्रवत्पाणी इत्यस्याभिप्राया-न्तरम् । अश्विशब्दं निर्वक्ति **आशु वानादिति** । वानादित्यस्यैव व्याख्यानं **गतेरिति** । आशूपपदाद्वागतिगन्धनयोरित्यस्मादिनिः । उपपदस्य ह्रस्वलोपौ । क्षिप्रावगतितोऽथवा । गत्यर्थानामवगत्यर्थ-त्वात् । अखिलं जगत् अश्नुते व्याप्नोति । अशू व्याप्तावित्यतो विन् । एवशब्दो व्याप्तेरनुपचरितत्वार्थः । अश्वजत्वादित्यश्वशब्दादपत्यार्थे तद्धिता इतीन् । एतच्च व्याख्यानं देवतान्तर एवेति सूचनायाश्विना-वित्याह । अश्वरूपात् सूर्याज्जातत्वात् ।। १९ ।।

## टिप्पणी

**तृच इति** । अग्नेयमध्वरमित्यस्यामृचि तृचशब्दनिष्पत्तिप्रकारः मया उपपादित इति तत्रैव ज्ञेयम् । **अश्विन इति** । अश्विनौ देवते यस्य तृचस्य स आश्विनः । अश्विशब्दात् देवतार्थेऽण्प्रत्यये 'इनण्यनपत्ये'[1] इति प्रकृतिभावेन 'नस्तद्धित' इति टिलोपस्य प्रवृत्तौ[2] आश्विनेति रूपमिति ज्ञेयम् ।

**द्वितीय इति** । तृच् इत्यन्वेति । एवमुत्तरत्रापि । ऐन्द्रः इन्द्र-देवताकः । वैश्वदेवं विश्वदेवताकः । सारस्वतः सरस्वतीदेवताक इत्यर्थः । द्रवच्छब्दस्य क्षिप्रनामसु पाठात् भाष्ये क्षिप्रहस्तावित्युक्तमित्यभिप्रेत्य तस्य तात्पर्यमाह **औदार्यवन्ताविति** ।

**पारस्करप्रभृतित्वात्सुडिति** । षष्ठस्य प्रथमपादे सुट्कात्पूर्वात् इति सुडागमप्रकरणे 'पारस्करप्रभृतीनि च संज्ञायाम्'[3] इति सूत्रवृत्तौ पारस्कर-प्रभृतीनि शब्दरूपाणि संज्ञायां निपात्यन्त पारस्करादेशः रथष्पदा नदी किष्कुप्रमाणः, किष्किन्धागुहः, पारस्करप्रभृतिराकृतिगणः । अविहितलक्षणः सुट् पारस्करप्रभृतिषु द्रष्टव्य इत्युक्तत्वेन प्रकृते शुभशब्दात् परस्य पति-शब्दस्य सुडागमे डकारोकारयोर्लोपे शुभस्पतीति रूपमिति भावः । यद्यपि शुभः पतीत्यध्यापकानां पदद्वयपाठानुसारेण शुभाविति धातोः सम्पदादि-त्वाद्भावे क्विपि तदन्तात् षष्ठ्येकवचने शुभेति षष्ठी । विसर्जनीयस्य 'षष्ठ्या पतिपुत्रपृष्ठपारपदपयस्पोषेषु'[4] इत्यष्टमाध्यायतृतीयपादीयसूत्रेण सकारे सति शुभस्पतीति निर्देशः सम्भवति । तथापि भाष्ये शुभाधिया-

---

१. पा.सू. ६-४-१६४ ।		२. टिलोपस्याप्रवृत्तौ - क ।

३. पा.सू. ६-१-२५७ ।		४. पा.सू. ८-३-७२ ।

विति शुभशब्दस्याकारान्ततया एकपदत्वेन च व्याख्यानात् तदनुसारेण ऋच्यपि शुभस्पतीत्येकमेव पदमित्यभिप्रेत्य पारस्करप्रभृतित्वात् सुडित्युक्तमिति ज्ञेयम् । केचित्तु पदद्वयपक्षेऽपि यथा पारस्करप्रभृतिषु सुडागमरूपसकारो दृश्यते तथा शुभ इत्यत्र षष्ठ्या पतिपुत्रेत्यादिना सकारो दृश्यते इत्यर्थ इति वदन्ति । **भुजेरिति** । भुज धातोः भुज परिपालनाभ्यवहारयोरिति पालनभोजनोभयार्थत्वात् पुरुभुजावित्येतदर्थद्वयपरतया भाष्ये व्याख्यातमिति भावः ।

**यजतेरिति** । यज देवपूजासङ्गतिकरणदानेष्विति धातोः करणकारकेऽर्थे 'उणादयो बहुलम्' इति वरट्प्रत्यये टिड्ढाणञित्यादिना ङीप् प्रत्यये यज्वरीरित्यनेन यज्ञसाधनान्यन्नान्युच्यन्त[१] इति भावः ।

**न इति** । युष्मदस्मच्छब्दात्परेषां द्वितीया-चतुर्थी-षष्ठीबहुवचनानां 'बहुवचनस्य वस्नसौ' इति वसनसित्यनयोर्विधानेन प्रकृते न इत्यस्य अस्मान् प्रतीति वास्मभ्यमिति वा अर्थो ज्ञेयः । एतच्च चनस्यतमित्येतदन्वयघटनाय ऋचि शेषत्वेनोक्तो भाष्य इति ज्ञेयम् । **चनस्य तमिति** । उणादि चतुर्थपादे 'चायतेरन्ने ह्रस्वश्च'[२] इति सूत्रेण चायृ पूजानिशामनयोरिति धातोरसुन्प्रत्यये तस्य नुडागमे धातोरकारस्य ह्रस्वत्वे 'उपदेशेऽजनुनासिकइत्' इति धातोरन्तस्य ऋकारस्य लोपे 'लोपो व्योर्वलि' इति यकारलोपे च सति निष्पन्नात् चनशब्दात् 'सुप आत्मनः क्यच्' इति क्यचि 'सनाद्यन्ता धातवः' इति धातुसंज्ञायां धातोरित्यधिकारविहित लोणमध्यमपुरुषद्विवचने च नस्यतमिति रूपसिद्धेः । तत्र धातूनामनेकार्थत्वात् क्यजर्थो न विवक्षित इत्यभिप्रेत्य भाष्ये संयोजनार्थतया व्याख्यातमिति भावेन तदनूद्य तस्याभिप्रेतार्थं दर्शयति **योजयतं प्रयच्छतमिति** ।

---

१. यज्ञसाधनान्युच्यन्त - क । २. ६३९ पा.सू. ।

**यद्वेति**। अस्मिन् पक्षे इन्द्रा हि तूतुजान इत्यस्यामृचि भाष्ये चनो मन इति प्रोक्तमिति भावः[1]। चनःशब्दस्य मनोवाचकतया वक्ष्यमाणत्वात् चनस्यतमित्यस्य मनः कुरुतं मनोविषयतया युष्मदिच्छाविषयतया स्वीकुरुतमिति क्यजर्थपरत्वं संयोजयतमिति भाष्यपदस्य ज्ञेयम्।

क्यजर्थविवरणायैव समित्युक्तमिति भावः। ननु चनस्यतमित्यस्य स्वीकुरुतमित्यर्थपरत्वे भाष्ये संयोजयतमिति णिजन्तपदेन कथं व्याख्यानं क्रियते। पूर्वोक्तपक्षे णिजर्थस्य विवक्षितत्वेऽप्यत्र पक्षे णिजर्थस्याविवक्षितत्वादित्यत आह **स्वार्थे णिजिति**।

**अभिप्रायान्तरमिति**। क्षिप्रहस्तावौदार्यवन्तावित्यभिप्रायापेक्षया शीघ्रप्रदावित्यभिप्रायान्तरकथनाय भाष्ये आशु वै इत्युक्तमित्यर्थः। **इनिरिति**। औणादिक इनिप्रत्यये तत्सन्नियोगेन धातोरकारलोपश्छान्दस इति भावः। यद्वा मुक्तानुबन्धस्य ग्रहणमिनिरिति[2] तथा च 'लशक्व तद्धित' इति 'उपदेशोऽजनुनासिकइत्' इति किनिप्रत्ययककारयोर्लोपे 'आतो लोप इटि च' इत्यकारलोपे आशु इत्युपपदस्थस्य[3] आकारस्य ह्रस्वत्वेनोकारस्य लोपे अश्विन्निति प्रातिपदिकनिष्पत्तिरिति भावः।

ननु वा गतिगन्धनयोरिति धातोः कथं ज्ञानार्थकत्वमित्यत आह **गत्यर्थानामिति**। अस्मिन् पक्षेऽपि पूर्वोक्तरीत्यैव प्रक्रियेति भावः। **विनिति**। विनिप्रत्यय इत्यर्थः। अन्यथा हलन्त्यमिति नकारस्य लोपापातात्। अत एव प्राकृत[4] इनिरित्युक्तमिति ज्ञेयम्। तद्धिता इतीति।

---

१. भावः इति नास्ति कपुस्तके।

२. मुक्तानुबन्धस्य किनिप्रत्ययस्य ग्रहणमिनिरिति - क।

३. अश्वित्युपपदस्थस्य - क। ४. प्राक् - क।

तद्धिता इति बहुवचनज्ञापितेनिप्रत्यये, तस्मिन् परतः अश्वशब्दस्य 'यचि भम्' इति भसंज्ञायां यस्येति, चेत्यकारलोपे अश्विशब्दनिष्पत्तिरिति भावः ।

एतच्चेति । अश्वजत्वात् तथाश्विनावित्यश्विपदव्याख्यानं देवतान्तर-विषयमेव न तु विष्णुविषयमिति सूचयितुमश्विनाविति द्विवचनान्तं पदं प्रयुक्तम् । अन्यथा आशुवानाद्वतेरश्वीति प्रथमतः श्रुतस्यैकवचनान्तस्यैव अश्वीति पदस्य क्षिप्रावगतितोऽथवेत्यादाविवात्रानुवृत्तिसम्भवादश्विनाविति द्विवचनान्तं पदं न प्रयुज्येतेति भावः ।

अश्वजत्वादित्यत्र क अश्व इत्याकाङ्क्षायां तत्स्वरूपं निरूपयन् योजनामाह **अश्वरूपात् सूर्यादिति** । सूर्यस्याश्वरूपत्वं तु 'वाजिरूपेण सूर्येण प्रोक्तं वाजसनेयकम्' इति बृहदारण्यकभाष्योक्त वाराहपुराणादिसिद्धमिति ज्ञेयम् । अश्विनोऽश्वरूपसूर्याज्जातत्वं तु हरिवंशाष्टमाध्यायादौ 'ददर्श योगमास्थाय[1] स्वां भार्यां वडवां ततः' इत्यादिना उपपादित इति ज्ञेयम् ।

ननु भाष्ये अश्वजत्वादित्यत्राश्वाज्जायेते इत्यश्वजौ तयोर्भाव अश्वजत्वं तस्मादश्वजत्वादिति वक्तव्यम् । तत्र 'पञ्चम्यामजातौ' इति जातिवाचकशब्दे उपपदे जनेर्डप्रत्ययनिषेधात् । अत एव [2]वृत्त्यादावश्वाज्जातो अश्वजातः, हस्तिजात इत्याद्युदाहृतम् । तथा च प्रकृतेऽश्वशब्दोपपदे डप्रत्ययान्ततया अश्वशब्दनिष्पत्तिप्रकारः कथमिति चेत् उच्यते— अजाताविति निषेधस्य नञा निर्दिष्टत्वेनानित्यत्वाद्वा सूर्यस्य क्रीडार्थमश्वरूपस्योपात्तत्वेनाश्वशब्द-स्याश्वसादृश्यमादायैव सूर्ये प्रवृत्तत्वेनाश्वजातिप्रवृत्तिनिमित्तकत्वाभावाद्वा निषेधस्याप्रवृत्तेर्डप्रत्ययोपपत्तिरिति ॥ १९ ॥

---

१. ददर्श योगमासीनः - क ।

२. वृत्त्यादौ अजाताविति किं इति क्वचित् दृश्यते ।

मंत्रः – २०

(अ.१, सू.३, मं.२)

**अश्विना पुरुदंससा नरा शवीरया धिया ।**
**धिष्ण्या वनतं गिरः ॥**

**पदपाठः**

अश्विना । पुरुऽदंससा । नरा । शवीरया ।
धिया । धिष्ण्या । वनतम् । गिरः ॥

**भाष्यम्**

**बहुकर्मकृतौ सौख्यवीर्यात्मिक्या धिया गिरः ।**
**अस्मदीयाः सम्भजतं धिष्ण्यौ सर्वाश्रयौ सदा ॥ २० ॥**

**टीका**

हे अश्विनौ ! पुरुबहु दंसः कर्म ययोस्तौ पुरुदंससौ बहुकर्मकृतौ । नरौ पूर्ववत् । धिष्ण्यशब्दः स्थानपर्यायः । सदा सर्वाश्रयौ युवाम् । शवीरया शं सुखं वीरं वीर्यं तदात्मिक्या धिया । गिरोऽस्मदीयाः स्तुतिरूपा वाचः । वनतं वनसम्भक्तौ सम्भजतं स्वीकुरुतम् ॥ २० ॥

**टिप्पणी**

दंसः कर्मेति । अपो दंसो तेन इति दंसशब्दस्य कर्मनामसु पाठादिति भावः । पूर्ववदिति । वायविन्द्रश्च सुन्वत इत्यस्यामृचि भाष्यटीकयोरुक्तरीत्या नरावित्यस्य निर्विकारौ अविनाशिनावित्यर्थद्वयपरतया[१] व्याख्यानं

१. निर्विकारावश्विनौ चेत्यर्थद्वयपरतया - क ।

द्रष्टव्यमित्यर्थः। स्थानपर्याय इति। 'धिष्ण्यमोको निवसनं स्थानावसथ वास्तु च' इत्यभिधानात् स्थानशब्दिताश्रयवाची धिष्ण्यशब्द इति भावः।

सदा सर्वाश्रयाविति। यद्यपि धिष्ण्यशब्दः स्थानमात्रवाची तथापि 'द्युभ्वाद्यायतनं स्वशब्दात्', 'अक्षरमम्बरान्तधृतेः' इत्याद्यधिकरणेषु 'यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः', 'ममैवैकं जानथ आत्मानम्', इति 'पृथिव्यादिप्रकृत्यन्तं भूतं भव्यं भवच्च यत्। विष्णुरेको बिभर्तीदं नान्यस्तस्मात् क्षमाधृतौ' इत्याद्युदाहृतप्रमाणैः सदा सर्वाश्रयत्वस्य निर्णीतत्वादिति भावः। अत एवार्थविशेषसूचनायैव ऋचि धिष्ण्यशब्दः व्यत्ययेन पुल्लिङ्गतया निर्दिष्ट इति ज्ञेयम्। अन्यथा अभिधानसिद्धनपुंसकलिङ्गतापत्तेरिति। वन सम्भक्तावित्यस्माद्धातोर्लोटि मध्यमपुरुषद्विवचने वनमिति रूपमिति भावः॥ २०॥

**मंत्रः — २१**

(अ.१, सू.३, मं.३)

**दस्रा॑ युवाक॑वः सु॒ता नास॑त्या वृ॒क्तब॑र्हिषः।**
**आ या॑तं रुद्रवर्तनी॥**

**पदपाठः**

दस्रा॑। युवाक॑वः। सु॒ताः। नास॑त्या। वृ॒क्तऽब॑र्हिषः।
आ। या॒त॒म्। रु॒द्र॒व॒र्त॒नी॒ इति॑ रुद्रऽवर्तनी॥

**भाष्यम्**

**भेदकौ सर्वशत्रूणां दस्रौ सम्बन्धिनौ हि वाम्।**
**सुता युवाकवः सोमा यज्वनः स्तृतबर्हिषः।**

**नासत्यौ नासिकासंस्थौ नैव चासद्गुणौ क्वचित् ।**
**रुजां द्रावणतो रुद्रो वायुस्तदनुवर्तनात् ।**
**स्नेहतोऽनुवशत्वाद्वा तन्मार्गगतितोऽथवा ।**
**कस्मिंश्चहमिति श्रुत्या वासुदेवोऽश्विनावपि ।**
**रुद्रवर्तनिशब्दोक्ताः ॥ २१ ॥**

टीका

हे रुद्र ! वर्तनी नासत्यौ दस्रौ दसुविभेदने ततोरः । सर्वशत्रूणां भेदकौ । वृक्तबर्हिषः । अनेकार्थत्वाद्धातूनाम् । स्तृतबर्हिषः । स्तृतं विस्तृतं बर्हिर्येन तस्य । यज्वनः सुताः सोमाः युवाकवः वां युवयोः सम्बन्धिनः । युवयोरिदमित्यर्थे आकुप्रत्ययो युष्मदो युवादेशश्च । युवयोरर्थे सम्पादिता हि यस्मात्तस्मादायातम् । नासत्यशब्दं व्याख्याति **नासत्याविति** । नासाशब्दाद्भवार्थे त्यप् ह्रस्वश्च । नासिकाभिमानित्वात् । एतद्देवतान्तरविषयम् । विष्णुश्चेत्क्वचिदसद्गुणौ नैवेति । सच्छब्दपर्यायः सत्यशब्दः सद्गुणवाची । सदभावे साधुभावे चेति वचनात् । न सत्या असत्या असद्गुणाः । न विद्यन्ते असत्या ययोः तौ नासत्यौ । न भ्राडित्यादिना नस्यालोपः । रुद्रवर्तनिशब्दार्थमाह **रुजामिति** । रुक्शब्दे कर्मण्युपपदे द्रुगतावित्यस्मादन्तर्णीतणयर्थाड्डुः उपपदस्य च दः । वासुदेवः स्नेहतस्तदनुवर्तनाद्रुद्रवर्तनिशब्दोक्तः । अश्विनावप्यनुवशत्वेन तदनुवर्तनाद्रुद्रवर्तनिशब्दोक्तौ । वृतु वर्तने । भावे अनिः । रुद्रस्य वर्तनिः रुद्रमनुवृत्तिर्ययोस्तौ तथोक्तौ । अथवा तन्मार्गगतितः । रुद्रस्य सम्बन्धिनी वर्तनिः मार्गो ययोरिति वा वासुदेवोऽश्विनावपि रुद्रवर्तनिशब्दोक्ताः । अस्त्वश्विनोर्वायुमार्गगति-

**स्तद्धत्यत्वात् वासुदेवस्य तु कथमित्यत आह कस्मिन्निति । कस्मिन्वहमुत्क्रान्त उत्क्रान्तो भविष्यामि कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामीति स प्राणमसृजतेति श्रुत्या वासुदेवस्यापि साव-गम्यते ॥ २१ ॥**

## टिप्पणी

**ततो र इति** । दस्धातोरौणादिकरप्रत्यये 'नेड्वशि कृति' इतीट्-प्रतिषेधे दस्रशब्दनिष्पत्तिरिति भावः । ननु वृजी वर्जन इति धातोः क्तप्रत्ययान्ततया निष्पन्नस्य स्तृनृ बर्हिष इति विस्तृतार्थतया कथं व्याख्यानं क्रियत इत्यत आह **अनेकार्थत्वादिति** । क्रियाप्रसिद्ध्यर्थमेकैकोऽर्थः प्रदर्श्यते । प्रयोगतोऽवगन्तव्यः । अनेकार्था हि धातव इति शाब्दिको-क्तेरिह वृकशब्दस्य विस्तृतार्थकत्वमिति भावः । **आकुप्रत्यय इति**[१] । तद्धिता इति बहुवचनस्यानुक्तप्रत्ययान्तरविधानार्थत्वोक्तेरिति भावः । **युष्मद इति** । युष्मद्शब्दसमुदायस्य छान्दसो युवादेश इत्यर्थः । अत एव युष्मदो युवादेशश्चेत्युक्तमिति ज्ञेयम् । 'युवावौ द्विवचने' इति सूत्रेण मपर्यन्तस्य प्राप्तयुवादेशस्तु न प्रवर्तते । 'अष्टन आ विभक्तौ' इत्यतः विभक्त्यधि-कारविहितत्वेन प्रकृते विभक्तिपरत्वाभावात् । अत एव सप्तमस्य द्वितीय-पादे 'प्रत्ययोत्तरपदयोश्च' इति सूत्रे वृत्तिमञ्जर्यादौ त्वाहौसौ युवावौ द्विवचने, यूयवयौ जसि' इत्येवमादयोऽपि प्रत्ययोत्तरपदयोरादेशा न भवन्ति विभक्तेरश्रवणादित्युक्तमिति ज्ञेयम् । शेषे लोप इत्यस्यापि विभक्त्य-धिकारविहितत्वेन प्रकृते दकारस्य लोपाभावप्रसङ्गाच्चेति मपर्यन्तस्य युवा-देशो नात्रेति ज्ञेयम् ।

---

१. कप्रत्यय इति - क ।

**नासाशब्दादिति** । 'अव्ययात्त्यप्' इत्यत्र त्यपिति योगविभागेन नासाशब्दाद् भवार्थे भवार्थे त्यप्प्रत्यये 'ङ्यापोः संज्ञाछन्दसोर्बहुलम्' इति सूत्रेण नासाशब्दस्य ह्रस्वत्वेन नासत्यशब्दो निष्पन्न इति भावः । अश्विनोर्नासिकासंस्थत्वं कथमित्यत आह **नासिकाभिमानित्वादिति** । **एतदिति** । नासिकासंस्थाविति व्याख्यानमित्यर्थः । **इति वचनादिति** । 'सद्भावे साधुभावे च सदित्येतद् प्रयुज्यते' इति सप्तदशाध्याये गीतावचने सच्छब्दस्य साधुभाववाचकत्वेन तत्पर्यायसत्यशब्दस्यापि सद्गुणवाचकत्वमिति भावः ।

न सत्याः असत्या इति नञ्समासलब्धार्थं दर्शयति **सद्गुणा इति** । ननु न विद्यन्तेऽसत्या योस्ताविति विगृह्य असत्यशब्देन नञ्समासे सति 'नलोपो नञः' इति सूत्रेण नलोपे 'तस्मान्नुडचि' इति नुडागमे च सति अनसत्याविति निर्देशः स्यात्, कथं नासत्याविति निर्देश इत्यत आह **न भ्राडित्यादिनेति** । षष्ठस्य तृतीयपादे 'न भ्राण्नपान्नवेदानासत्यानमुचिनकुलनखनपुंसकनक्षत्रनक्रनाकेषु प्रकृत्या'[1] इति सूत्रे । एषु शब्देषु न[2] प्रकृत्या भवति, न तु 'नलो नञः' इति लोपं प्राप्नोतीति वृत्त्यादावुक्तत्वेन प्रकृते नासत्यावित्यत्र नञो नकारस्य लोपो नास्तीति[3] भावः ।

**ड इति** । औणादिकडप्रत्यय इत्यर्थः । तथा च 'चुटू' इति उकारलोपे डित्यभस्यापीति टिलोपे उपपदरुजशब्दनकारस्य दकारे रुद्रशब्दनिष्पत्तिरिति भावः । **स्नेहत इति** । स्वामिनो भृत्याधीनत्वं स्नेहत एव, न तु प्रकारान्तरेणेत्यभिप्रेत्य स्नेहत इत्युक्तमिति ज्ञेयम् । **अनुवशत्वेनेति** । भृत्यानां स्वाम्यधीनत्वनियमादिति भावः ।

---

१. ६-३-७५ पा.सू. । २. नञ् - क ।

३. लोपो न भवतीत्यर्थः - क ।

वृतु वर्तन इति । अस्माद्धातोरौणादिके अनिप्रत्यये 'पुगन्तलघूपधस्य च' इति गुणे रपरत्वेन वर्तनिशब्दनिष्पत्तिरिति भावः । 'उपदेशोऽनुनासिक इत्' इति सूत्रे प्रतिज्ञानुनासिक्या पाणिनीया इत्युक्तेः प्रकृते अनिप्रत्यये-कारस्यानुनासिकत्वाभावाल्लोपो नास्तीति ज्ञेयम् । रुद्रवर्तनिशब्दस्य विग्रहं दर्शयति रुद्रवर्तनिरिति । रुद्रमनुसृत्य वृत्तिरित्यर्थः ।

कस्मिन्वहमिति । कस्मिन् पुरुषे शरीरादुत्क्रान्ते अहमुत्क्रान्तो भविष्यामि प्रतिष्ठितो भवामि को हि मद्वशीकरणक्षमः भक्तिज्ञानादिसम्पन्नः मन्निमित्तीकृत्य सकलाः सृजामीत्येवमीक्षित्वा तादृशश्च प्राण एवेति निश्चित्य स पुरुषः परमात्मा प्राणं जीवकलाभिमानिनमसृजतेति षट्प्रश्नोपनिषद्भाष्य-टीकयोरुक्तरीत्या तस्याः श्रुतेरर्थो ज्ञेयः । सावगम्यत इति । वायुमार्ग-गतिरित्यर्थः ॥ २१ ॥

**मंत्रः – २२**

(अ.१, सू.३, मं.४)

**इन्द्रा याँहि चित्रभानो सुता इमे त्वायवंः ।**
**अण्वींभिस्तनां पूतासंः ॥**

**पदपाठः**

**इन्द्रं । आ । याहि । चित्रभानो इतिं चित्रऽभानो ।**
**सुताः । इमे । त्वाऽयवंः । अण्वींभिः । तनां ।**
**पूतासः ॥**

भाष्यम्

**चित्रं भद्रं रतं चितौ ।**
**चिद्रतेश्चायनीयत्वाददनाद्वा चितोऽभिदा ।**
**तादृशा रश्मयो ज्ञानमस्येति भगवान् परः ।**
**चित्रभानुरिति प्रोक्तस्तेजो वा तादृशं प्रभोः ।**
**त्वदिच्छव इमे सोमाः पटीभिः सूक्ष्मतन्तुभिः ।**
**विस्तृत्य शोधिताः सूक्ष्मप्रमाभिर्वा(श्च) मनांसि च ।**
**सोमानां मनसां चैव देवताः सोमरश्मिगाः ।**
**सोमभृत्याः समस्तस्य सोम एवाधिपो हरिः ॥ २२ ॥**

टीका

चित्रभानुशब्दं व्याख्यातुं चित्रशब्दार्थं तावदाह चित्रमिति । चित्रं भद्रमित्येकोऽर्थः । चित्रमालेख्यमद्भुतमित्यभिधानात् । चितौ सर्व-जीवचैतन्ये नियामकतया रतमित्यपरः । चिच्छब्दोपपदाद्रमतेर्डः । चिद्रतेः अजडसुखात्मकत्वादित्यन्यः । चिच्च सा रतिश्चेति चित्रम् । पदसंज्ञानाश्रयणाज्जस्त्वाभावः । चायनीयत्वाद्दर्शनीयत्वात्पूजनीय-त्वाद्वेत्यर्थान्तरं चायृपूजानिशामनयोरित्यस्मात्कर्मणि त्रप्रत्ययो डिच्च । चितश्चैतन्यस्य स्वरूपस्यैवादनादनुभवाद्वा चित्रम् । रातेरदनार्थत्व-मनेकार्थत्वाद्धातूनाम् । इदानीं चित्रभानुशब्दं व्याख्याति अभिदेति । तादृशाश्चित्राः । भानुशब्दार्थं रश्मय इत्यनूद्य ज्ञानमिति व्याख्यातम् । ननु चितौ रतत्वादीनां भगवद्धर्माणां कथं ज्ञानतेजोधर्मत्वमित्यत उक्तम् अभिदेति । ज्ञानतेजसोः परमेश्वरेणाभिदाकारणे नात्क्तं युक्तमित्यर्थः । भगवांश्चेत्तर्हि परो मुख्यश्चित्रभानुः । अन्यस्तु यथासम्भवमिति भावः ।

हे चित्रभानो ! इन्द्रायाहि । कुतः । अण्वीभिः सूक्ष्माभिः । सूक्ष्मतन्तुभिः सम्यक् शोधनसाधनीभिः पटीभिरिति शेषः । तना विस्तृत्य । तनोतेराकारः क्त्वार्थे । पूतासः पूताः शोधिताः । इमे सुताः सोमास्त्वायवः त्वदिच्छवो वर्तन्ते । युष्मदः क्यच् । तदन्तादुः । दुर्घटत्वादिदमध्यात्मं योजयति सूक्ष्मेति । सूक्ष्मार्थग्राहिणीभिः प्रमाभिः । मनांसि शोधितानीति शेषः ।

ननु बाह्यसोमस्थानेऽध्यात्मं मनसो ग्रहणे किं निमित्तम् । देवतैक्यमित्याह **सोमानामिति** । देवतास्वपि कथं सोमशब्दवृत्तिर्येन रसेषु मनःसु च तद्वृत्तिरित्यत उक्तं **सोमरश्मिगा इति** । **सोमभृत्या इति** च । सोमरश्मिगततया सोमभृत्यतया च तत्र सोमशब्दप्रवृत्तिस्तत्सम्बन्धाद्रसेषु मनःसु चेति भावः । पक्षान्तरमाह **समस्तस्येति** । समस्तस्य सोमानां मनसां च । सोम एव देवता । तथा च न परम्पराश्रयणमिति भावः । ननु परमेश्वरः समस्तस्य देवता तत्कथमेतदित्यत आह **अधिप इति** । हरिः सर्वस्याधिप एव न त्वभिमानीत्यर्थः । अनेन त्वायव इत्येतदपि समर्थितं भवति ॥ २२ ॥

### टिप्पणी

व्याख्यातुमिति । अभिधेत्यादिना व्याख्यातुमित्यर्थः । इत्यभिधानादिति । तथा च अद्भुतशब्दभद्रशब्दयोः पर्यायत्वमिति भावः । अपर इति । अर्थ इत्यन्वेति । रमतेर्ड इति । रमु क्रीडायामिति धातोः कर्तरि औणादिके डप्रत्यये डित्यभस्यापीति टिलोपे चित्रशब्दनिष्पत्तिरिति भावः । अन्य इति । अर्थ इत्यन्वयः । अस्मिन् पक्षे चित्रपदविग्रहं दर्शयति चिच्च सा रतिश्चेति । अत्र पक्षे रमतेर्भावे डप्रत्यय इति ज्ञेयम् । यद्यपि

चिच्छब्दरशब्दयोर्विग्रहप्रदर्शनं कर्तव्यम्, तथापि भावार्थकत्वस्फोरणाय क्तिन्प्रत्ययान्तेन विग्रहप्रदर्शनं कृतमिति ज्ञेयम् ।

ननूक्तपक्षद्वयेऽपि चिच्छब्दतकारस्य 'झलां जशोन्ते' इति जश्त्वेन भाव्यमित्यत आह **पदसंज्ञाश्रयणादिति** । 'अयस्मयादीनि छन्दसि' इति भसंज्ञाश्रयणात् पदसंज्ञाभावेन तन्निमित्तकजश्त्वाभादिति भावः । चायनीयत्वादित्येतत् द्वेधा व्याख्याति **दर्शनीयत्वात्पूजनीयत्वाद्वेति** । **अर्थान्तरमिति** । चित्रशब्दस्येति शेषः । चित्रशब्दस्य कथमुक्तार्थद्वय-परत्वमित्यत आह **चायृ पूजाभिशामनयोरित्यस्मादिति** । निशामनशब्देन दर्शनमुच्यते ।

**इत्र प्रत्यय इति** । तथा च चायृ धातोः 'उपदेशेऽजनुनासिक इत्' इति रिकारलोपे[1] इत्रप्रत्यये तस्य डित्वाभावेन डित्यभस्यापि टेर्लोप इति आकारयकारयोर्लोपे चित्रशब्दनिष्पत्तिरिति भावः । ननु रा दान इति धातोर्दानार्थकतया पाठाददनार्थकत्वेन[2] कथं व्याख्यानं क्रियत इत्यत आह **रातेरिति** । प्रयोगतोऽवगन्तव्या । अनेकार्था हि धातव इति शाब्दिकोक्ते-रनेकार्थत्वात् धातूनां प्रकृते राधातोरदनार्थत्वमिति भावः । तथा च चिच्छब्दोपपदाद्राधातोरौणादिकसूत्रेण वा 'आतोऽनुपसर्गे कः' इति सूत्रेण वा कप्रत्यये ककारलोपे 'आतो लोप इटि च' इत्यकारलोपे पूर्ववद्भसंज्ञा-श्रयणेन जस्त्वाभावे चित्रशब्दनिष्पत्तिरिति भावः ।

ननु भानुशब्दार्थविवरणपरयोः रदमयोर्ज्ञानमित्यनयोरेकार्थकत्वे पौन-रुक्त्यप्रसङ्गेन अन्यतरवैयर्थ्यम् । भिन्नार्थकत्वे तु तेजो वा इतिवत् ज्ञानं

---

१. ऋकारलोपे - क । २. (रा दान इति धातोर्दानार्थकत्वेन आदानार्थकतया व्याख्यानम् - क ।

वेति वाशब्दप्रयोगापत्तिः । रश्मिपदेन बाह्यतेजोग्रहणसम्भवेन तेजो वेति पृथग्वचनानुपपत्तेश्चेत्यत आह **भानुशब्दार्थमिति**। 'स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः' इति भाष्यलक्षणत्वोक्तेर्भानुशब्दार्थं रश्मय इत्यनूद्य तस्य ज्ञानमिति व्याख्यानेन स्वपदवर्णनपरत्वान्न पौनरुक्त्यमिति भावः । अत एव भानुशब्दस्यार्थान्तरविवरणपरतया तेजो वेति पक्षान्तरकथनमुपपन्नमिति ज्ञेयम् ।

ननु रश्मय इति बहुवचनान्ततयानूद्य ज्ञानमिति कथमेकवचनान्तेन व्याख्यानमिति चेत् उच्यते 'यः सर्वज्ञः सर्वविद्' इत्यादिप्रमाणैः भगवज्ज्ञानस्य स्वपरग्रहणशेषविशेषार्थविषयकत्वस्यानवगतत्वेन[1] तादृशज्ञानवत्वमाहात्म्यस्फोरणाय रश्मय इति बहुवचनान्ततयानुवादेऽपि 'स्वाभाविकी ज्ञानबलक्रिया च' इत्यादिप्रमाणानुसारेण भगवज्ज्ञानस्य भगवदैक्यज्ञापनाय[2] ज्ञानमित्येकवचनान्तेन व्याख्यानम्[3] । **कथमिति**[4] । **कथं ज्ञानतेजोधर्मत्वमिति** । भातुशब्दविवक्षितयोर्ज्ञानतेजसोर्भगवद्गुणत्वेन गुणिधर्माणां कथं[5] गुणिधर्मत्वमित्यर्थः । तेजो वेत्युक्तेस्तस्याप्यनुवादः कृतः इति ज्ञेयम् । तथा च तादृशचितौ रतत्वादिधर्मोपेतं चित्रं भानुशब्दितं तेज अस्येति विग्रहो द्रष्टव्यः । भिदेः सम्पदादित्वाद्भावे क्विपि नञ्समासे तृतीयैकवचने अभिदेति रूपमित्यभिप्रेत्याह **अभिदा करणे वेति**। उद्देशविधेयस्फोरणाय भगवानित्यनन्तमपेक्षितशेषपूर्त्या योजनामाह **भगवांश्चेत्तर्हीति**। भगवान् चित्रभानुशब्दार्थतया विवक्षितश्चेत्तर्हि ........... ममुख्यतया[6]

---

१. स्वपरगताशेषविशेषार्थकत्वस्यावगतत्वेन - क ।

२. भगवदैक्यमिति ज्ञापनाय - क । ३. व्याख्यानं कृतमिति - क ।

४. 'कथमिति' नास्ति कपुस्तके । ५. गुणधर्मत्वमित्यर्थः - क ।

६. परममुख्यतया - क ।

चित्रभानुशब्दार्थत्वेन ग्राह्य इत्यर्थः । परशब्दव्यावर्त्यमाह **अन्यस्त्विति** । प्रसिद्धेन्द्र इत्यर्थः । **यथासम्भवमिति** । स्वोचिततादृशज्ञानतेजोधर्मवत्तया चित्रभानुशब्दार्थत्वेन ग्राह्य इत्यर्थः ।

**तनोतेरिति** । तनु विस्तार इति धातोः क्त्वाप्रत्ययार्थे आकारप्रत्यये तना तनित्वा विस्तृत्येति पर्यवस्यतीति भावः । त्वायव इत्यस्य त्वदिच्छव इत्यर्थकत्वं कथमित्यतस्त्वायुशब्दव्युत्पत्तिं दर्शयति **युष्मदः क्यजिति** । त्वमात्मन इच्छन्तीत्यर्थे 'सुप आत्मन क्यच्' इति सूत्रेण सनाद्यन्ता धातव इति धातुसंज्ञायां 'सुपो धातुप्रातिपदिकयोः' सुपो लुकि प्रत्ययोत्तरपदयोश्चेति मपर्यन्तस्य त्वादेशे युष्मदस्मदोरनादेशे इति सूत्रेण व्यत्ययेनाविभक्ता-वप्याकारे त्वायशब्दनिष्पत्तौ तदन्तात् 'क्या छन्दसि' इति उप्रत्यये[1] अतो लोप क्यचोऽकारस्य लोपे त्वायुशब्दनिष्पत्तिरिति भावः । क्वचित् डुप्रत्यय इति पाठो वर्तते, तदा औणादिको डुप्रत्यय इत्यर्थः ।

**दुर्घटत्वादिदमिति** । अध्यात्मं सोमस्थानीयासु मनोवृत्तिषु अण्वी-भिस्तना पुनास इत्येतद्दुर्घटमित्यतो योजयतीत्यर्थः । **एष्विति** । सोम-रसेष्वित्यर्थः । देवता इति बहुवचनान्तमेकवचनान्ततया विपरिणाम्य अन्वेतीत्यभिप्रेत्याह **सोम एव देवतेति** । पक्षान्तरमाहेत्युक्तं विशदयति **तथा चेति** । सोमाभिमन्यमानत्वादेव रसेषु मनस्सु च सोमसम्बन्धि सोमसम्बन्धिभृत्याभिमन्यमानत्वात् सोमशब्दवृत्तिरित्येवंरूपपरम्पराश्रयण-मित्यर्थः । **तत्कथमेतदिति** । सोम एव देवतेत्येतत्कथमित्यर्थः । समस्तस्य एवेत्येतत्पदद्वयमधिपपदेन अन्वेतीत्यभिप्रेत्याह **सर्वस्याधिप एवेति** । सोमानां मनसां चेत्यादिना श्रुतशब्दस्याभिमानिदेवतापरत्वकथनेन हरेः

१. उपप्रत्यये - क)

सर्वाधिपतित्वकथनेन चेत्यर्थः । स्वामिनं कामयमाना वर्तन्त इति प्रसिद्ध-मेवेतीच्छार्थकत्वं त्वायवेत्यस्य समर्थनं[1] भवतीत्यर्थः । अपिपदेनाध्यात्मं सोमरसस्थाने मनसोग्रहणे निमित्तभूतं देवतैक्यं समुचिनोति ॥ २२ ॥

**मंत्रः – २३**

(अ.१, सू.३, मं.५)

**इन्द्रा याहि धियेषितो विप्रजूतः सुतावतः ।**
**उप ब्रह्माणि वाघतः ॥**

**पदपाठः**

इन्द्र । आ । याहि । धिया । इषितः ।
विप्रऽजूतः । सुतऽवतः । उप । ब्रह्माणि । वाघतः ॥

**भाष्यम्**

**अस्मद्बुद्ध्या प्रार्थितो वा स्वबुद्ध्या प्रेरितोऽपि वा ।**
**ब्राह्मणैः प्रेरितो भक्त्या वदतो होतुरञ्जसा ।**
**ब्रह्माणि सोमयुक्तानि यजमानस्य वेच्छतः ।**
**उपाया ह्यपि यः कोऽपि साधको यज्ञकृन्मतः ।**
**मानसो वाचिको वा स्याद्यज्ञो होता ह्ययन्स च ॥२३॥**

**टीका**

हे इन्द्र ! धिया अस्मद्बुध्येषितोधीष्टः । प्रार्थित इति यावत् । अथवा स्वबुद्ध्या प्रेरितो विप्रजूतो ब्राह्मणैः ऋत्विग्भिः भक्त्या प्रेरितस्त्वं

१. समर्थितं - क ।

**वाघतोऽञ्जसा वदतः सुतवतो होतुः सुतवतः सोमवतो यजमानस्य। सोमयुक्तानि ब्रह्माणि स्तुतिवाक्यान्युपायाहि। होतुर्ब्रह्माणि। यजमानस्य सोमान्। अत्र सोमशब्दाभावेऽपि सुतवत इति पदसामर्थ्यात्सोमानिति लभ्यते। अध्यात्मं सुतवच्छब्दं व्याचष्टे इच्छतो वेति। मनो हि सोमः। तद्रूपा चेच्छा। अतः सुतवत इच्छत इत्यनर्थान्तरम्। नन्वध्यात्मं को यजमानः कश्च यज्ञः को वा होतेत्यत आह यः कोऽपीति। साधको मोक्षस्य। स च स एव साधको यदा परमेश्वरमाह्वयन् भवति तदा होता चोच्यत इत्यर्थः॥ २३॥**

## टिप्पणी

इषु गताविति धातोर्निष्पन्नस्येषितशब्दस्य धातूनामेकार्थत्वात्प्रकृते प्रार्थनार्थत्वं प्रेरणार्थत्वं चेत्यभिप्रेत्य भाष्ये प्रार्थितो वा प्रेरिते वेति द्वेधा व्याख्यातमिति भावेन ऋक्पदानुवादपूर्वकं तस्य भाष्यपदेन संवादयितुं विवक्षितार्थं दर्शयन् योजनामाह **इषितोऽधीष्ट इत्यादिना**। **स्वबुद्ध्येति**। स्वेच्छाधीनप्रवृत्तिमानित्यर्थः। ईश्वरस्य स्वतन्त्रत्वेन प्रेरकान्तरसम्भवात् स्वबुद्ध्येत्युक्तमिति ज्ञातव्यम्। बुद्धेरीश्वरस्वरूपत्वेऽपि विशेषबलात् प्रेर्यप्रेरकभावोपपत्तिरिति ज्ञेयम्।

सुत अभिषुतः सोमस्यास्तीति सुतवान् तस्य सुतवत इत्यभिप्रेत्य योजनामाह **सोमवत इति**। 'अन्येषामपि दृश्यते' इति वा आधिक्येऽधिकमिति वा संहितायां दीर्घ इति ज्ञेयम्।

उपाया ह्यपीत्यत्र श्रुतापिशब्दः बाह्याध्यात्मरूपार्थयोः समुच्चयार्थः इति भावेन क्रियापदमात्रमनूद्य तस्यान्वयं दर्शयति **स्तुतिवाक्यान्युपायाहीति**। सोमयुक्तानि ब्रह्माणीत्युक्त्या उभयेषामुभयसम्बन्धित्वं

वान्यतरसम्बन्धित्वं वा प्रतीयत[1] अतस्तान्निवारयितुं[2] यथायोगमन्वय इत्युपेत्य योजनामाह **होतुरिति**। होतुः ब्रह्मणि वेदरूपस्तुतिवाक्यानि प्रति यजमानस्य सोमान् प्रत्यपायाहीति यथायोगमन्वयो ज्ञेय इति भावः ।

ननु ऋचि सोमानिति पदाश्रवणात् कथं यजमानस्य सोमानिति सम्बन्ध प्रदर्शित इत्यत आह **अत्रेति**। **सामर्थ्यादिति**। ऋचि यजमानस्येत्येव वक्तव्ये सुतवत इति सोमवत्वरूपविशेषणोपादानसामर्थ्यात् सोमानित्युच्यत इत्यर्थः । साधक इत्यत्रापेक्षितशेषमाह **मोक्षस्येति**। स चेत्यत्र चशब्द एवार्थस्सन् यजमानहोत्रोर्भेदप्रतीतिनिरासपर इत्यभिप्रेत्य योजनामाह **स च स एवेति**। साधक एवेत्यर्थः । स चेत्यत्र चशब्द आवृत्तस्सन् यजनामानत्वहोतृत्वयोः समुच्चयार्थतया होतेत्यनेनान्वेतीत्यभिप्रेत्याह **होता चेति**। तथा चेन्द्रविषयतया वेदवाक्यैराह्वानरूपवाचिकयज्ञे होतुर्ब्रह्मणि वेदरूपस्तु वाक्यानि प्रति मनोवृत्तेरिन्द्रियविषयत्वरूपमानसिकयज्ञे यजमानस्य सोमान् मनोवृत्तीः उपायाहीति योजना द्रष्टव्येति भावः ॥ २३ ॥

**मंत्रः – २४**

(अ.१, सू.३, मं.६)

**इन्द्रा याहि तूतुंजान उप ब्रह्माणि हरिवः ।**
**सुते दंधिष्व नश्चनंः ॥**

**पदपाठः**

**इन्द्रं । आ । याहि । तूतुंजानः । उपं । ब्रह्मांणि ।**
**हरिऽवः । सुते । दधिष्व । नः । चनंः ॥**

---

१. ज्ञायते - क ।　　२. तां वारयितुं - क ।

भाष्यम्

**वेगवांस्तूतुजानः स्यात्संसारमुपसंहरन् ।**

**वर्तते येन हरिवा हरिभिर्वर्ततेऽथ वा ।**

**हरणाद्विषयाणां च प्राणा हरय ईरिताः ।**

**तेषु वर्तत इत्यस्मात्तान् वाथ गमयेदसौ ।**

**हरिवा हरिवान् वाऽपि विष्णुना वर्ततेऽथवा ।**

**चनो मन इह प्रोक्तं सुखं च क्वचिदीर्यते ॥ २४ ॥**

टीका

अत्र तूतुजानपदं व्याचष्टे **वेगवानिति** । तुजतिर्गत्यर्थः तस्माच्छन्दसि भृशार्थे यङ् । तस्य लुक् ततः चानश् । हरिव इत्येतद्व्याचष्टे **संसारमिति** । हरतेः कर्तरीकारः । वृतु वर्तने । अस्मादसुन् डिच्च । संसारमिति योग्यतया सम्बन्धः । भक्तानां संसारं हरति वर्तते च । उपसंहरन् वर्तत इति यावत् । येन कारणेन तेन हरिवाः परमेश्वरः । तस्य सम्बुद्धिर्हरिवः । अथ वा हरिभिर्हरिनामकैरश्वैर्वर्तत इति हरिवाः पुरन्दरः । हरणादित्याद्यध्यात्मविषयम् । गमयेदित्यनेनान्तर्णीतण्यर्थो वृतिरित्युक्तं भवति । वातेर्वेदं रूपम् । हरिवान्वापि हरिनामकाश्ववानिति वा । छन्दसीर इति मतोर्वः । मतुवसोरुसम्बुद्धौ छन्दसीति रुत्वम् । अथवा हरिणा विष्णुना प्रेरितो वर्तत इति हरिवाः शक्रः । चनःशब्दार्थमाह **चन इति** । क्वचित् चनोधाः सहसो यहो इत्यादौ । हे हरिव ! इन्द्र नो ब्रह्माणि स्तुतिवाक्यानि प्रति तूतुजानः उपायाहि । आगत्य चनः सुतेऽस्मदीये सोमे च नो मनो दधिष्व धत्स्व । अस्मदीयं सोममिच्छ ॥ २४ ॥

वान्यतरसम्बन्धित्वं वा प्रतीयत[१] अतस्तान्निवारयितुं[२] यथायोगमन्वय इत्युपेत्य योजनामाह **होतुरिति**। होतुः ब्रह्मणि वेदरूपस्तुतिवाक्यानि प्रति यजमानस्य सोमान् प्रत्यपायाहीति यथायोगमन्वयो ज्ञेय इति भावः ।

ननु ऋचि सोमानिति पदाश्रवणात् कथं यजमानस्य सोमानिति सम्बन्ध प्रदर्शित इत्यत आह **अत्रेति**। **सामर्थ्यादिति**। ऋचि यजमानस्येत्येव वक्तव्ये सुतवत इति सोमवत्वरूपविशेषणोपादानसामर्थ्यात् सोमानित्युच्यत इत्यर्थः । साधक इत्यत्रापेक्षितशेषमाह **मोक्षस्येति**। स चेत्यत्र चशब्द एवार्थस्सन् यजमानहोत्रोर्भेदप्रतीतिनिरासपर इत्यभिप्रेत्य योजनामाह **स च स एवेति**। साधक एवेत्यर्थः । स चेत्यत्र चशब्द आवृत्तस्सन् यजनामानत्वहोतृत्वयोः समुच्चयार्थतया होतेत्यनेनान्वेतीत्यभिप्रेत्याह **होता चेति**। तथा चेन्द्रविषयतया वेदवाक्यैराह्वानरूपवाचिकयज्ञे होतुर्ब्रह्मणि वेदरूपस्तु वाक्यानि प्रति मनोवृत्तेरिन्द्रियविषयत्वरूपमानसिकयज्ञे यजमानस्य सोमान् मनोवृत्तीः उपायाहीति योजना द्रष्टव्येति भावः ॥ २३ ॥

**मंत्रः – २४**

(अ.१, सू.३, मं.६)

**इन्द्रा याहि तूतुंजान उप ब्रह्माणि हरिवः ।**
**सुते दधिष्व नश्चनः ॥**

**पदपाठः**

**इन्द्रं । आ । याहि । तूतुंजानः । उपं । ब्रह्मांणि ।**
**हरिऽवः । सुते । दधिष्व । नः । चनः ॥**

---

१. ज्ञायते - क ।  २. तां वारयितुं - क ।

### भाष्यम्

**वेगवांस्तूतुजानः स्यात्संसारमुपसंहरन् ।**
**वर्तते येन हरिवा हरिभिर्वर्ततेऽथ वा ।**
**हरणाद्विषयाणां च प्राणा हरय ईरिताः ।**
**तेषु वर्तत इत्यस्मात्तान् वाथ गमयेदसौ ।**
**हरिवा हरिवान् वाऽपि विष्णुना वर्ततेऽथवा ।**
**चनो मन इह प्रोक्तं सुखं च क्वचिदीर्यते ॥ २४ ॥**

### टीका

अत्र तूतुजानपदं व्याचष्टे **वेगवानिति** । तुजतिर्गत्यर्थः तस्माच्छन्दसि भृशार्थे यङ् । तस्य लुक् ततः चानश् । हरिव इत्येतद्व्याचष्टे **संसारमिति** । हरतेः कर्तरीकारः । वृतु वर्तने । अस्मादसुन् डिच्च । संसारमिति योग्यतया सम्बन्धः । भक्तानां संसारं हरति वर्तते च । उपसंहरन् वर्तत इति यावत् । येन कारणेन तेन हरिवाः परमेश्वरः । तस्य सम्बुद्धिर्हरिवः । अथ वा हरिभिर्हरिनामकैरश्वैर्वर्तत इति हरिवाः पुरन्दरः । हरणादित्याद्यध्यात्मविषयम् । गमयेदित्यनेनान्तर्णीतण्यर्थो वृतिरित्युक्तं भवति । वातेर्वेदं रूपम् । हरिवान्वापि हरिनामकाश्ववानिति वा । छन्दसीर इति मतोर्वः । मतुवसोरुसम्बुद्धौ छन्दसीति रुत्वम् । अथवा हरिणा विष्णुना प्रेरितो वर्तत इति हरिवाः शक्रः । चनःशब्दार्थमाह **चन इति** । क्वचित् चनोधाः सहसो यहो इत्यादौ । हे हरिव ! इन्द्र नो ब्रह्माणि स्तुतिवाक्यानि प्रति तूतुजानः उपायाहि । आगत्य चनः सुतेऽस्मदीये सोमे च नो मनो दधिष्व धत्स्व । अस्मदीयं सोममिच्छ ॥ २४ ॥

## टिप्पणी

ननु नित्यं कौटिल्ये गतौ इति सूत्रे वृत्त्यादौ नित्यग्रहणं विषयनियमार्थं गतिवचनात् कौटिल्य एवेदं भवति न तु क्रियासमभिहारशब्दिते पौनः-पुन्ये भृशार्थे चेत्युक्तत्वेन गत्यर्थात् धातोर्भृशार्थे यङो निषेधात् प्रकृते गत्यर्थतुजधातोः कथं भृशार्थे यङ्प्रत्यय इत्यत आह **छन्दसीति**। 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' इति छान्दसोऽयं भृशार्थे यङ्प्रत्ययेति भावः । **हरतेरिति**। हृञ् हरण इति धातोः कर्त्रर्थ इकारप्रत्यये 'सार्व-धातुकार्धधातुकयोः' इति गुणे हरिशब्दनिष्पत्तिरिति भावः । **येनेति**। यच्छब्दप्रतिसम्बन्धिनमध्याहृत्य योजनामाह **तैरिति**[1] ।

**हरिनामकैरश्वैरिति**। हरि इन्द्रस्य रोहितोऽग्नेः हरित आदित्यस्येति हरिशब्दस्येन्द्राश्ववाचकत्वेन प्रसिद्धत्वादिति भावः । अस्मिन् पक्षेऽश्व-वाचितया रूढहरिशब्दोपपदात् वृतु वर्तन इति धातोः पूर्ववत् प्रक्रिया ज्ञेया। **हरणादित्यध्यात्मविषयमिति**। 'हरणात् विषयाणां च प्राणा हरय ईरिताः। तेषु वर्तत इत्यस्मात् तान्वाथ गमयेदसाविति व्याख्यानमध्यात्म-विषयमित्यर्थः ।

**गमयेदित्यनेनेति**। तान्वाथ गमयेदित्यर्थकथनेन हरीन् प्राणान् वर्तयेत् प्रेरयेदिति हरिवा इत्यन्तर्णीतण्यर्थतया वृतुवर्तनं इति धातुरूपं व्याख्यातं भवतीत्यर्थः। 'इन्द्रियाणि हयान्याहुः' इति श्रुतेर्हरिशब्दितेन्द्रियेषु वर्तनस्य 'निषुसीद गणपते' इत्यादिप्रमाणप्रमितत्वेन स्पष्टत्वादर्थप्रदर्शनं न कृतमिति ज्ञेयम् ।

---

१. एतेनेति – क ।

**वातेर्वेदं रूपमिति** । प्रमाणवाचिहरिशब्दोपपदात् वा गतिगन्धनयो-रित्यस्मादन्तर्णीतण्यर्थात् कर्तर्यसुन्प्रत्यये टिलोपे सति निष्पन्नस्य हरिवः शब्दस्य प्राणानुगमयेदिति व्याख्यानं युक्तमिति भावः । ननु हरयोऽस्य सन्तीत्यर्थे मतुपि कृते सम्बुद्धौ हरिमन्निति निर्देशः स्यात्, कथं हरिव इति निर्देश इत्यत आह **छन्दसीर इति** । छन्दसि विषये इवर्णान्ताद्रेफान्ताच्च परस्य मतुपो मकारस्य वकारो भवतीति सूत्रार्थः । क्वचिद् छन्दसीणेति पाठो दृश्यते तत्र इणेति पाठो लेखकदोषमूल इति ज्ञेयम् । तथा च मस्य वकारे 'मतुवसोररसम्बुद्धौ छन्दसि' इति सूत्रेण नकारस्य रुत्वे विसर्गे च हरिव इति रूपसिद्धिरिति भावः । भाष्ये हरिमानिति निर्देशे कर्तव्ये हरिवानिति निर्देशस्तु श्रौतपदानुवादरूपत्वाद्वा भाष्यस्यापि छन्दस्तुल्यत्वज्ञापनाय वेति ज्ञेयम् ।

ननु हरिभिर्वर्तत इति हरिवान् वेत्यनयोरेकार्थत्वेन पौनरुक्त्यमिति चेन्न, अर्थैक्येऽपि कृद्वृत्ति तद्धितवृत्तिरूप[1] व्युत्पत्तिप्रकारभेदेन पौनरुक्त्य-परिहारोपपत्तेरिति । उक्तं च सुधायाम् ॐपदव्याख्यानरूपस्य ओतत्व-वाचीत्याद्यनुव्याख्यानस्थस्य ओतपदव्युत्पत्तिप्रस्तावे ओपदस्याधातुजत्वं व्युत्पाद्य धातूनामनेकार्थत्वाश्रयणेनावधात्वर्थत्वं वेञ्तन्तुसन्तानेति धातो-रङ्गीकृत्य वेञ् तन्तुसन्तानेति धातुजत्वमप्योतपदस्य[2] व्युत्पाद्य वैचित्र्यं तु धातुद्वयजत्वसूचनार्थमिति[3] तद्वत्प्रकृतेऽप्यर्थैक्येऽपि व्युत्पत्तिप्रकारे वैचित्र्योपपादनमिति । अथवा 'तदस्यास्त्यस्मिन्निति मतुप्' इति सूत्रे वृत्तौ 'भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने । सम्बन्धेऽस्तिविवक्षायां भवन्ति मतुबादयः' इत्युक्तत्वेन मतुबर्थस्य प्रशंसादिरूपत्वेनार्थाधिक्यान्मतुबन्ततया

---

१. कृत्तद्धितवृत्तिरूप - क । २. धातुजत्वमोंपदस्य - क ।
३. धातुद्वयजत्व-सूचनार्थत्वमिति - क ।

व्याख्यानं कृतमिति। अथवा हरिणेति हरिशब्दोपपदात् वृतु वर्तन इति धातोः पूर्ववत्प्रक्रिया ज्ञेया । हरिवान्वापि विष्णुना वर्तत इत्येतद्व्याख्यानद्वयं प्रसिद्धेन्द्रपरमित्यभिप्रेत्याह **शक्र इति** । सुखं च क्वचिदीर्यत इति चनश्शब्दार्थतया सुखमपि क्वचित्प्रतिपाद्यत इत्युक्तम्, तत्कुत्रेत्याकाङ्क्षायां भाष्यपदानुवादपूर्वकमुदाहरणमाह **क्वचित् चनो धाः संहसो यव इत्यादाविति** । ऋक्पदानि योजयति **हे हरिव इत्यादिना** । उपायाहीत्युक्ता गमनस्य दधिष्वेत्युक्तक्रियां प्रति हेतुत्वस्फोरणाय अपेक्षिताध्याहारेण योजनामाह **आगत्य चेति** ॥ २४ ॥

**मंत्रः – २५**

(अ.१, सू.३, मं.७)

**ओमा॑सश्चर्षणीधृतो॒ विश्वे॑ देवा॒स आ ग॑त ।**
**दा॒श्वांसो॑ दा॒शुषः॑ सु॒तम् ॥**

**पदपाठः**

**ओमा॑सः । च॒र्ष॒णि॒ऽधृ॒तः॒ । विश्वे॑ । दे॒वा॒सः॒ । आ । ग॒त॒ । दा॒श्वांसः॑ । दा॒शुषः॑ । सु॒तम् ॥**

**भाष्यम्**

**आसमन्तात्स्वीकृता[1] मा ओमा इति च [2]शब्दिताः ।**
**ॐनामा भगवान्विष्णुस्तेन वा निर्मिताः सुराः ।**
**ओता मानेषु मा वैषु प्रोता ओमा इतीरिताः ।**

१. स्वीकृतमा पा० । २. कीर्तिताः पा० ।

**प्रजाश्चर्षणयः प्रोक्ता विश्वे ते च प्रवेशनात् ।**
**सर्वे वाऽथ विशां वानाच्छब्दः कस्मै यथा भवेत् ।**
**दातारो यजमाना वा ॥ २५ ॥**

**टीका**

**आ** इत्यनुवादः **समन्ताद्** इति व्याख्यानम् । ऊ इति निपात ऊरीकरणे वर्तते । आ समन्तादूरीकृताः स्वीकृताः माः प्रमा यैस्ते ओमा इति कीर्तिताः । चशब्दो व्याख्यानसमुच्चये । सर्वविषयज्ञानवन्त इत्यर्थः । इदं परमेश्वरे मुख्यम् । देवेष्वमुख्यं ॐनामेत्यनेन ॐशब्द-समानार्थ ओशब्दः मा निर्माण इत्यस्मात्कर्मणि कप्रत्यय इत्युक्तं भवति । ओनामकेन विष्णुना मिता निर्मिता इति वा ओमाः । इदं च व्याख्यानं न भगवद्विषयमित्याहुरा इति । ओशब्द ओतत्ववाची । अवतिरूपत्वात् । ओताः प्रविष्टाः मानेषु प्रमाणेषु प्रतिपाद्यतयेति वा ओमाः । उपसर्जनस्य परनिपातः । माः प्रमाः येषु प्रोताः प्रतिपादकतया प्रविष्टा इति वा ओमा ईरिताः । ओता मा येषु ते तथोक्ता इति प्रोक्ताः नैघुण्टकैः । ते भगवद्रूपविशेषाः देवाश्च प्रेरकतया सर्वत्र प्रवेशनाद्विश्वे च प्रोक्ताः । विश प्रवेशने । ततो वः किञ्च देवतापक्षे सर्वशब्दपर्यायो वा विश्वशब्द इत्याहुर्सर्वे वेति । अथवा विशां प्रजानां वानात् गमनात् ज्ञानाद्वा । विशो वान्तीति विश्वे ।

ननु च प्रवेशनाद्विशां वानादिति पक्षद्वये विश्वे इति रूपं न सिद्ध्यति । सर्वशब्दपर्यायस्यैव विश्वशब्दस्य सर्वनामसंज्ञास्मरणात् । सर्वनाम्न एव परस्य जसः शीभावविधानादिति तत्राहुब्द इति । यथा खलु कस्मै देवाय हविषा विधेमेत्यत्र प्रजापतिपर्यायस्य कशब्दस्य

**सर्वनामसंज्ञाभावेऽपि सर्वे विधयः छन्दसि बहुलं भवन्तीति सर्वनाम्नः स्मा इति सर्वनामकार्यं दृश्यते। एवमिहापि विश्वशब्दस्य सर्वनामसंज्ञाभावेऽपि सर्वनामकार्यं जसः शीत्वं भविष्यतीति। दाश्वांस इत्यत्र दातारो यजमाना वेत्यर्थद्वयम्। दाशृ दाने। यजमाना वेति देवान्तरविषयम्। हे ओमासः! ओमाश्चर्षणीधृतः चर्षणीनां धर्तारो दाश्वांसो दातारो यजमाना वा विश्वेदेवाः दाशुषो दातुर्यजमानस्य वा सुतं सोमं प्रत्यागताऽगच्छत ॥ २५ ॥**

### टिप्पणी

**चशब्द इति**। चेत्यत्र श्रुतचशब्दः आ समन्तात् स्वीकृता मा इत्युक्तस्य ओमशब्दव्याख्यानस्य ओनामा भगवानित्यादिना वक्ष्यमाणव्याख्यानत्रयसमुच्चये वर्तत इत्यर्थः। **इदं चेति**। आ समन्तात् स्वीकृता मा इत्योमशब्दस्य सर्वविषयकज्ञानवन्त इत्यर्थपरतया व्याख्यानमित्यर्थः। 'यः सर्वज्ञः सर्ववित्, एष सर्वेश्वर एष सर्वज्ञः' इत्यादिप्रमाणैः स्वपरगतदोषविशेषार्थविषयकत्वरूपसार्वज्ञस्य परमेश्वरेऽवगतत्वात्तत्र तन्मुख्यं ब्रह्मादिदेवेषु यथायोग्यं सार्वज्ञ्यं ज्ञेयमिति भावः। उपलक्षणं च तत् ओतामानेषु मा वैषु प्रोता इति व्याख्यानद्वयमपि परमेश्वरे मुख्यम्। देवेष्वमुख्यमिति ज्ञेयम्।

**ॐनामेत्यनेनेति**। [१]ॐनामा भगवान् विष्णुः तेन वा निर्मित इत्यनेनेत्यर्थः। **ॐशब्दसमानार्थ ओशब्द इति**। अव रक्षणगतिकान्ति

---

१. निष्पन्नस्योंशब्दस्य ओतत्ववाची ह्योङ्कार इत्यादिना अनुव्याख्यानेऽत्रापि च ओमशेषगुणाधार इत्यादिना तथोपनिषद्भाष्यादौ च भगवद्वाचितया निर्णीतत्वात् प्रकृते भगवान् विष्णुस्तेन वा निर्मिता सुरा इत्यनेनेत्यर्थ इत्युक्तं भवतीति वक्ष्यमाणेन सम्बन्धः - क।

प्रीतितृप्त्यवगमप्रवेशश्रवणस्वाम्यसामर्थ्ययाचनक्रियेच्छादीप्त्यवाप्त्या लिङ्गन-हिंसादानदहनभाववृद्धिष्विति रक्षणार्थादवधातोः 'अवतेष्टिलोपश्च' इति सूत्रेण निष्पन्नस्य ओशब्दस्य[1] 'ओतत्ववाची ह्योङ्कार' इत्यादिना अनुव्याख्याने-ऽत्रापि ओमशेषगुणाधारेत्यादिना, तथा उपनिषद्भाष्यादौ भगवद्भाचितया निर्णीतत्वात् प्रकृतेऽवधातोरेव निष्पन्नस्य ओशब्दस्यापि ॐशब्दसमा-नार्थत्वेन विष्णुवाचित्वमुपपन्नमिति भावः ।

**कप्रत्यय इति** । ओशब्दोपपदात् मा निर्माणेति धातोः कर्मकारकेऽर्थे औणादिककप्रत्यये ककारलोपे 'आतो लोप इटि च' इति धातोरकारलोपे ओमशब्दनिष्पत्तिरिति भावः । प्रथमाबहुवचने जसि 'आज्जसेरसुक्' इत्यसु-गागमे ओमास इति रूपमिति ज्ञेयम् । **इदं चेति** । 'विष्णुना निर्मिता' इत्युक्तव्याख्यानमित्यर्थः ।

**अवतिरूपत्वादिति** । पूर्वोक्तानेकार्थादवधातोः औणादिक डोप्रत्य-यान्ततया वा तस्मादेव धातोः क्विप्प्रत्यये तस्य सर्वापहारिलोपे ज्वरत्वरे-त्यादिना उपधावकारस्य च ऊठि छान्दसगुणे च ओ इति क्विप्प्रत्ययान्त-तया निष्पन्नस्य प्रवेशार्थकत्वमादाय ओतत्वरूपप्रविष्टत्ववाचित्वमुपपन्न-मिति भावः ।

ननु मासमानेषु ओता इति विगृह्य 'सप्तमीशौण्डैः' इत्यत्र सप्तमीति योगविभागेन सप्तम्यन्तस्य माशब्दस्य ओशब्देन समासे कृते सप्त-म्यन्तसमासशास्त्रे प्रथमानिर्दिष्टत्वेन 'प्रथमा निर्दिष्टं समास उपसर्जनम्' इत्युपसर्जनसंज्ञायां 'उपसर्जनं पूर्वम्' इति पूर्वनिपातप्रसङ्गादित्यत आह **उपसर्जनस्येति** । 'राजदन्तादिषु परम्' इति सूत्रे उपसर्जनस्य परनिपात-

---

१. ॐशब्दसमानार्थत्वेन विष्णुवाचित्वमुपपन्नमिति भावः - क ।

त्वोक्ते अत्राप्युपसर्जनस्य परनिपात इति भावः । उपसर्जनं पूर्वमिति सूत्रे दुर्घटवृत्त्यादौ राजदन्तादेराकृतिगणत्वस्य कथनादिति ज्ञेयम् । विस्तृतं चैतदस्माभिः 'अन्तस्वान्तमुपास्महे' इत्याद्यपद्यस्थान्तःस्वान्त-पदव्याख्यावसर इति तत्रैव ज्ञेयम् । केचित्तु परनिपातः छान्दस इति वर्णयन्ति ।

म येषु[1] प्रोता इति भाष्यवाक्यस्यार्थमाह **मा प्रमा इति**। श्रुति-गतस्य ओमास इत्यस्य भाष्यानुसारेण विग्रहं दर्शयति **ओता मा येष्विति**। अस्मिन् पक्षे 'सप्तमी विशेषणे बहुव्रीहौ' इत्योतशब्दस्य विशेषणवाचिनः पूर्वनिपातो युक्त इति भावः । प्रजाश्चर्षणयः प्रोक्ता इत्यत्र कैरिति कर्त्राकाङ्क्षायामाह **नैघण्टुकैरिति**। वेदनिघण्टौ 'मनुष्याः, नरः, धवः, जन्तवः, [2]शविः, क्षितियः, कृष्टयश्चर्षणयः, इत्यादिषु पञ्च-विंशतिसंख्याकेषु मनुष्यनामसु चर्षणिशब्दः पठित इति भावः । तथा च मनुष्यश्चर्षणयप्रोक्ता इति मूलार्थो ज्ञेयः । भाष्येऽथशब्दो वाशब्दार्थ इत्यभिप्रेत्य तदनूद्य तस्य प्रतिपदमाह **अथवेति**। तस्य वानादित्यनेन अन्वय इत्युपेत्य तदर्थानुवादपूर्वकं योजनामाह **गमनात् ज्ञानाद्वेति**। वा गतिगन्धनयोरिति धातोः गत्यर्थत्वेन ज्ञानार्थत्वादिति भावः । अतदर्थकगतिशब्दस्य चेष्टाज्ञानरूपोभयार्थतामुपेत्य तदर्थद्वयसमुच्चायकतया टीकाकृदुक्तोऽयं वाशब्देति ज्ञेयम् । अथवेति वाशब्दस्तु प्रवेशनरूप-पूर्वोक्तार्थसमुच्चायक इति ज्ञेयम् ।

---

१. एषु - क ।

२. जन्तवस्सविः विशक्षितयः, कृष्णयश्चर्षणयः - क ।

नन्वेवं वानादित्यस्यार्थद्वयपरत्वे पूर्वोक्तार्थेन पक्षत्रयत्वात् कथं पक्षद्वयेति वक्ष्यमाणानुवाद इति चेन्न; गतिशब्दार्थत्वेनैकीकृत्य तथा-व्यवहारोपपत्तेरिति । भाष्यार्थं मूलारूढतया विग्रहप्रदर्शनेन दर्शयति **विशो वान्तीति विश्व इति** । विट्शब्दोपपदाद्वातेः 'आतोऽनुपसर्गे कः' इति कप्रत्यये 'आतो लोप इटि च' इत्याकारलोपे 'सर्वे विधयश्छन्दसि बहुलं भवन्ति' इति पदसंज्ञाश्रयणाभावाद् व्रश्चेत्यादिना षत्वजस्त्वयोरभावे च विश्वशब्दो निष्पन्न इति भावः ।

ननु ओमास इत्यस्य प्रथमव्याख्याने आ समन्तात् स्वीकृता मा इत्युक्त सार्वज्ञघटनाय प्रजानामपि ज्ञानविषयतया प्राप्तत्वात् किमर्थं तद्विषयतया पुनः कथनमिति चेन्न, 'प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः, न तादृशी प्रीतिरीड्यस्य विष्णो गुणोत्कर्षज्ञातरि यादृशी स्यात्' इत्यादिप्रमाणैरीश्वरस्य भक्तेषु विशेषानुग्रहप्रदर्शनाय पुनः कथनोप-पत्तेरिति ।

यद्वा वानात् ज्ञानादित्यस्य ज्ञानदातृत्वादित्यर्थः । विशो वान्ती-त्यत्रापि विशः प्रति ज्ञानदातारो भवन्तीत्यर्थो ज्ञेयः । गतिशब्दस्य चेष्टा-र्थकत्वे तु तदंशे पुनरुक्तिप्रसङ्गो नेति ज्ञेयम् । **प्रजापतिपर्यायस्येति** । चतुर्मुखवाचि पर्यायस्येत्यर्थः । 'कश्छन्दसां योगमावेद धीरः प्रजापतिर्वै कः' इत्यादिश्रुतिषु कश्शब्दस्य चतुर्मुखवाचित्वं प्रसिद्धमिति भावः । विस्तृतं चानुमानिकपादीयानुव्याख्यानसुधयोः कश्शब्दस्य चतुर्मुख-वाचित्वं कश्छन्दसामिति श्रुतेः योगार्थतत्त्ववित् ब्रह्मैको नैव चान्योऽस्ति कः इत्यस्योभयार्थत इत्यादिनेति ज्ञेयम् । 'मारुते वेधसि ब्रध्ने पुंसि कः कं शिरोऽम्बुनोः' इत्यमरोक्तेश्च कशब्दस्य प्रजापति-

पर्यायत्वमिति ज्ञेयम् । [1]वृचं योजयति हे होमास इत्यादिना । देवशब्दव्याख्यानं तु अग्निमीळे इत्यत्रोक्तरीत्या ज्ञेयमिति भावः । ॥ २५ ॥

मंत्रः – २६

(अ.१, सू.३, मं.८)

**विश्वे॑ दे॒वासो॑ अ॒प्तुरः॑ सु॒तमा ग॑न्त॒ तूर्ण॑यः ।**
**उ॒स्रा इ॑व॒ स्वस॑राणि ॥**

पदपाठः

**विश्वे॑ । दे॒वासः॑ । अ॒प्ऽतुरः॑ । सु॒तम् । आ ।**
**ग॒न्त॒ । तूर्ण॑यः । उ॒स्राःऽइ॑व । स्वस॑राणि ॥**

भाष्यम्

**अप्तुरः कर्मवेगिनः ।**
**उस्रास्तु रश्मयश्चैव स्वसराणि दिनानि च ॥ २६ ॥**

टीका

अप्शब्दः कर्मवाची । तुर त्वरणे । ततः क्विप् । ततोऽप्तुरः कर्मवेगिनः । एवशब्देनाभिधानिकत्वान्निर्वचनानपेक्षत्वं सूचयति । हे अप्तुरो विश्वेदेवाः ! स्वसराणि दिनानि प्रत्युस्रा रश्मय इव तूर्णयः त्वरितास्सन्तोऽस्मदीयं सुतमागन्त आगच्छत ॥ २६ ॥

---

१. ऋचमिति भाव्यमिति भाति ।

**टिप्पणी**

अप्शब्दः कर्मवाचीति । ईशावास्योपनिषदि 'तस्मिन्नपो मातरिश्वा दधाति' इत्यत्र भाष्ये तस्मिन् कर्मण्यधान्मरुत्, मारुत्येव यतश्चेष्टा सर्वा तां हरयेऽर्पयेत् इति ब्रह्माण्डेत्युक्तत्वेनाप्शब्दस्य कर्मवाचितया श्रुत्यादि-प्रमाणप्रसिद्धत्वादिति भावः ।एवशब्देनेति । उस्रास्तु रश्मयश्चैवेत्येवशब्देन रश्मिशब्दितकिरणानामुस्राशब्दार्थत्वस्य 'किरणोस्रमयूखांशुगभिस्तिघृणि-[१]घृष्टय' इत्यभिधानसिद्धत्वान्निर्वचनापेक्षत्वं सूचयतीत्यर्थः । स्वसराणि दिनानीति वस्तः वासरः स्वसराणि मंस मधी हवमित्यादिषु द्वादशसहस्र-नामसु स्वसराणीत्येतत्पठितमिति भावः ॥ २६ ॥

**मंत्रः – २७**

(अ.१, सू.३, मं.९)

**विश्वे देवासो अस्रिध एहिमायासो अद्रुहः ।**
**मेधं जुषन्त वह्नयः ॥**

**पदपाठः**

**विश्वे । देवासः । अस्रिधः । एहिऽमायासः ।**
**अद्रुहः । मेधम् । जुषन्त । वह्नयः ॥**

**भाष्यम्**

**असंसारादस्रिधस्ते देवाश्चेन्मोक्षनिश्चयात् ।**
**यथेष्टनिश्चितज्ञाना एहि मायाः समन्ततः ।**
**अदुःखत्वाद्द्रुहस्ते मेधं यज्ञं जुषन्तु नः ।**
**वह्नयो वहनादस्य ॥ २७ ॥**

१. रश्मयः –अमरकोशे मुद्रितः पाठः । १-३-३३

**टीका**

स्रिधुर्हिंसार्थः । ततः क्विप् । न विद्यते स्रिद्येषां तेऽस्रिधः अहिंस्याः । एतद्भगवत्युपपादयति **असंसारादिति**। देवतान्तरे घटयति **देवाश्रेदिति**। मोक्षनिश्चयात् उपचारेणास्रिध इत्यर्थः । आ इत्यस्य समन्तत इति व्याख्यानम् । इशब्द इच्छावाची । इषु इच्छाया-मित्यतो डिः । अत उक्तं **यथेष्टेति**। हिशब्दः प्रसिद्धिवाचित्वान्निश्च-यार्थः । मायाशब्दो ज्ञानार्थः । प्रज्ञानामसु पाठात् । सर्वविषयस्वतन्त्र-निश्चयज्ञाना इत्यर्थः । द्रुहः क्लेशार्थः । ततः सम्पदादित्वात्क्विप् । न विद्यते ध्रुक् येषां तेऽद्रुह इत्यभिप्रेत्योक्तं **अदुःखत्वादिति** । जुषन्त जुषत सेवध्वम् । तस्य तात्पर्यं ते जुषन्त्विति । अस्य जगतो वहनात् प्रवर्तनात् । वहतेरौणादिको निः ॥ २७ ॥

**टिप्पणी**

**एहिमायास** इत्यत्र आ स् हि मायास इति वर्णविभागमङ्गीकृत्य[1] भाष्यार्थारूढतया क्रमेण व्याचष्टे **आ इत्यस्य चेत्यादिना**। **प्रज्ञानाम-स्विति**। केतः केतुः चेतः चितम् । क्रतुः असुः धीः शुचिः माया वयुनमभिरूपेत्येकादश प्रज्ञानामसु मायाशब्दस्य पाठादित्यर्थः । **द्रुहेति**। द्रुह जिघांसायामिति धातुपाठात् क्लेशार्थकत्वमिति भावः ।

**न विद्यते ध्रुगित्यादिना**। प्रज्ञानामस्विति पक्षे 'एकाचोबशब्द' इति भष्भावे च ध्रुगिति रूपमिति ज्ञेयम् । जुषी प्रीतिसेवनयोरित्यस्माद्धातोः शविकरणात्मनेपदि परस्य लोण्मध्यमपुरुषबहुवचनस्य स्थाने व्यत्ययेन प्राप्तस्य प्रथमपुरुषबहुवचनस्य झस्यान्तादेशे शप्रत्ययाकारस्य 'अतो गुण'

१. आ इहीति वर्णविभागमङ्गीकृत्य - क ।

इति पररूपत्वे प्रत्ययस्य 'सार्वधातुकमपित्' इति ङित्वाल्लुघूपधगुणाभावे 'सर्वे विधयश्छन्दसि विकल्प्यन्त' इति टेरेत्वाभावे 'आमेत:' इत्यस्याप्रवृत्तेः ऋचि जुषन्त इति रूपमित्यभिप्रेत्य तदनूद्य व्याचष्टे **जुषन्त जुषतेति** । चक्षिङ व्यक्तायां वाचीति धातोरनुदात्तत्वेऽपि ङित्करणमनुदात्तेत्वनिबन्धनमात्मनेपदमनित्यमिति ज्ञापनार्थमिति व्याख्यादावुक्तत्वेन भाष्ये जुषन्त्विति परस्मैपदप्रयोगो युक्त इति ज्ञापनाय जुषतेति परस्मैपदानुवादः कृत इति ज्ञेयम् ।

ननु विश्वेदेवास आगत सुतमागतेति मध्यमपुरुषप्रायपाठात् जुषन्तेत्येतदपि मध्यमपुरुषपरमिति वक्तव्यम् । तथा च कथं भाष्ये प्रथमपुरुषार्थतया व्याख्यानं क्रियत इत्यत आह **तस्य तात्पर्यमिति** । व्यत्ययाभेदकरणस्वातन्त्र्ये च विवक्षित इत्युक्तेः । तेषां सोमादिग्रहणे स्वातन्त्र्यमिति ज्ञापनाय ऋचि जुषन्तेति व्यत्ययेन निर्देशः कृतः इत्यभिप्रेत्य भाष्येऽपि जुषत्विति व्यत्ययेनार्थप्रदर्शनं कृतमिति भावः । ॥ २७ ॥

**मंत्रः – २८**

(अ.१, सू.३, मं.१०)

**पावका नः सरस्वती वाजेभिर्वाजिनीवती ।**
**यज्ञं वष्टु धियावसुः ॥**

**पदपाठः**

**पावका नः । सरस्वती । वाजेभिः ।**
**वाजिनीऽवती । यज्ञम् । वष्टु । धियाऽवसुः ॥**

भाष्यम्

शोधकत्वात्तु पावकाः ।
सरणात्सर्वगत्वेन सर्वज्ञो वा सरो हरिः ।
सरसः सरतित्वाद्वा तद्वत्येव सरस्वती ।
हरौ गुणाः सरश्शब्दा देवी तु हरिवाचिनी ।
हरिप्रियत्वतो वायुः सरस्वांस्तत्प्रियाऽथवा ।
[1]गुणत्वेन ततत्वाद्वा भगवांस्तु सरस्वती ।
स्त्रीरूपश्चैव पुंरूपो भगवान्न नपुंसकः ।
स्त्रीपुंदोषविहीनत्वादपि तच्छब्दगोचरः ।
अन्नेनो वाजिनामीशो वाजिनी सूर्य उच्यते ।
वाजीनच्छन्दसां वाऽपि स्वामी प्रोक्तः स वाजिनी ।
छन्दांस्यश्वा यतस्तस्य ते चेना [2]अन्यवाजिनाम् ।
अन्नवत्त्वाद्वाजिनी वाग् ज्ञानयुद्धत्वतोऽपि वा ।
स पुत्रो वागुमा तस्याः पुत्री तद्वाजिनीवती ।
सरस्वती हरिर्वाऽपि यज्ञं वहतु नोऽशनैः ।
अन्नदा हि सदा देवी धिया सह वसेद्यतः ।
धियावसुर्नित्यबोधा[3] ॥ २८ ॥

टीका

सरस्वतीशब्दं व्याख्यातुं सरःशब्दार्थं तावदाह सरणादिति । सर्वत्र गमनात् । तस्यैव तात्पर्यं सर्वगत्वेनेति । सृगतौ । अस्मादसुन्-

---

१. गुणरस्त्वेन ततत्वात्तु भगवांश्च – पा० । २. अन्यवाचिनाम् – पा० । ३. बोधान् – पा० ।

प्रत्ययः। गत्यर्थानां ज्ञानार्थत्वात्सर्वज्ञो वासरः। सरसः ससार इति वासरः। बलवानित्यर्थः। रसाकारलोपः। सरतित्वात्ससुखत्वात्। रमेरसुन् डिच्च। सहरसा रत्या वर्तत इति सरः। तद्वती सरःशब्दार्थो हरिरस्यां विद्यत इति। इदं च व्याख्यानं देवतान्तरविषयम्। हरौ तु विवक्षिते उक्तनिरुक्त्या गुणाः ज्ञानादयः सर इति शब्दो येषां ते सरःशब्दाः। तद्वत्वात् सरस्वती। देवतान्तरस्य परमेश्वरवत्त्वं नाम किमित्यत आह **देवी त्विति**। वेदाभिमानित्वात्। उक्तनिर्वचनेन हरिः सरः। तद्वत्वात् तत्प्रियत्वतः। तत्प्रिया तद्भार्येति वान्या सरस्वती। उक्तनिरुक्त्या गुणाः सरःशब्दार्थाः। त एव स्वन्धनं सरस्वम्। तेन ततत्वाद्व्याप्तत्वात् सरस्वतः। सरस्वत[1]शब्दात् स्त्रियामीकारः।

ननु हरौ स्त्रीलिङ्गप्रयोगः कथम्। यदि स्त्रीत्वात् कथं तर्ह्यग्न्यादिपुल्लिङ्गप्रयोगः। तत्राह **स्त्रीरूप इति**। एवं चेद् ब्रह्मादिपदप्रयोगान्नपुंसकरूपोऽप्यङ्गीकार्यः। नेत्याह **नेति**। कथं तर्हि नपुंसकलिङ्गप्रवृत्तिस्तत्रेत्यत आह **स्त्रीति**। दोषाः पुरुषाभिलाषादयः। वाजिनीवतीशब्दं व्याख्यातुं वाजिनीशब्दार्थं तावदाह **अन्नेन इति**। वाजमन्नम्। तदेव तृतीयोऽतिशय इति वाजि। तन्नयतीति वाजिनी सूर्यः। [2]तस्य तात्पर्यम् अन्नेन इति। यद्वा वाजमन्नं वाजस्येनो वाजेनः। स एव वाजिनी सूर्यः। अविभक्तिको निर्देशः।

अथवा वाजिनामश्वानाम् अन्नवतां वा ईश इति। स एव वाजिनी। पूर्ववदुभयथा विवरणम्। अथवा वाजिनामश्वानामिनानि सप्त छन्दांसि वाजीनानि तान्येव शकन्ध्वादित्वाद्वाजिनानि। तान्यस्य

१. स्वच्छब्दात्। २. अस्य

सन्ति तेषां स्वामीति वाजिनी। वाजीनच्छन्दसां स्वामित्वं कथं सूर्यस्येत्यत आह छन्दांसीति । वाजिनीशब्दस्यान्यदप्यभिधेयमाह अन्नवत्त्वादिति । वाजमन्नं युद्धं च । तदस्यामस्तीति वाजिनी । वाचो युद्धवत्त्वोपपादनाय ज्ञानग्रहणम् । ज्ञानार्थं युद्धं वादादि । अस्त्वेवं सूर्यस्य वाचश्च वाजिनीत्वम् । ततः किमित्यत आह स इति । स सूर्यस्तस्याः विष्णवाख्यायाः प्रसिद्धायाश्च सरस्वत्याः पुत्रः। वाक्च पुत्री। तदेवं तदुभयवत्त्वाद्वाजिनीवती।

ननु वागपि सरस्वती तत्कथं तद्वतीत्यत उक्तं वागुमेति । एवंविधा सरस्वती नोऽस्माकं यज्ञम् । वाजेभिर्वाजैरशनैर्बहिरध्यात्मं ज्ञानयुद्धैश्च वष्टु वहतु प्रवर्तयतु विकरणलोपः षत्वं च छन्दस्त्वात् । अन्नादि दत्वेत्यर्थः ।

तदुपपादयति अन्नदेति । अनेन वाजिनीवतीत्युक्तस्योपयोगोऽभिहितो भवति । अत एव वाजेभिरुपेतं नो यज्ञं वष्टु इच्छत्विति व्याख्यानं न कृतम् । अन्नमित्युपलक्षणम् । धिया सह वसेदित्यनेन वसतेरुकार[1]प्रत्ययः । तेन सहार्थे तृतीयायाः समासोऽलुक्चेत्युक्तं भवति । नित्यबोधेति तात्पर्यकथनम् ॥ २८ ॥

### टिप्पणी

अस्मादसुन्प्रत्यय इति । सृ गताविति धातोः औणादिकेऽसुन्प्रत्यये नकारोकारयोर्लोपे धातोर्गुणे सकारस्य रुत्वे विसर्गे च सर इति रूपमिति भावः । ननु 'अत्वसत्वन्तस्य चाधातोः' इति दीर्घे सुयशाः, सुपया इत्यादिवत् सरा इति निर्देशः स्यादिति चेन्न सर्वे विधयः छन्दसि विक-

१. कारः ।

ल्यन्त इत्युक्तेर्वा ओरोदिति[1] वाच्ये ओर्गुणेति गुणग्रहणेन संज्ञापूर्वकविधेरनित्यत्वज्ञापनात् प्रकृतेऽपि दीर्घ इति संज्ञापूर्वकविधित्वेनानित्यत्वात् दीर्घो न प्रवर्तत इति ज्ञेयम् । एवमुत्तरत्रापि द्रष्टव्यम् ।

**बलवानित्यर्थ** इति। छान्दोग्यभाष्ये आद्येऽध्याये 'रसः सरोवरश्चैव शब्दा एकार्थवाचकाः' इति रसशब्दस्य वरशब्दितोत्तमत्वार्थतया व्याख्यानादुत्तमत्वं च 'स वै बलं बलिनां चापरेषाम्' इत्यादेर्बलादिगुणयोगेनैवेति ज्ञापनाय बलवानित्यर्थेत्युक्तमिति ज्ञेयम् । अनेन वाजिनीशब्दितयुद्धवत्वे सामर्थ्यं चोपपादितं[2] भवतीति ज्ञेयम् ।

ननु रसेन सह इति विगृह्य 'तेन सहेति तुल्ययोगे इति सूत्रेण सहेत्यस्य तृतीयान्तेन रसशब्देन समासे 'वोपसर्जनस्य' इति सहशब्दस्य वैकल्पिकसभावे च सरसेति रूपेण भाव्यं, सरद इति तु कथमित्यत आह **रसकारलोप** इति। 'पृषोदरादीनि यथोपदिष्टम्' इति सूत्रे 'वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ' इति वृत्त्यादावुक्ते इहापि निरुक्तत्वादेव रसशब्दाकारलोपे सकारस्य रुत्वे विसर्गे च सर इति रूपमिति भावः ।

**रमेरिति**। रमु क्रीडायामिति धातोर्भविऽसुन्प्रत्यये तस्य डित्वद्भावे धातोष्टिलोपे रसशब्दनिष्पत्तिरिति भावः । इदानीं सरस्वतीशब्दव्याख्यानपरं भाष्यं योजयति **तद्वतीति** । सरस्शब्दान्मतुप्प्रत्यये मस्य वत्वे 'तसौ मत्वर्थे' इति भसंज्ञाश्रयणेन सकारस्य रुत्वाभावे 'उगितश्च' इति ङीपि सरस्वतीति रूपसिद्धिरिति भावः । **उक्तनिरुक्त्येति**। 'सरणात्सर्वगत्वेन' इत्यारभ्य सरतित्वाद्वा इत्यन्तमुक्तनिरुक्त्येत्यर्थः । **गुणाः सरश्शब्द** इत्यत्र गुणशब्दार्थविवरणपूर्वकं सरशब्दविग्रहप्रदर्शिनेनान्वयं दर्शयति **गुणा ज्ञानादय**

---

१. ओरदिति - क । २. युद्धवत्वं चोपपादितं - क ।

इति । सरश्शब्दो येषामिति वाच्यवाचकभावसम्बन्धस्य षष्ठ्यर्थत्वादिति भावः। **तद्वत्वादिति** । भगवद्गुणानां भगवदभिन्नत्वेन सर्वगतत्वादिधर्माणामुपपन्नत्वादिति । भिन्नत्वेऽपि विशेषबलात् गुणगुणिभावलक्षणसम्बन्धस्योपपत्तेश्च मत्वर्थोपपत्तिरिति भावः। देव्या हरिवाचित्वं कथमित्यत आह **वेदाभिमानित्वादिति** । वेदानां भगवद्वाचित्वात् सरस्वत्या वेदाभिमानित्वेन वेदद्वारा वाच्यवाचकभावलक्षणसम्बन्धवत्वेन परमेश्वरत्वमुपपन्नमिति । सरश्शब्दार्थो हरिरस्या विद्यत इति मत्वर्थोपपत्तिरिति भावः। हरिप्रियत्वं त इत्येतन्मत्वर्थकथनपरमित्यभिप्रेत्य योजनामाह **तद्वत्वात्तत्प्रियत्वत इति** ।

**तद्भार्येति** । सरस्वतः स्त्री सरस्वतीति 'पुंयोगादाख्यायाम्' इति सरस्वच्छब्दात् ङीप्प्रत्यय इति ज्ञेयम्। **तेनेति** । सरस्वेनेत्यर्थः। **सरस्वत इति** । सरस्वशब्दोपपदात् तनु विस्तार इति धातोः औणादिके डट्प्रत्यये धातोष्टिलोपे सरस्वतीशब्दो निष्पन्न इति भावः। **स्त्रियामाकार इति** । सरस्वतशब्दस्य उट्प्रत्ययान्तत्वेन डित्वात् स्त्रीत्वविवक्षायां टिड्ढाणञि-त्यादिना ङीपि यस्येति चेत्यकारलोपे सरस्वतीति रूपसिद्धिरिति भावः। टीकायां ईकार इत्युक्तिस्तु मुक्तानुबन्धाभिप्रायेण अन्यथा हलङ्याभ्य सुलोपो स्यादिति ज्ञेयम् ।

**पुरुषाभिलाषादय इति** । स्त्रीदोषा पुरुषाभिलाषादयः, पुरुषास्तु स्त्र्यभिलाषादय इति ज्ञेयम्। 'ऋक्पूरब्धूः पथामानक्षे, द्वित्रिभ्यां पद्दसूमूर्धसु' इत्यादिसूत्रेषु वृत्त्यादौ समासान्तविधेरनित्यत्वज्ञापनेन अचतुरेत्यादिना प्राप्तस्य समासान्तविधेरनित्यत्वात् भाष्ये स्त्रीपुंसेति निर्देशो युक्तेति ध्येयम् । अन्यथा स्त्रीपुंसेति निर्देशापत्तेरिति। **व्याख्यातुमिति** । स पुत्रो

वागुमेत्यादि व्याख्यातुमित्यर्थः । **तदेवेति** । वाजमेव वाजीत्यन्वयः । कथमकारस्येकार इत्यत आह **तृतीयोऽतिशय इतीति** । **तन्नयतीति** । वाजिशब्दितमन्नं नयतीति वाजिनीशब्दार्थः सूर्य इत्यर्थः । वाजिशब्दोपपदात् नीञ् प्रापण इति धातोः कर्तरि क्विप्प्रत्यये क्विपः सर्वापहारिलोपे वाजिनीरिति रूपमिति भावः । सूर्यस्यान्ननेतृत्वं च 'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते, आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः' इति तृतीयाध्याये गीताभाष्ये उक्तप्रमाणसिद्धमिति ज्ञेयम् ।

ननु कथमन्नेनेत्यस्योक्तवाजिनीशब्दार्थत्वम् । यतो वाजस्येनो वाजेनेत्यर्थप्रतीतेरित्यत आह **अस्येति** । वाजिनीशब्दस्येत्यर्थः । अन्नेनेत्येतत् वाजिनीशब्दाक्षरार्थकथनपरं न तु तात्पर्यकथनपरमित्यभिप्रेत्य योजनान्तरमाह **यद्वेति**। **स एवेति**। वाजिन एव वाजिनीरित्युच्यत इत्यर्थः । तस्मिन् पक्षे वाजिनीशब्देऽकारस्येकारः इनशब्देवाकारस्यैकारः छान्दसव्यत्ययेनेति ज्ञेयम् ।

ननु वाजिनीशब्दात् सुप्प्रत्यये रुत्वे विसर्गे च वाजिनीरिति रूपसिद्धिः । भाष्ये वाजिनीः सूर्य इति निर्देशे कर्तव्ये वाजिनी सूर्य इति कथं निर्देशः कृतः ? न च वाच्यं वाजिनीपदस्य सूर्यपदेन समासे समासप्रातिपदिकावयवत्वेन सुपो लुकि तथा निर्देशः कृतः इति, तथात्वे उद्देशविधेयभावाप्रतीतेः तत्प्रतीत्यर्थं भिन्नपदस्यैव वाच्यत्वात् कथमयं निर्देशः इत्यत आह **अविभक्तक इति**। यथा व्याकरणसूत्रेषु 'नोपधायाः' इत्यादिसूत्रेष्वविभक्तिको निर्देशः क्रियते। यथोक्तं मञ्जर्यां नेत्यविभक्तिकोऽयं निर्देशः, अकार उच्चारणार्थः । नान्तस्योपधाया दीर्घो भवतीति । तथा प्रकृतेऽपि विभक्तिरहिततया प्रातिपदिकमात्रस्य निर्देशः कृत इति भावः ।

वाजिनामाकाश इत्यत्र वाजिशब्दस्य अर्थद्वयपरत्वमुपेत्य योजनामाह **वाजिनामिति** ।

**अश्वानामिति** । वाजिशब्दस्याश्वेषु रूढत्वादिति भावः ।

**अन्नवतामिति** । वाजमन्नं येषामिति विग्रहाश्रयणेन 'अत इनिठनौ' मत्वर्थीये इनिप्रत्यये वाजिशब्दनिष्पत्तिरिति भावः । अस्मिन् पक्षे वाजिनीशब्दनिष्पत्तिप्रकारः कथमित्यत आह **पूर्ववदिति** । अन्नेत्यस्य तात्पर्यार्थपरत्वं शब्दार्थपरत्वं चोपेत्य वाजिनी-वाजिनीशब्दो यथा द्वेधा विवृत एवं वाजिनीशब्दमीश इत्यस्याप्युभयार्थपरत्वाश्रयणेन वाजिनी-शब्दस्यापि द्वेधा विवरणं कर्तव्यमित्यर्थः । तथा च वाजिन अश्वान् अन्नवतो वा नयतीति वाजिनीरिति वा, वाजिनामश्वानामन्नवतां वा इति वाजिनीरिति वेति पूर्ववदुभयथा विवरणमिति भावः । अस्मिन् पक्षे वाजिनामिन इति द्वितीययोजनायां 'अक सवर्णे दीर्घः' इति प्राप्तदीर्घाप-वादकतया वाजिशब्दगतेकारस्येनशब्दगतेकारेण छान्दसपररूपत्वं वान्य-तरस्य छान्दसलोपो वा ज्ञेयः । तथा इनशब्दस्य चेकारः छन्दसव्यत्ययेनेति ज्ञेयम् ।

**सप्तछन्दसीति** । सप्तसङ्ख्याकछन्दसीत्यर्थः । पुराणपञ्चरात्रेतिहास-सहिताः ऋगादयश्चत्वारो वेदा वा 'इतिहासपुराणाः पञ्चमो वेदानां वेद' इत्युक्तेः । मीमांसातर्कसहिता ऋगादिपञ्चवेदा वा सप्तछन्दांसि तथा पूर्वत्र छन्दोऽभिमानिदेवताकथनप्रस्तावे 'गायत्री बृहती चैव' इत्यादिना भाष्योक्तप्रकारेण गायत्री बृहत्यनुष्टुप् त्रिष्टुप् जगती पङ्क्तिः उष्णिगित्येवं-रूपेण च सप्तछन्दांसि ज्ञेयानि । विवरिष्यते च द्वितीयाध्याये तेनो रत्नानि धत्तनेत्यस्यामृचि भाष्ये पुराणे पञ्चरात्रेतिहासवेदान् हरिस्तथा ।

मीमांसातर्कसहितान् पञ्चवेदानथापि वा। **सप्तच्छन्दांसि चेति**। यद्यपि तत्र पुराणसहिता ऋगादयः गायत्र्यादिछन्दांसि च रत्नशब्दार्थतया उक्तास्तथापि सप्तच्छन्दस्त्वमविरुद्धमिति[1] ज्ञेयम्।

**वाजी वाजिनीति**[2]। वाजिशब्दगतेकारस्य इनशब्दगतेकारेण सह 'अकः सवर्णे दीर्घः' इति दीर्घे वाजिनीति रूपसिद्धिरिति भावः। **तान्येव इति**। वाजिनीन्येव वाजिनानीति वक्ष्यमाणेनान्वयः। तर्हि कथं ऋचि वाजिनीवतीति ह्रस्वानन्ततया वाजिशब्दनिर्देश इत्यर्थ आह **शकन्ध्वादित्वादिति**। 'शकन्ध्वादिषु पररूपं वाच्यम्' इति पररूपविधानादत्रापि पररूपत्वेन ह्रस्वत्वमिति भावः। तान्यस्य सन्तीति वाजिनानि छन्दांस्यस्य सूर्यस्य सन्तीत्यर्थे वाजिनशब्दात् 'अत इनि ठनौ'[3] इति इन्प्रत्यये प्रथमैकवचने 'सौ च' इति दीर्घे हलङ्याभ्येति सुलोपे 'नलोपः प्रातिपदिकान्तस्य' इति नलोपे च दण्डीत्यादिवत् वाजिनीति रूपमिति भावः। अस्मिन् पक्षे ऋचि वाजिनीवतीति दीर्घान्ततया वाजिनीशब्दनिर्देशस्तु छान्दसव्यत्ययेनेति ज्ञेयम्[4] अन्यथा दण्डिमती शालेत्यादिवत् ह्रस्वान्ततया निर्देशापत्तिरिति।

**वाजीनछन्दसामिति**। वाजिनः प्रति इनानां छन्दसां स्वामित्वं सूर्यस्य कथमित्यत आहेत्यर्थः। **तदस्यामिति**। अस्मिन् पक्षे वाजशब्दादिन्प्रत्यये 'ऋन्नेभ्यो ङीप्' इति ङीप्प्रत्यये हलङ्याभ्येति सुलोपे वाजिनीति रूपमिति ज्ञेयम्। अस्मिन् पक्षे वाजिनीवतीत्यत्रापि ङीपः ह्रस्वत्वप्रापकाभावात् वाजिनीति दीर्घान्तत्वं युक्तमिति ज्ञेयम्।

---

१. सप्तच्छन्दस्त्वं निरुक्तमिति ज्ञेयम् - क। २. वाजीनानीति - क।
३. ५-२-११५ पा.सू.। ४. छन्दसि व्यत्ययेनेति युक्तम् - क।

**वादादीति** । आदिपदेन जल्पवितण्डयोर्ग्रहणम् । **विकरणलोप इति** । वह प्रापण इति धातोः परस्य शब्विकरणस्य 'बहुलं छन्दसि' इति लुकि हकारस्य छान्दसव्यत्ययेन षत्वे 'ष्टुना ष्टुः' इति प्रत्ययतकारस्य ष्टुत्वे वष्टुरिति रूपसिद्धिरिति भावः ।

**अन्नादीति** । अन्नं दत्वा दत्वा[1] बाह्ययज्ञं ज्ञानार्थयुद्धं वादादि दत्वा-ध्यात्मिकज्ञानयज्ञं च प्रवर्तयत्विति पर्यवसितार्थ इति भावः । **अनेनेति** । अन्नदा हि सदा देवीत्यनेन वाजिनीवतीत्यनेनोक्तस्यान्नादिप्रवर्तकसूर्यादि-मत्वस्योपयोगोऽभिहितो भवति । अन्नादिप्रवर्तकसूर्यादिमत्याः सरस्वत्याः सदान्नादिदानं युक्तमिति । **अत एवेति** । अन्नादिप्रवर्तकसूर्यादिमत्वेनान्नादि-दायाः सरस्वत्या अन्नादिमत्वस्य सिद्धत्वेन तदिच्छानुपपत्तेर्वाजेभिरुपेतं[2] नो यज्ञं वष्टु यच्छत्विति व्याख्यानं न कृतमित्यर्थः । एतच्चोपलक्षणं यज्ञं वष्ढ्विति यदाह यज्ञं वहत्विति दादेति श्रुतेश्च वष्ढ्वित्यस्य वहत्वित्येव व्याख्यानं कृतमिति द्रष्टव्यम् । **अन्नमित्युपलक्षणमिति** । अन्नदा हि सदा देवीत्यत्रान्नपदं ज्ञानार्थयुद्धशब्दितवादादेरप्युपलक्षणमित्यर्थः ।

**तेनेति** । वसुशब्देनेत्यर्थः । **सहार्थेति** । 'सहयुक्तेऽप्रधाने' इति सूत्रेण प्राप्ता या तृतीया तदन्तस्य धियेति पदस्य तृतीयासमासः । तृतीयाविभक्तेश्च लुगभावश्चेत्युक्तं भवतीत्यर्थः । **नित्यबोधेति** । **तात्पर्यकथनमिति** । नित्य-बोधेत्येतत् धिया वसुरित्यस्य तात्पर्यकथनरूपमित्यर्थः । प्रत्ययस्यादि-त्यनेन प्राप्तस्य इत्त्वस्य 'न यासयोः' इति इत्वनिषेधप्रकरणे पावकादीनां छन्दस्युपसङ्ख्यानमिति निषेधात् ऋचि पावकेत्यत्र इत्वाभाव इति ज्ञेयम् । उदाहृतं च वृत्त्यादौ 'हिरण्यवर्णाः शुचयः पावकाः' इति ॥ २८ ॥

---

१. अन्नं दत्वा बाह्ययज्ञम् - क । २. वाजेभिर्नो यज्ञं - क ।

मंत्रः – २९

(अ.१, सू.३, मं.११)

**चोदयित्री सूनृतानां चेतन्ती सुमतीनाम् ।**
**यज्ञं दधे सरस्वती ॥**

पदपाठः

चोदयित्री । सूनृतानाम् । चेतन्ती । सुऽमतीनाम् ।
यज्ञम् । दधे । सरस्वती ॥

भाष्यम्

**सुवाचां [1]प्रेरका सदा ।**
**सुबुद्धिज्ञापिका सैव स्वातन्त्र्याल्लुप्तयो भवेत् ।**
**अनेनैव प्रकारेण सैव यज्ञादि[2]धारिणी ॥ २९ ॥**

टीका

सूनृतानां सुवाचां चोदयित्री सदा प्रेरका सुमतीनां सुबुद्धीनां द्वितीयार्थे षष्ठी । चेतन्ती चेतयन्ती ज्ञापिका । अत्र णिलोपस्य निमित्तमाह **स्वातन्त्र्यादिति**। चेतन्तीशब्दः स्वातन्त्र्यविवक्षया लुप्तो यो यस्य स लुप्तयो भवेत् । य इति णेरुपलक्षणम् । स्वातन्त्र्य-स्नेहयोरन्तर्णीतणिजिति स्मरणात् । ततश्च स्वातन्त्र्येण सुबुद्धि-ज्ञापिकेत्यर्थः । तदिदमुक्तं **सैवेति**। एवंभूता सरस्वती यज्ञं दधे । अनेनोक्तप्रकारेण वाग्बुद्धिप्रवर्तकत्वेन यज्ञादिधारिणी । वाग्बुद्धिमूल-त्वात् सर्वकर्मणाम् ॥ २९ ॥

---

१. प्रेरिका – पा० । २. धारणी – पा० ।

## टिप्पणी

**चोदयित्री** । **सदा प्रेरकेति** । यद्यपि ऋचि सदाशब्दो न श्रूयते तथापि चेतन्तीत्यस्य वक्ष्यमाणरीत्या स्वातन्त्र्यार्थकत्वस्याभिमतत्वेन तत्प्रायपाठादत्रापि स्वातन्त्र्यार्थकत्वं वक्तव्यम् । तच्च स्वातन्त्र्यं प्रेरकत्वस्य सदातनत्वे सम्भवति नान्यथा । सदातनत्वं च 'स्वाभाविकी ज्ञानबलक्रिया च, देवस्यैष स्वभावोऽयम्, न प्रयोजनवत्वात्, लोकवत्तु लीलाकैवल्यम्' इत्यादिश्रुतिसूत्रेषु निर्णीतमिति सूचनाय सदेत्युक्तमिति ज्ञेयम् । भाष्यस्य छन्दस्तुल्यत्वेन 'पावकादीनां छन्दस्युपसङ्ख्यानम्' इति वा, 'क्षिपकादीनां न' इति वा सर्वे विधयश्छन्दसि विकल्पन्ते' इति वा प्रत्ययस्थात्कादिति प्राप्तस्येत्वस्य निषेधेन प्रेरकेति निर्देशोपपत्तिर्ज्ञेयम्[१] ।

ननु सुबुद्धिज्ञापिकेति भाष्यार्थपर्यालोचनया सुमतीनामित्यस्य चेतन्तीत्यनेन कर्मकारकतयान्वयः प्रतीयते । कर्मकारके च 'कर्मणि द्वितीया' इति द्वितीया विहिता, तत्कथमत्र षष्ठीनिर्देश इत्यत आह **द्वितीयार्थे षष्ठीति** । 'व्यत्ययो बहुलम्' इति सुप्तिङादीनां व्यत्ययकथनात् प्रकृतेऽपि व्यत्ययेन षष्ठ्युपपत्तिरिति भावः । अत एव चेतन्तीति लडादेशशात्रन्तयोगे सत्यपि न लोकाव्ययनिष्ठेति षष्ठीनिषेधो न प्रवर्तत इति ज्ञेयम् ।

ननु स्वातन्त्र्याल्लुप्प्रत्ययो भवेदिति[२] यलोपस्य स्वातन्त्र्यं निमित्ततया श्रूयते, न तु णिलोपस्य, तथा च णिलोपस्य निमित्तमाहेति कथमुच्यते ? इत्यत आह **य इति** । चिती संज्ञान इति धातोः शब्विकरणत्वेन तस्मिन् परतः णे[३]र्गुणेऽयादेशे तत्र यकारस्यादेशैकदेशत्वेन तद्ग्रहणेनादेशिनो णेरुपलक्षणाद्यलोपग्रहणेन णिलोप एव विवक्षित इति भावः ।

---

१. निर्देशोपपत्तेरिति ज्ञेयम् - क । २. स्वातन्त्र्याल्लुप्तयोभवेत् - क ।
३. परत एव गुणे - क ।

भवेदेतदुपलक्षणपरत्वं यकारस्य यदि स्वातन्त्र्यविवक्षायामन्तर्णीत णिजित्यत्र नियामकं स्यादित्यत आह **स्वातन्त्र्यस्नेहयोरिति** । सुबुद्धिज्ञापिकेत्यर्थ इति । अत्र भाष्ये सुबुद्धिपदम् ऋचि सुमतिपदं च तद्विषयोपलक्षकमिति ज्ञातव्यम् । **तदिदमिति** । अन्तर्णीतणिजर्थतया प्राप्तस्वातन्त्र्येण सुबुद्धिज्ञापकत्वम् । सुबुद्धिज्ञापिका सैवेत्येवशब्देन भाष्यकारैरुक्तमित्यर्थः । भाष्येऽनेन प्रकारेणेत्यत उक्तप्रकारमित्यभिप्रेत्य तत्प्रकारं दर्शयति **वागिति** । वाग्बुद्धिप्रवर्तकत्वस्य यज्ञादिधारणे कथमुपयोग इत्यत आह **वाग्बुद्धिमूलत्वादिति** ॥ २९ ॥

**मंत्रः – ३०**

(अ.१, सू.३, मं.१२)

**म॒हो अर्णः॒ सर॑स्वती॒ प्र चे॑तयति के॒तुना॑ ।**
**धियो॒ विश्वा॒ वि रा॑जति ॥**

**पदपाठः**

म॒हः । अर्णः॑ । सर॑स्वती॒ । प्र । चे॒त॒य॒ति॒ ।
के॒तुना॑ । धियः॑ । विश्वाः॑ । वि । रा॒ज॒ति॒ ॥

**भाष्यम्**

**महो अर्णः परं ब्रह्म तेजस्त्वाच्च महत्त्वतः ।**
**[1]अरमानन्दरूपत्वाण्णो हि निर्वृतिवाचकः ।**
**तज्ज्ञापयति सा देवी ज्ञानं दत्वा महत्तरम् ।**
**महो अर्णः स्वयं देवः स्वमात्मानं प्रकाशयेत् ।**

---

१. परमानन्द – पा० ।

विराजयति विश्वाश्च धियः [1]सुज्ञानदानतः ।
सूक्तं त्वनारतं प्रोक्तमनुवागेककालिका ।
अन्यथात्वं च तत्र स्यादावापोद्वापतस्त्वृचाम् ।
वेदानन्तत्वविज्ञप्त्यै तौ चक्रे बादरायणः ।
'ऋचः स ऋच उद्धृत्य ऋग्वेदं कृतवान्प्रभुः ।
यजूंषि निगदाच्चैव तथा सामानि सामतः' ।
एवं पुराणवचनादुद्धृता हि ततस्ततः ।
ऋचः शाखात्वमापन्नाः शिष्यतच्छिष्यकैरिमाः ।
मानःस्तेनेतिपूर्वासु ह्यूनता दृश्यतेऽर्थतः ।
शुनःशेपोदिताभ्यश्च पठ्यन्तेऽन्यत्र काश्चन ।
अत्राप्यक्रमतो दृष्टिरिति नैकक्रमो भवेत् ।
अनन्तत्वात्तु वेदानां प्रायः कर्मानुसारतः ।
संक्षेपं कृतवान् देवः शिष्याश्च तदनुज्ञया ।
अष्टकाध्यायवर्गादिभेदं च कृतवान् [2]प्रभुः ।
स्वाध्यायविश्रमार्थाय तस्मात्क्रमविपर्ययः ।
तत्र तत्रैवान्तरिता दृश्यन्ते च खिला अपि ।
यत्रार्थे न विशेषोऽस्ति पदान्तरितताऽत्र च ।
यत्राल्पोऽपि विशेषोऽस्ति पदं नान्तरितं भवेत् ॥ ३० ॥

टीका

तेजस्त्वान्महत्वतश्चेति महःशब्दस्यार्थद्वयम् । अरमानन्दरूपत्वादर्णः । सा देवी सरस्वती । **महो अर्णः परं ब्रह्म** । केतुना

---

१. सुज्ञानदा यतः – सुज्ञानदो हतः – पा० । २. स्वयम् – पा० ।

**ज्ञानेन। भक्तेभ्यो महत्तरं ज्ञानं दत्वा। प्रचेतयति ज्ञापयति। महत्तरमिति वदता प्रशब्दस्य तात्पर्यमुक्तं भवति । इदं तु देवतान्तरविषयम् । भगवद्विषये तु सरस्वती देवः महोअर्णः स्वमात्मानं केतुना प्रचेतयति प्रकाशयेदिति। तत एव सुज्ञानदानतो भक्तानां विश्वा धियः। सर्वाः बुद्धीः। विराजति विराजयति। ज्ञानवतो हि बुद्धिर्विराजते॥ ३०॥**

**अत्र सूक्तमनुवाको वर्गश्च परिसमाप्तः॥**

## टिप्पणी

**महश्शब्दस्यार्थद्वयमिति**। यद्यपि न हि देवो 'न मर्त्यो महः स्तव क्रतुं परः' इत्यस्यामृचि महानैव त्वदन्यो हि क्रतुं प्रतीति भाष्यव्याख्यावसरे टीकायां महः महान् पूज्यो न हीति पूज्यार्थतया महश्शब्दो व्याख्यास्यते तथापि पूजायामिति धातोरौणादिकेऽसुन्प्रत्यये निष्पन्नस्य महश्शब्दस्य धातूनामनेकार्थाश्रयणेन तेजस्त्वार्थकत्वमहत्वार्थकत्वं वोपपन्नमिति भावः। 'महस्तूत्सवतेजसोरि'ति अभिधानाच्च महश्शब्दस्य तेजःपरत्वं द्रष्टव्यम् । वक्ष्यति च भाष्ये महतोरअकात् स्वर्गादिति । भाष्येऽरमित्यस्यालमिति प्रतिपदमभिप्रेत्य तदर्थकथनपूर्वकं योजनामाह **परमानन्दरूपत्वादिति** । अर्ण इत्यत्र रेफाकारलोपपद छान्दस[1] इति ज्ञेयम्। यद्यपि द्वितीयाध्याये 'अतो देवा अवन्तुनो' इत्यस्यामृचि भाष्ये विष्णुशब्दव्याख्यावसरे 'वसिष्ठ-बलचेष्टत्वाद् विष्णुरित्यभिधा हरेः' इति बलवाचितया णकारो व्याख्या-स्यते। तथापि 'णकारो बलं षकारः प्राण आत्मा' इति श्रुत्यनुसारेण तत्र तथा व्याख्यानेऽपि प्रकृते प्रमाणान्तरबलादेव निर्वृतिशब्दितसुखवाचित्व-मविरुद्धमित्यभिप्रेत्य भाष्ये सुखवाचितया व्याख्यानं कृतमिति ज्ञेयम् ।

---

१. रेफाकारलोपः छान्दस - क ।

अत एव दशमेऽध्याये गीतातात्पर्ये विष्णुशब्दव्याख्यावसरे विशिष्टत्वाद् विष्णुनामा वसिष्ठः प्राणसौख्यतः' इति सुखवाचितयापि णकारो व्याख्यातः। उक्तं च तत्र टीकायां षकारः प्राण इति श्रुतेः णस्य निर्वृतिवाचकत्वात् वशिष्ठसुखचेष्टाशीलत्वाद्विष्णुरिति ।

**प्रशब्दस्येति** । द्वितीयाध्याये 'अनुप्रत्नस्यैक स' इत्यस्यामृचि टीकायामुपसर्गस्य सति क्रियावचने तत्सम्बन्धिनो भवन्तीति वक्ष्यमाणरीत्या प्रकृतेऽपि प्रचेतयतीति चिति संज्ञान इति धातोः पूर्वं प्रयुक्तस्य प्रोपसर्गस्य धात्वर्थविशेषकत्वात् तद्विशेषाकाङ्क्षायां महत्तरमिति तात्पर्यमुक्तमिति भावः । **इदं त्विति** । सा देवी प्रसिद्धा सरस्वती तत् महोऽर्णः परशब्दितं परंब्रह्म ज्ञापयतीति ज्ञापनरूपक्रियायां कर्तृकर्मणोर्भेदमाश्रित्य व्याख्यानमित्यर्थः ।

**देवतान्तरेति** । चतुर्मुखपत्नीकर्तृत्वविषयमित्यर्थः[1] । **भगवद्विषये त्विति** । 'यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्' इत्यादि श्रुतिषु प्रकाशनरूपक्रियायां भगवत एव कर्तृत्वेन कर्मत्वेन च कथनात् प्रकृतेऽपि स्वस्यैव स्वस्वरूपप्रकाशकत्वमुपपन्नमिति भावः । यमेवैषेति श्रुत्यर्थस्तु यं भक्तमेष आत्मा वृणुते स्वीकरोति यस्मै प्रसीदतीति यावत् । तेनैव प्रसादविषयेणैव लभ्यः तद्व्यनक्ति तस्य स्वप्रकाशादविषयस्य एषः प्रसन्न आत्मा स्वां तनूं विवृणुते प्रकाशयतीति तस्यैवापरोक्षविषयो भवतीत्यर्थः इत्याथर्वणभाष्यादावुक्तरीत्या ज्ञेयः ।

विष्णुतत्त्वनिर्णयटीकायामपीममर्थमुक्त्वा स्वां तनूमित्यस्यावृत्त्या तस्य जीवस्य स्वां तनूमविद्यावृतस्वरूपं विवृणुते आविर्भावयतीत्यर्थान्तरपरत्व-

---

१. चतुर्मुखपत्नीविषय इत्यर्थः - क ।

मप्युक्तमिति द्रष्टव्यम् । 'प्रचेतयति केतुना' इति पूर्वार्धोक्तज्ञानदानं 'धियो विश्वा विराजती'त्युत्तरार्धोक्त सर्वबुद्धिविराजने हेतुरिति प्रदर्शनाय भाष्ये सुज्ञानदानत इत्युक्तमित्यभिप्रेत्य हेतुत्वं व्यञ्जयन् योजनामाह **तत एवेति** । प्रचेतयतीत्युक्तप्रशब्दार्थविवरणं भाष्ये सुशब्देन कृतमिति ज्ञेयम् । अत एव यायाथ्योपेतत्वसर्वविषयकत्वरूपं विराजनं बुद्धेरुपपन्न-मिति ज्ञेयम् ॥ ३० ॥

## सूक्तम् – ४

दशार्चम् । मधुच्छन्दाः । इन्द्रः । गायत्री ।

**मंत्रः – ३१**

(अ.१, सू.४, मं.१)

**सुरूपकृत्नुमूतये सुदुघामिव गोदुहे ।**
**जुहूमसि द्यविद्यवि ॥**

**पदपाठः**

सुरूपऽकृत्नुम् । ऊतये । सुदुघाम्ऽइव । गोऽदुहे ।
जुहूमसि । द्यविंऽद्यवि ॥

**भाष्यम्**

**विष्णुं सुरूपकर्तारमभिप्रेतार्थसिद्धये ।**
**त्राणाय वा कामधेनुमिव दोहाय तत्स्थितेः ।**
**दिने दिने स्वाह्वयामो ॥ ३१ ॥**

## टीका

तत्र सूक्तादिस्वरूपजिज्ञासायामाह **सूक्तमिति** । अनारतं प्रोक्तं निरन्तरं पठितम् । मूलवेदे ऋचां यः क्रमः तत्र ऋचोऽनन्तरिताः कृत्वा यावत्पठितं तावदुपवेदे सूक्तमुच्यते । ऋषिभिर्दर्शनसमये यावन्निरन्तर-काले दृश्यते साऽनुवागुच्यते । यद्वा एककालिकेत्यस्य विराम-मकृत्वैकस्मिन्काले पठनीयेत्यर्थः । उक्तस्यापवादमाह **अन्यथात्वं चेति** । मूलवेदादुद्धतेष्वृङ्निगदाद्युपवेदेषु यदनारतप्रोक्ततया सूक्तमुक्तं तत्र तस्य ततोऽप्युद्धतेष्वृग्वेदादिष्ववान्तरवेदेष्वन्यथात्वं च स्यात् । कथम् ? ऋचामावापोद्वापरूपेण तत्क्रमपठितानां कासाश्चिदृचामुद्वापः स्थानान्तरस्थानां तत्रावाप इति । उपवेदगतसूक्तान्तर्गतऋक् प्रबन्ध-त्वेनावान्तरवेदे सूक्तसंज्ञेति ज्ञातव्यम् । आवापोद्वापकरणे को हेतु-रित्यत आह **वेदेति** । इदं तु वक्ष्यमाणविवरणानुसारेण प्रतिपत्तव्यम् । भवेदेतद्यदि मूलवेदादुपवेदानां ततोऽवान्तरवेदानां चोद्धारेण प्रबन्ध-निर्माणं प्रामाणिकं स्यात् तदेव कुत इत्यत आह **ऋच इति** । ऋङ्-निगदसामानीति मूलवेदादुद्धता उपवेदा उच्यन्ते । ततो मूलवेदादुप-वेदास्ततश्चावान्तरवेदा उद्धता इत्येतदेवं पुराणवचनादवगम्यत इत्यर्थः ।

यथोपवेदादिप्रबन्धः कृत्रिम एवं शाखाप्रभेदोऽपीत्येतत्प्रसङ्गादाह **ऋच इति** । ऋच इति प्रस्तुतत्वादुक्तम् । यजुरादिकं चैवं ज्ञातव्यम् । एवमावापोद्धारावुपपाद्य तत्र लिङ्गं च दर्शयति **मान इति** । 'मानः स्तेनेभ्यो ये अभिद्रुहस्पदेनिंरामिणोरिपवोऽन्नेषु जागृधुः । अदेवानामोहते विव्रयो हृदि बृहस्पते न परः साम्नो विदुरि'त्येतस्यामृचि पूर्वोत्तरार्धयोरसम्ब-द्धार्थत्वेनार्थतो न्यूनता दृश्यते । ततो ज्ञायतेऽत्रान्तरितं वाक्य-

मस्तीति। एवमन्यत्रापि। किञ्च शुनःशेपस्तावदृचां शतं क्रमेण ददर्शेति ब्राह्मणम्। तासामवान्तरवेदे त्र्यूनं शतमेव द्वितीयाध्याये दृश्यते। ताभ्योऽन्यस्त्वन्यत्र पठ्यन्ते। तेन ज्ञायते ऋचामित उद्वापोऽन्यत्रावाप इति। किञ्च अत्र मधुछन्दसा दृष्टास्वपि ऋक्षु नायमेव क्रम इत्याह **अत्रापीति** । अक्रमतो दृष्टिरित्यवान्तरवेदे यः क्रमस्तमुल्लङ्घ्यैव मधुछन्दसो दृष्टिरित्यर्थः।

यद्वा मूलवेदोपवेदयोर्यः क्रमस्तमुल्लंघ्यैवावान्तरवेदेऽत्र माधुछन्दसे प्रकरणे ऋचो दृश्यन्त इति। इति नैकक्रमो भवेत् मूलवेदोपवेदावान्तरवेदेष्विति शेषः।

वेदानन्तत्वविज्ञस्या आवापोद्वापाभ्यां सङ्क्षेपः कृत इत्युक्तं तदसत्। 'अनन्ता वै वेदा' इत्यादिनैव तज्ज्ञप्तिसम्भवादित्यत उक्तं विवृणोति **अनन्तत्वादिति** । अनन्तत्वात्तदुक्तप्रकारेण कर्मकरणाशक्तेरिति शेषः। इतश्च न मूलवेदादिष्वेकप्रकारतेत्याह **अष्टकेति** । मूलवेदादावविद्यमानमेवेति शेषः। उद्धारे लिङ्गान्तरं च दर्शयति **तत्रेति** ।**खिलाः** परिशिष्टाः। नन्वयमुद्धारः कथं ज्ञायत इत्यतस्तस्य ज्ञापकं लेशेन दर्शयति **यत्रेति** । यत्र वाक्यद्वयस्यार्थे विशेषो नास्ति तत्र येन पदेन सा पुनरुक्तिः परिहृता स्यात्तत्पदमन्तरितं ज्ञातव्यम्। यत्र तु विनाऽपि पदान्तरमल्पेनापि विशेषेण श्रुतेनैव पुनरुक्तिपरिहारः स्यात्तत्र पदान्तरितता न कल्पनीया। एवमन्यान्यपि लिङ्गानि गवेषणीयानीति। अनेन वर्गस्तु सामयिक एवेत्युक्तम्।

दशार्चमिदमैन्द्रं सूक्तम्। **विष्णुम्** । वयं द्यवि द्यवि दिने दिने। गोदुहे गोर्दोहाय। सम्पदादित्वात्क्विप्। गां दोग्धीति गोधुक् तस्मै

**गोदुहे । तदर्थं दोहायेति शेषः । सुष्ठु दोग्धीति सुदुघा । दुहः कप् घश्च । तां कामधेनुमिव । तस्मिंस्थितिर्यस्यासौ तत्स्थितिः तस्य भगवदाश्रयस्य यजमानस्योतये अभिप्रेतार्थसिद्धये त्राणाय वा । अवतेरुभयार्थत्वात् । सुरूपकृत्नुं साधुरूपाणां कर्तारं विष्णुमिन्द्रं च जुहुमसि स्वाह्वयामः । ह्वयतेः श्लुः । दार्ष्टान्तिके ऊतय इति प्रयोजनस्य श्रुतत्वात् दृष्टान्तेऽपि दोहायेत्युक्तम् । दृष्टान्ते गोदुह इत्युक्तत्वात् दार्ष्टान्तिकेऽपि तत्स्थितेरिति शेषोऽभिहितः । स्मसीत्यादिप्रोक्ताधिक्यविवक्षयेत्युक्तत्वात् स्वाह्वयाम इत्युक्तम् ॥ ३१ ॥**

**टिप्पणी**

व्याख्यानप्रस्तावे सूक्तादिस्वरूपनिरूपणस्य का सङ्गतिरित्याशङ्क्य सङ्गतिं दर्शयति अत्रेति ।

**निरन्तरमिति** । 'सततानारताश्रान्तसन्तताविरतानिशम्'[१] इत्यभिधानादनारतशब्दोऽत्र नैरन्तर्यपर इति भावः । **मूल इति** । ऋगादिलक्षणरूपेण विभागरहिते राशीभूतमूलवेद इत्यर्थः । **उपवेद इति** । मूलवेदादुद्धृते ऋग्विभागादिरूपेण विभक्तवेद इत्यर्थः । अनुवागेककालिकेत्यत्र मत्वर्थो य ठन् प्रत्ययान्ततया निष्पन्नस्य एककालिकशब्दस्य दर्शनोच्चारणरूपप्रतिसम्बन्धिभेदेनार्थद्वयपरत्वमित्यभिप्रेत्य योजनामाह **ऋषिभिरित्यादिना** ।

'जन्मान्तरे सुतास्तास्तु वासुदेवप्रसादतः । मुनीन् प्रति तपस्यन्ति भागेनैव तु सर्वशः' इत्युक्तेरिति भावः । **विराम इति** । विरामोऽवसानमित्युक्तेः विराममवसानं विच्छेदमकृत्वेत्यर्थः । **उक्तस्येति** । सूक्तं त्वनारतं प्रोक्तमित्यनन्तरिततया पठितं सूक्तमित्युक्तस्येत्यर्थः । तद्विशदयति **मूलवेदादुद्धृतेष्विति** । तत्रेत्यस्यावृत्त्या सप्तम्यर्थत्वं षष्ठ्यर्थत्वं चोपेत्य

१. अनिशः —मुद्रितपाठः अमरकोशे । १-१-६५

योजनामाह **आवापोद्वापरूपेणेति** । आवापः प्रक्षेपः, उद्वापः उद्धारः तद्रूपेणेत्यर्थः । तद्विषदयति **तत्क्रमेति** । उपवेदे नैरन्तर्येण क्रमपठितानामित्यर्थः ।

**स्थानान्तरस्थानमिति** । कासाञ्चिदृचामित्यत्रान्वेति । **तत्रेति** । उपवेदादुद्धृतेषु ऋगादिरूपावान्तरवेदेष्वित्यर्थः । एतच्चोद्वापेत्यनेनाप्यन्वेतीति ज्ञेयम् ।

ननु तर्हि नैरन्तर्यपठितत्वरूपसूक्तलक्षणाभावादवान्तरवेदेषु कथं सूक्तसंज्ञेत्यत आह **उपवेदगतेति** । नन्वावापोद्वापकरणं वेदानन्तत्वविज्ञप्त्यर्थमित्येतत्कथं ज्ञातव्यमित्यत आह **इदं त्विति । वक्ष्यमाणेति** । अनन्तत्वात्तु वशब्दमिति वक्ष्यमाणेत्यर्थः[1] तत्र वेदानामनन्तत्वेन तदुक्तप्रकारेण सर्वकर्मकरणाशक्तेरल्पशक्तिमतां जनानां वेदोक्तकर्मानुष्ठानायावापोद्वापाभ्यां सङ्क्षेपकरणमिति वक्ष्यमाणविवरणानुसारेण प्रतिपत्तव्यमिति भावः । तेन अनन्ता वै वेदा इत्यनेनैव वेदानन्तत्वविज्ञप्तिसम्भवात् सङ्क्षेपकरणं भवेदित्यर्थः । शाखाभेदोऽपीति कृत्रिम इत्यन्वेति । ननु सूक्तादिस्वरूपकथनार्थं वेदविभागकथनप्रस्तावे शाखाभेदकथनस्य का सङ्गतिरित्यत आह **प्रसङ्गादिति** । वेदसम्बन्धित्वरूपधर्माक्रान्तत्वेन तत्प्रसङ्गसङ्गत्याहेत्यर्थः । ननु ऋगादयः शाखात्वमापन्ना इति वाच्ये ऋच इति विशिष्योक्तेः किं निमित्तमित्यत आह **ऋच इतीति** ।

सूक्तादिव्यवस्थापकतया तद्विभागस्य प्रस्तुतत्वात् प्रस्तावादित्यर्थः । **एवमिति** । पुराणवचनरूपागमप्रमाणकथनेनावापोद्वापोद्धारावुपपाद्येत्यर्थः । **तत्रेति** । आवापोद्धारयोरित्यर्थः । **लिङ्गं चेति** । चशब्दः पूर्वोक्तपुराणवचन-

---

१. अनन्तत्वात्तु वेदानामिति वक्ष्यमाणेनेत्यर्थः - क ।

रूपागमप्रमाणसमुच्चायक इति ज्ञेयम् ।**असम्बद्धार्थत्वेनेति** । 'अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात्' इति जैमिनीयसूत्रे क्रियाकारकान्वयादिरूपैकार्थप्रतिपादकत्वेनैकवाक्यताभावादर्थतो न्यूनतेति भावः । तत्रान्तरितमित्यत्र पूर्वोत्तरार्धयोर्मध्येऽन्वितार्थघटकमन्तरितं वाक्यमस्तीति ज्ञायत इत्यर्थः । तच्च वाक्यं 'एषां नैतन्नापरं किञ्चनैकं ब्रह्मणस्पते ब्रूहि तेभ्यः कदाचित् । अथोपशमेनोपरता मनुष्या एधर्मिणो ब्रूहि तेभ्यः सदा नः' इत्येतावदिति द्रष्टव्यम् । मानस्तेनेभ्य इत्यादि समग्रवाक्यार्थस्तु ऐतरेयभाष्ये 'अथ खल्वाहुर्निर्भुजवक्रो इति खण्डव्याख्याने । तथा ज्ञानपादे 'अनाविष्कुर्वन्नन्वयात्' इति सूत्रे तत्त्वप्रकाशिकायां, तथा भक्तिपादे 'अनुबन्धादिभ्यः' इति सूत्रे रिपवो ये तु रामस्य विमुखत्वान्निरामिणः । अभिद्रोहपदे नित्यं ते चान्धे तमसि स्थिताः' इत्यनुव्याख्यानव्याख्यावसरे सुधायां चोपपादितरीत्या ज्ञेयः । ऐतरेयभाष्याद्युक्तार्था एव मया सङ्गृह्य प्रदश्र्यन्ते । तथा हि अभिद्रुहस्पदे अभितः सर्वतः द्रुहो द्रोहस्य पदे स्थाने नित्यनरके स्थातुं योग्या इति शेषः ।

**निरामिणः** । रामो रमणं रमतेर्भावे घञ् । रामोऽस्या अस्तीति रामी पूर्णानन्दरूपो विष्णुः । तस्मान्निष्क्रान्ताः तद्विरुद्धाः निरामिणः । तथैव सुधायां विग्रहस्य प्रदर्शितत्वात् । तथा च 'निरादयः क्रान्ताद्यर्थे पञ्चम्या' इति सूत्रेण समासो ज्ञेयः । रामस्य विष्णोर्जीवैक्यज्ञानेन तस्य नीचत्ववेदिन इति यावत् । अत एव रामशब्दितस्य विष्णोः रिपवोऽन्नेषु भोगमात्रोपलक्षणं भोगमात्रे जागृधुः । गृध अभिकाङ्क्षायां लिट्, आकाङ्क्षावन्तो बभूवुः ये किं च येषामेतत् परब्रह्म नास्त्यपरं जगच्च नास्ति किञ्चनैकं निर्गुणं ब्रह्मैकमेवास्ति जगच्चानिर्वाच्यमस्तीति पक्षः, एवंरूपेभ्यस्तेनेभ्यः हे ब्रह्मणस्पते वेदपते वायो नोऽस्मान् कदाचित् मा ब्रूहि नैव वद मा

ब्रूहीत्यत्र निषेधार्थक मा शब्द एवायं नतु माङ्, तेन माङि लुङिति लुङ्भाव इति ज्ञेयम् ।

कस्मै तर्ह्युपदेष्टव्या विद्येत्यत इदमुच्यते **अथो रामेनेत्यादि** । प्रागुक्तेभ्यो विलक्षणाधिकारिसूचकोऽथेति निपातः । यो मनुष्याः रामेन भगवन्निष्ठया उपरता भगवत्येव रता धर्मिणो वर्णाश्रमोचितधर्मवन्तः ये च साम्नः सामनाम्नो हरेः परमुत्तमं न विदुः न जानन्ति ये च देवानां त्रयः, वरत्वाद् वः नियामकत्वाद् यः, व्रश्चासौ यश्च व्रयः वशब्दाकारलोपः । देवानां वरत्वे सति नियामकं सामशब्दितं ब्रह्म हृदि । वि आ ओहते व्योहते वहन्ति च हन्ति तेभ्यो नो बृहस्पते वायो सदा ब्रूहि इति वायुं प्रति विद्याभिमानिनां प्रार्थनमित्युक्तमैतरेयभाष्ये । 'वायुक्रियां समासाद्य सर्वासां पतिमूचिरे । स्तेनेभ्यो नैव नो ब्रूहि ब्रूह्यथो वैष्णवेषु च' इति । **ब्राह्मणमिति** । स प्रजापतिमेव प्रथमं 'देवानामुपससार' । कस्य नूनं कतमस्यमृतानामित्यैतरेयर्चेत्यादि ब्राह्मणवाक्यं दर्शयतीत्यर्थः । विवृतश्चायमर्थो द्वितीयाध्याये 'शुनःशेपो ददर्शाति उत्तरं परमृक्शतम्' इत्यादिना भाष्यटीकयोरिति ज्ञेयम् । **अनेनेति** । अष्टकाध्यायेत्यादिप्रतिपादनेनाष्टकादिसंज्ञावद्वर्गादिसंज्ञापि साङ्केतिकैवेत्युक्तमित्यर्थः ।

**सम्पदादित्वादिति** । 'स्त्रियां क्तिन्' इति सूत्रे अकर्तरिच कारके भावेत्यनुवर्त्य 'सम्पदादिभ्य क्विब् वाच्यः' इति वार्तिकेन भावार्थे क्विपो विधानेन सम्पदित्यादिरूपसिद्धिवत् प्रकृतेऽपि गोदुह इत्यत्र दुह प्रपूरण इति धातोः भावार्थे क्विप्प्रत्यये क्विपः सर्वापहारिलोपे कृत्तद्धितेति प्रातिपदिकसंज्ञायां चतुर्थ्येकवचने दुहेत्यस्य दोहायेत्यर्थपरत्वमिति भावः । केचित्तु गोदुह इत्यस्य गोदोग्धृपुरुषपरत्वमङ्गीकृत्य तद्दृष्टान्तानुसारेण

दार्ष्टान्तिके तत्सि तेरिति भाष्ये शेषः पूरित इति वर्णयन्ति, तन्न । 'सम्पदादिभ्यः' इति वार्तिके अकर्तरि च कारके इति सूत्रार्थः । तथा च प्रकृते सुष्ठु दोग्धीति कर्त्रर्थे सुपूर्वात् दुहप्रपूरण इति धातोः क्विप्प्रत्यये ककारपकारयोर्लोपे 'पुगन्तलघूपधस्य च' इति प्राप्तगुणस्य 'क्ङिति च' इति निषेधे हकारस्य घकारान्तादेशे स्त्रियां टापि[1] द्वितीयैकवचने सुदुघामिति रूपसिद्धिरिति भावः ।

उत्तरस्यामृचि रेवत इति श्रवणात् तदनुसारेण भाष्ये तत्स्थितेरि-त्युक्तमित्यभिप्रेत्य तदनूद्य व्याचष्टे **तस्मिन् स्थितिर्यस्येति** । **अवते-रुभयार्थत्वादिति** । यद्यप्यवति धातु अवरक्षणगतिकान्तिप्रीति तृप्त्यवगम-प्रवेशश्रवणस्वाम्यसामर्थ्ययाचनक्रियेच्छादीप्त्यालिङ्गनहिंसादानदहनभाववृद्धि-रित्यनेकार्थतया भीमसेनधातुगणे पठितः । तथापि प्रकृतविवक्षानुसारेणोभ-यार्थत्वादित्युक्तमिति ज्ञेयम् ॥ ३१ ॥

**मंत्रः – ३२**

(अ.१, सू.४, मं.२)

**उप॑ नः॒ सव॒ना ग॑हि॒ सोम॑स्य सोमपाः पिब ।**
**गो॒दा इद्रे॒वतो॒ मदः॑ ॥**

**पदपाठः**

उप॑ । नः॒ । सव॑ना । आ । ग॒हि॒ । सोम॑स्य ।
सो॒म॒ऽपाः॒ । पि॒ब॒ । गो॒ऽदाः । इत् । रे॒वतः॑ । मदः॑ ॥

---

१. स्त्रियां ङीपिति - क ।

भाष्यम्

**ज्ञानदोऽस्यैव चाधिकम् ।**
**ज्ञानाख्यरयियुक्तस्य हिरण्यादिमतोऽपि वा ।**
**सुखकारी भवान् ॥ ३२ ॥**

टीका

हे सोमपाः इन्द्र ! यो भवान्रेवतोऽध्यात्मं ज्ञानाख्यरयियुक्तस्य बहिरपि त्वत्पूजार्थं हिरण्यादिमतोऽस्य यजमानस्य । इत् एव । गोदाः ज्ञानदः । मदः सुखकारी च । स त्वं नोऽस्माकं सोमस्य सवना सवनान्युपागहि उपागच्छ । पिब च सोमम् । यदि यजमानो ज्ञानाख्यरयियुक्तः किं तस्य ज्ञानदानेनेत्यत उक्तम् अधिकमिति । क्रियाविशेषणं चैतत् ॥ ३२ ॥

टिप्पणी

उत्[1] इत्यस्य रेवत इत्यनेनान्वय इति प्रदर्शनाय भाष्येऽस्येवेत्युक्तमित्यभिप्रेत्य योजनामाह अस्य इत् एवेति । सवनानीति । प्रातःसवनमाध्यंदिनसवनतृतीयसवनभेदेन सवनानां त्रित्वाद्बहुवचनमिति ज्ञातव्यम् । क्रियाविशेषणमिति । एतदधिकमिति पदं ज्ञानदानरूपक्रियाविशेषणमित्यर्थः ॥ ३२ ॥

मंत्रः – ३३

(अ.१, सू.४, मं.३)

**अथा॑ ते॒ अन्त॑मानां वि॒द्याम॑ सुम॒ती॒नाम् ।**
**मा नो॒ अति॑ ख्य॒ आ ग॑हि ॥**

---

१. उत इत्यस्य इति पा० ।

**पदपाठः**

अर्थ । ते । अन्तंमानाम् । विद्यामं । सुऽमतीनाम् ।
मा । नः । अति । ख्यः । आ । गहि ॥

**भाष्यम्**

**तस्माल्लभेम सुमतीस्तव ।**
**अन्ते मितास्त्वद्विषया मतयो ह्युत्तमोत्तमाः ।**
**अस्मानतीत्य मा पश्य करुणार्द्रदृशा सदा ॥ ३३ ॥**

**टीका**

यस्मात् त्वं ज्ञानादिमतोऽभिप्रेतार्थदायी अथ **तस्मात्**। वयमुत्तमोत्तमगणनस्यान्ते मिताः प्रमिताः । उत्तमोत्तमा इति यावत् । यास्ते तव त्वद्विषयाः सुमतयस्तासामन्तमानां सुमतीनामन्तमाः सुमतीः । विद्याम लभेम लभेमहि व्यत्ययात् । त्वं च नोऽस्मानति अतीत्य अन्यान् सदा माख्यः मा पश्य । मायं न माङ् । अस्मानेव पश्य । आगहि आगच्छ च । क्रूरदृष्ट्याऽन्यदर्शनमेवाभिमतमिति करुणार्द्रदृशेत्युक्तम् ॥ ३३ ॥

**टिप्पणी**

अन्तमानां सुमतीनामिति द्वितीयार्थे षष्ठ्याविति प्रदर्शनाय भाष्ये सुमतीः मिता इत्युक्तमिति भावेन योजनामाह **अन्तमाः सुमतीरिति**। विद्लृ लाभ इति धातोः लाभे विन्दति विन्दत इत्युक्तेरुभयपरत्वेन ऋचि विद्याम इति परस्मैपदप्रयोगेऽपि लभ धातोः नित्यात्मनेपदित्वेन भाष्ये लभेमहीति प्रयोक्तव्ये लभेमेति कथं परस्मैपदप्रयोगः कृतः ? इत्यत आह

**व्यत्ययादिति** । व्यत्ययो बहुलमिति सूत्रे सुप्तिङादीनां व्यत्ययकथनात् प्रकृते पदव्यत्यय इति भावः । ऋचि मानो अति ख्य इति माङ्योगेन माङि लुङिति लुङ्प्रयोगात् भाष्येऽपि लुङ्प्रयोगे कर्तव्ये पश्येति कथं लोट्प्रयोगः[1] कृतः ? इत्यत आह **मायमिति** । अयं भाष्ये प्रयुक्तो मा इति शब्दः 'अमा नो ना प्रतिषेधे' इति निषेधार्थक मा शब्द एव न तु माङित्यर्थः, तेन लोडुपपत्तिरिति भावः ।

**अन्यदर्शनमिति** । बाह्याभ्यन्तरभेदेन द्विविधा ये भगवद्द्वेषिणः कामक्रोधादयो दुर्जनाश्च तेषां दर्शनं क्रूरदृष्ट्याभिमतमेवेत्यर्थः ॥ ३३ ॥

**मंत्रः – ३४**

(अ.१, सू.४, मं.४)

**परेहि विग्रमस्तृतमिन्द्रं पृच्छा विपश्चितम् ।**
**यस्ते सखिभ्य आ वरम् ॥**

**पदपाठः**

**परा । इहि । विग्रम् । अस्तृतम् । इन्द्रम् । पृच्छ । विपःऽचितम् ॥ यः । ते । सखिऽभ्यः । आवरम् ॥**

**भाष्यम्**

**मन्मनो वाऽथ शक्रो वा दूरेऽपि परमेश्वरम् ।**
**गच्छाग्राह्यमनष्टं च व्याप्तचित्तं य एव च ।**
**सखिभ्य उत्तमो नित्यम् ॥ ३४ ॥**

---

१. प्रत्ययः - क ।

## टीका

हे **मन्मनो मदीयमनः** ! यद्यपि त्वमिन्द्रात्परा दूरे वर्तसे । तद्ग्रहणासमर्थम् । अथवा शक्रः परमेश्वरस्त्वतः परा दूरे वर्तते त्वद्विषयो न भवति । अपि तथापि त्वं विग्रं वीत्युपसर्गो नञर्थे । ग्रह उपादाने । कर्मणि डः । **अग्राह्यम्** । अस्तृतमच्छिन्नमनष्टं विपश्चितं विपूर्वादाप्नोतेरसुन् । धात्वाकारलोपश्च । विपा व्याप्ता चित् यस्यासौ विपश्चित् । तं व्याप्तचित्तम् । अवग्रहदर्शनात् इन्द्रं परमेश्वरमिहि गच्छ शरणं याहि अवगच्छ वा । तदर्थं गुरून् पृच्छ । य इन्द्रस्ते सखिभ्य आवरं आवरो नित्यमुत्तमस्तम् । अत्र परेत्युपसर्गस्येहीति क्रियायोगे मरणार्थत्वप्रतीतेरन्यथा व्याख्यातम् । ॥ ३४ ॥

## टिप्पणी

'कर्मणि ड' इति डप्रत्ययस्य चुटू इति डकारलोपे डित्यभस्यापीति धातुटिलोपे विग्रमिति रूपमिति भावः । ननु विद्वान् विपश्चिदिति विद्वन्नामतयाभिधानसिद्धस्य विपश्चिच्छब्दस्य विभज्यावयवार्थकथनं कथं क्रियत इत्यत आह **अवग्रहेति** । पदकाले विपः चितमित्यवग्रहदर्शनात् योगव्युत्पत्त्यावयवार्थकथनमुपपन्नमिति भावः ।

यद्वा अध्यापकाः पदकाले विपः चितमिति पदद्वयं पठन्ति, तत्कथं तदाश्रयणेनैकपद्यमाश्रयत इत्यत आह **अवग्रहेति** । अवग्रहस्यैक पद एव सम्भवेन तस्यैकपदत्वमुपपन्नमिति भावः । गत्यर्थानां ज्ञानार्थत्वादिति भावेनाह **अवगच्छेति** । **तदर्थमिति** । शरणप्राप्त्यर्थमवगमप्राप्त्यर्थं चेत्यर्थः । **गुरून् पृच्छेति** । गुरूपदेशेनैव भगवद्भजनादेः प्राप्तत्वाद्

ज्ञानाद्यर्थं गुरूपसत्तेरावश्यकत्वस्य 'तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्' इत्यादिप्रमाणेषु 'प्रदानवदेव तदुक्तम्, लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि' इत्यादिब्रह्मसूत्रेषु निर्णीतत्वात् गुरूपसत्तिः कार्येति भावः । यथोक्तं सप्तमेऽध्याये गीतातात्पर्ये 'क्षिप्रं च ज्ञापयत्येव भगवान् स्वयमेव तत् । यदि जन्मान्तरे स्वीयो निमित्तीकृत्य कञ्चन' इत्यादि चेति ।

विवृतं च तट्टीकायां जन्मान्तरे ज्ञापयतीत्युपलक्षणं यदि स्वीय इति सम्बन्धः । कञ्चन गुर्वादिकं निमित्तीकृत्य न तु साक्षादिति । तथा श्रीमन्महाभारततात्पर्यनिर्णये षड्विंशेऽध्याये जयद्रथस्यैव वधे निशायां स्वप्नेन यत्तं गिरिशान्तिकं हरिः । स्वयमेवाखिलजगत्सृष्ट्याद्यमितशक्तिमान् । अप्यच्युतो गुरुद्वारा प्रसादकृदहं त्विति । ज्ञापयन् फल्गुनस्यास्त्रगुरुं गिरिशमञ्जसा । प्रापयित्वैनमेवैतत्प्रसादादस्त्रमुल्बणम् । चक्रे इति गुरूपसत्तेरावश्यकत्वमुक्तम् । तथा च प्रकृते गुरूनित्यध्याहृत्य पृच्छेत्यनेनान्वयकथनमुपपद्यत इति भावः ।

ननूपसर्गास्तु सति क्रियावचने तत्सम्बन्धिनो भवन्ति, असति तु ससाधनां क्रियामाहुरिति शाब्दिकमर्यादया परेत्युपसर्गस्य सन्निहितत्वेन इण गताविति धातुनिष्पन्नेन इहीति क्रियापदेनान्वयसम्भवे वर्तत इत्यध्याहृत्य किमर्थं योजितमित्यत आह **अत्रेति** । **मरणार्थत्वेति** । आत्मकान्तमुपलभ्य परेतं चुक्रुशुर्निजतनुं प्रहरन्त्यः । अन्यत्र नापयसि नागपुरात्परेतान् दृष्ट्वाखिलानपि नो मुदमेहि पार्थैः इत्यादौ परेत्युपसर्गपूर्वस्य इण् गताविति धातोः मरणार्थतया प्रसिद्धत्वात् प्रकृते तदयोगादन्यथा व्याख्यातमिति भावः ॥ ३४ ॥

## टीका

हे **मन्मनो मदीयमनः !** यद्यपि त्वमिन्द्रात्परा दूरे वर्तसे । तद्ग्रहणासमर्थम् । अथवा शक्रः परमेश्वरस्त्वतः परा दूरे वर्तते त्वद्विषयो न भवति । अपि तथापि त्वं विग्रं वीत्युपसर्गो नञर्थे । ग्रह उपादाने । कर्मणि डः । **अग्राह्यम्** । अस्तृतमच्छिन्नमनष्टं विपश्चितं विपूर्वादाप्नोतेरसुन् । धात्वाकारलोपश्च । विपा व्याप्ता चित् यस्यासौ विपश्चित् । तं व्याप्तचित्तम् । अवग्रहदर्शनात् इन्द्रं परमेश्वरमिहि गच्छ शरणं याहि अवगच्छ वा । तदर्थं गुरून् पृच्छ । य इन्द्रस्ते सखिभ्य आवरं आवरो नित्यमुत्तमस्तम् । अत्र परेत्युपसर्गस्येहीति क्रियायोगे मरणार्थत्वप्रतीतेरन्यथा व्याख्यातम् । ॥ ३४ ॥

## टिप्पणी

'कर्मणि ड' इति डप्रत्ययस्य चुटू इति डकारलोपे डित्यभस्यापीति धातुटिलोपे विग्रमिति रूपमिति भावः । ननु विद्वान् विपश्चिदिति विद्वन्नामतयाभिधानसिद्धस्य विपश्चिच्छब्दस्य विभज्यावयवार्थकथनं कथं क्रियत इत्यत आह **अवग्रहेति** । पदकाले विपः चितमित्यवग्रहदर्शनात् योगव्युत्पत्त्यावयवार्थकथनमुपपन्नमिति भावः ।

यद्वा अध्यापकाः पदकाले विपः चितमिति पदद्वयं पठन्ति, तत्कथं तदाश्रयणेनैकपद्यमाश्रयत इत्यत आह **अवग्रहेति** । अवग्रहस्यैक पद एव सम्भवेन तस्यैकपदत्वमुपपन्नमिति भावः । गत्यर्थानां ज्ञानार्थत्वादिति भावेनाह **अवगच्छेति** । **तदर्थमिति** । शरणप्राप्त्यर्थमवगमप्राप्त्यर्थं चेत्यर्थः । **गुरून् पृच्छेति** । गुरूपदेशेनैव भगवद्भजनादेः प्राप्तत्वाद्

ज्ञानाद्यर्थं गुरूपसत्तेरावश्यकत्वस्य 'तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्' इत्यादिप्रमाणेषु 'प्रदानवदेव तदुक्तम्, लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि' इत्यादिब्रह्मसूत्रेषु निर्णीतत्वात् गुरूपसत्तिः कार्येति भावः । यथोक्तं सप्तमेऽध्याये गीतातात्पर्ये 'क्षिप्रं च ज्ञापयत्येव भगवान् स्वयमेव तत् । यदि जन्मान्तरे स्वीयो निमित्तीकृत्य कञ्चन' इत्यादि चेति ।

विवृतं च तट्टीकायां जन्मान्तरे ज्ञापयतीत्युपलक्षणं यदि स्वीय इति सम्बन्धः । कञ्चन गुर्वादिकं निमित्तीकृत्य न तु साक्षादिति । तथा श्रीमन्महाभारततात्पर्यनिर्णये षड्विंशेऽध्याये जयद्रथस्यैव वधे निशायां स्वप्नेन यत्तं गिरिशान्तिकं हरिः । स्वयमेवाखिलजगत्सृष्ट्याद्यमितशक्तिमान् । अप्यच्युतो गुरुद्वारा प्रसादकृदहं त्विति । ज्ञापयन् फल्गुनस्यास्त्रगुरुं गिरिशमञ्जसा । प्रापयित्वैनमेवैतत्प्रसादादस्त्रमुल्बणम् । चक्रे इति गुरूपसत्तेरावश्यकत्वमुक्तम् । तथा च प्रकृते गुरूनित्यध्याहृत्य पृच्छेत्यनेनान्वयकथनमुपपद्यत इति भावः ।

ननूपसर्गास्तु सति क्रियावचने तत्सम्बन्धिनो भवन्ति, असति तु ससाधनां क्रियामाहुरिति शाब्दिकमर्यादया परेत्युपसर्गस्य सन्निहितत्वेन इण गताविति धातुनिष्पन्नेन इहीति क्रियापदेनान्वयसम्भवे वर्तत इत्यध्याहृत्य किमर्थं योजितमित्यत आह **अत्रेति** । **मरणार्थत्वेति** । आत्मकान्तमुपलभ्य परेतं चुक्रुशुर्निजतनुं प्रहरन्त्यः । अन्यत्र नापयसि नागपुरात्परेतान् दृष्ट्वाखिलानपि नो मुदमेहि पार्थैः इत्यादौ परेत्युपसर्गपूर्वस्य इण् गताविति धातोः मरणार्थतया प्रसिद्धत्वात् प्रकृते तदयोगादन्यथा व्याख्यातमिति भावः ॥ ३४ ॥

**मंत्रः – ३५**

(अ.१, सू.४, मं.५)

**उत ब्रुवन्तु नो निदो निरन्यतश्चिदारत ।**
**दधाना इन्द्र इद्दुवः ॥**

**पदपाठः**

उत । ब्रुवन्तु । नः । निदः । निः । अन्यतः ।
चित् । आरत । दधानाः । इन्द्रे । इत् । दुवः ॥

**भाष्यम्**

**निदस्तस्य समीपगाः ।**
**तेऽपि ब्रुवन्तु नो देवं प्रापुर्ये चान्यतोऽपि तम् ।**
**निर्गत्याज्ञानतस्त्व(स्त)स्माद्दधाना ईश एव च ।**
**दुवः प्राणान्ब्रुवं त्वेव तेऽपि नः परमेश्वरम् ॥ ३५ ॥**

**टीका**

ये निदः तस्य परमेश्वरस्य समीपगाः सृष्ट्यादावेव तत्समीपे वर्तमाना ब्रह्मादयः त उत तेऽपि नोऽस्मान्प्रति देवं ब्रुवन्तु । परमेश्वर-स्वरूपं यथावद्व्याकुर्वन्तु । उतेति वक्ष्यमाणापेक्षया निद इत्यव्ययस्य सामीप्यार्थत्वेऽभिधानं वक्ष्यते । ये चान्यतः स्थानान्तरतः निरित्युप-सर्गश्रवणादारतेत्यनेन च योगायोगादधिकार्थलाभाच्च धात्वध्याहारः । अस्मात्संसारहेतोरज्ञानतो निर्गत्यैव तं परमेश्वरमारत प्रापुस्तेऽपि ब्रुवन्तु । ये चेन्द्र इत् ईश एव दुवः प्राणान् आत्मनो विषयान् ।

**दुहन्तीति । दुहेर्डुः । दधाना वर्तन्ते तत्प्राप्त्यर्थं तमुपासते । तेऽपि नः परमेश्वरं ब्रुवन्त्वेव ॥ ३५ ॥**

## टिप्पणी

ऋचि उतशब्दोऽप्यर्थ इति प्रदर्शनाय भाष्येऽपीत्युक्तमित्यभिप्रेत्य योजनामाह **तदुत तेऽपीति**। 'अपिः पदार्थसम्भावनान्ववसर्गगर्हासमुच्चयेषु' इति पाणिनीसूत्रेऽपिशब्दस्य समुच्चयार्थकत्वोक्तेः प्रकृते समुच्चायकाप्यर्थतया उतशब्दो योज्य इति भावः । तद्धि समुच्चयं किमित्यत आह **उतेति**। वक्ष्यमाणे ते ये चान्यत इति, ये च इन्द्र इदिति वक्ष्यमाणपदद्वयापेक्षया तत्समुच्चायकत्वेन उतशब्द इत्यर्थः । **अभिधानं वक्ष्यत इति**। द्वितीयाध्याये यच्छिद्धित इत्था भगः सरामानः पुराविदः इत्यस्यामृचि भाष्ये निदो दवीय इति तु विरुद्धार्थद्वयाभिधौ दूरसामीप्यवचनादुभावपि महादधावित्यभिधानं वक्ष्यत इत्यर्थः । विवृतं च तत्र टीकायां महोदधौ नाम महोदधिनामके ग्रन्थे कथितमेतदिति शेष इति ।

**निरित्युपसर्गश्रवणादिति**। अस्य धात्वध्याहार इत्यनेनान्वयः ।

ननु ऋषिश्रुतेन ऋगताविति धातुनिष्पन्नेन सरतेति क्रियापदेनैवान्वयसम्भवे निर्गत्येति ल्यबन्तगम्लृधात्वध्याहारेण किमर्थं योज्यत इत्यत आह **आरतेत्यनेन चेति । योगायोगादिति** । सम्बन्धयोगादित्यर्थः । निरित्यस्य निषेधार्थकत्वेन सारतेत्यनेन सम्बन्धेन प्रापुरित्यर्थः स्यात् । तथा च भगवत्प्राप्तिरहितानां भगवद्द्वेषत्वेनावैष्णवत्वादवैष्णवस्य वेदेऽपि ह्यधिकारो न विद्यत । 'अनन्यप्रोक्ते गतिरत्र नास्ति, जीवानां चैव विष्णोश्च यो न वेत्ति भिदां पुमान् । तदनुव्रताश्च ये केचित् तेषां ज्ञानं न विद्यते ।

इत्यादि प्रमाणेष्ववैष्णवानां स्वाध्यायप्रवचनादौ[१] निन्दितत्वेन तेभ्यः सकाशाज्ज्ञानदानसम्पादनायोगात् । यदि च निरित्यस्य सामीप्यर्थकतया व्याख्यानात् तत्प्रतिसम्बन्धितया नापुरित्यस्य समीपं न प्रापुः किन्तु दूरस्थाः ये भगवद्भक्ताः तेऽपि ब्रुवन्त्विति दूरस्थभक्तपरतयान्वयोपपत्तिरङ्गीक्रियेत तथाप्यर्थविशेषालाभादध्याहृत्य योजनायां तु प्रवक्तॄणां संसारहेत्वज्ञानराहित्य भगवज्ज्ञानत्व[२] [३]भगवत्प्राप्तत्वलक्षणमाहात्म्यप्रतिपादनायेत्यर्थविशेषलाभाच्चाध्याहृत्य योजितमिति भावः । **धात्वध्याहार इति**। उपसर्गास्तु सति क्रियावचने तत्सम्बन्धिनो भवन्ति, असति तु ससाधानां क्रियामाहुरिति शाब्दिकमर्यादया प्राप्तस्य कथनमित्यर्थः ।

भाष्येऽज्ञानस्त्विवति तुशब्दो एवार्थो भिन्नक्रमश्चेत्युपेत्य योजनामाह **निर्गत्यैवेति**। दुहेर्जुरिति[४] । दुह प्रपूरण इति धातोरौणादिक डुप्रत्यये चुटू इति डकारलोपे डित्यभस्यापीति धातुटिलोपे दुशब्दनिष्पत्तौ कृत्तद्धितेति प्रातिपदिकसंज्ञायां द्वितीयाबहुवचने शसि छान्दस उवङादेशे दुव इति रूपसिद्धिरिति भावः ॥ ३५ ॥

**मंत्रः – ३६**

(अ.१, सू.४, मं.६)

**उत नः सुभगाँ अरिर्वोचेयुर्दस्म कृष्टयः ।**
**स्यामेदिन्द्रस्य शर्मणि ॥**

---

१. प्रवचनादेः इति पा० । २. भगवज्ज्ञानित्व - क ।
३. भगवत्प्राप्तिलक्षण - क । ४. दुहेर्डुरिति ।

**पदपाठः**

उत । नः । सुऽभगान् । अरिः । वोचेयुः । दस्म ।
कृष्टयः । स्याम । इत् । इन्द्रस्य । शर्मणि ॥

**भाष्यम्**

**अरयोऽपि प्रजा अस्मान् वोचेयुः सुभगान् सदा ।**
**शत्रुभेदिंस्तवेन्द्रस्य स्यामैवानुग्रहे सुखे ॥ ३६ ॥**

**टीका**

हे दस्म ! दस्यतिर्भेदनार्थः । ततो म(क्)प्रत्ययः । शत्रुभेदिन् शत्रूणां हन्तः । अरिरुत अरयोऽपि । कृष्टयः प्रजाः नोऽस्मान् सुभगान् सदा वोचेयुर्वदेयुः । किं च वयमिन्द्रस्य तवानुग्रहे सतीति शेषः । शर्मणि सुखे स्यामेत् स्यामैव । त्वदनुग्रहेण सुखिनो भवामैव ॥ ३६ ॥

**टिप्पणी**

**शत्रूणां हन्त इति** । हनहिंसागत्योरिति धातोः वर्तमाने लडिति लटि 'लट शतृशानचौ' इति शत्रादेशे सम्बुध्येकवचने 'ऋतो ङि सर्वनामस्थानयोः' इति गुणे रपरत्वे हलङ्याभ्य इति सम्बुद्धिसुलोपे रेफस्य विसर्गे हल इति रूपमिति ज्ञेयम् । अरिरित्यस्य क्रुष्ट इत्यनेनान्वयात् एकवचनं बहुवचनार्थे । उतशब्दस्याप्यर्थकतयारिशब्देनान्वयश्चेति प्रदर्शनाय भाष्ये अरयोऽपीत्युक्तमित्यभिप्रेत्य योजनामाह **अरिरुत अरयोऽपीति** ।

**विशब्द इति** । अकचप्रविसम्भूमसखहा विष्णुवाचका इति । विः पक्षि परमात्मनोरित्याद्यभिध्यानेषु विष्णुवाचितया प्रसिद्धस्य विशब्दस्य

विद्वद्रूढिवैदिकाभ्यासयोगादेव लभ्यत इति यौगिकत्वेन वीरविक्रान्ताविति धातोरौणादिकडिप्रत्ययान्ततया निष्पन्नस्य विशब्दस्य सामर्थ्यापरनामक-वीर्यवाचित्वमुपपन्नमिति भावः । पतयच्छब्दात्परस्य द्वितीयैकवचनस्य अमः 'सुपां सुलुक्' इत्यादिना लुगित्यभिप्रेत्याह **पतयत् उत्पतयन्त-मिति** ।

ननु 'हेतौ' इति सूत्रे वृत्तौ हेतुवाचिनस्तृतीया स्यात् धनेन कुलं विद्यया यशः इत्याद्युक्तत्वेन प्रकृते उत्पतनाकार्यं प्रति मदस्य हेतुत्वात् भेदेनेति निर्देशो कर्तव्ये मदादिति पञ्चमीनिर्देशः कथं भाष्ये कृतमित्यत आह **मदमुत्पाद्येति** । ल्यब्लोपे कर्मण्यधिकरणे पञ्चमी वाच्येत्युक्तेः ल्यब्लोप-निमित्ततामाश्रित्य भाष्ये कर्मणि पञ्चमीप्रयोगः कृत इति भावः ।

ननु 'सह सुपा' इति सूत्रे सुबामन्त्रिते पराङ्गवत्सरः इत्यतः सुबि-त्यनुवर्तते । सुबन्तं सुबन्तेन सह समस्यत इत्यर्थपरतया इदं सूत्रं द्वितीयाश्रितेत्यादिसमासविधायकसूत्रेष्वधिक्रियत इति वृत्त्यादावुक्तत्वेन तिङन्तपदस्य सुबन्तपदेन समासविधायकसूत्रस्यादर्शनात् प्रकृते मन्दयति सखायमिति कथं समास इत्यत आह **मयूरेति** । 'मयूरव्यंसकादयश्च' इति सूत्रेण समुदाया एव निपात्यन्ते मयूरव्यंसकादयः शब्दाः तत्पुरुषसमाससंज्ञा भवन्ति । अभिहितलक्षणस्तु तत्पुरुषो मयूरव्यंसकादिषु द्रष्टव्यः इति वृत्त्यादावुक्तत्वेन प्रकृते मन्दयत्सखमिति तत्पुरुषसमासो ज्ञेय इति भावः । अत एव 'राजाहः सखिभ्यष्टच्' इति टच्प्रत्ययेन सखिशब्दस्याकारान्त-त्वात् मन्दयत्सखमिति निर्देशोपपत्तिरिति ज्ञेयम् ।

भाष्ये टीकायां च तत्सखीनामिति निर्देशस्तु समासान्तविधेर-नित्यत्वाश्रयणेनेति ज्ञेयम् । भाष्ये आभरस्वोदर इति तुष्ट्या हृदि वेति

वैकल्पिकाधारद्वयकथनात् सोमं मनेऽपि वेति प्रस्तुत सोममनसो-रुभयोरप्युभयान्वयः प्रतीयते । तां वारयितुं नात्र वाशब्दो व्यवस्थित-विकल्पार्थः, किन्तु बाह्याध्यात्मभेदेन सोममनसोरेकैकस्य यथाक्रम-मेकैकाधारेणान्वयप्रदर्शनपरतया व्यवस्थितविकल्पार्थ इत्यभिप्रेत्य योजनामाह **एवम्भूतमित्यादिना** । एवंभूतमाशुत्वादिगुणविशिष्टमित्यर्थः । **सोदर इति शेष इति** । उपलक्षणमेतत् तुष्ट्या हृदीत्यस्यापि शेष इति द्रष्टव्यम् ।

**एवंविधमिति** । आशुत्वादिधर्मोपेतमित्यर्थः । मनसः आशुत्वा-दिकं च मनसश्चञ्चलत्वादित्यादि वक्ष्यमाणरीत्या द्रष्टव्यम् । 'मनः परं कारणमामनन्ति संसारचक्रं परिवर्तयेच्च यत् । योगाद्रिश्रामकाले तु मनसा चिन्तयेच्छुभान् । नाशुभान् चिन्तयेत् क्वापि तेन दुःखानि विन्दति । मन एव मनुष्याणां कारणं बन्धमोक्षयोः । तस्मान्मनो जयेन्नित्यं यत्नं कुर्याद्विचक्षणः । जिते मनसि यत्नेन सर्वान् कामानवाप्नुयात् ।' इत्यादि-प्रमाणेषु ज्ञानसम्पादने मनोजयस्यावश्यकत्वकथनात् ज्ञानाख्ययज्ञभूषणत्वं मनसो द्रष्टव्यम् । **आशुत्वार्थमिति** । शीघ्रगमनाद्यर्थमित्यर्थः ।

**प्रमाणविरुद्धमिति** । 'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च । तद्धावतोऽन्यानत्येति तिष्ठन्' इत्यादि प्रमाणेषु भगवतः बलादेः स्वाभाविकत्वकथनेन सोमपानेन बलादेरप्राप्तव्यत्वात् चतुर्थ्यन्ततया व्याख्यानं प्रमाणविरुद्धमित्यत सम्बुद्ध्यन्ततया व्याख्यानं कृतमिति भावः ॥ ३६ ॥

मंत्रः – ३७

(अ.१, सू.४, मं.७)

**एमाशुमाशवे भर यज्ञश्रियं नृमादनम् ।**
**पतयन्मन्दयत्सखम् ॥**

**पदपाठः**

आ । ईम् । आशुम् । आशवे । भर । यज्ञऽश्रियम् ।
नृऽमादनम् । पतयत् । मन्दयत्ऽसखम् ॥

**भाष्यम्**

**आशुवीर्य तवैवाशुं सोमं क्षिप्रं मनोऽपि वा ।**
**आभर स्वोदरे तुष्ट्या हृदि वा यज्ञभूषणम् ।**
**ईमेव पुम्मदकरं मदादुत्पतनादिके ।**
**हेतुं मन्दत्वहेतुं च तत्सखीनां पुरोगतेः ॥ ३७ ॥**

**टीका**

विशब्दो वीर्यवाची । आशु विः वीर्यं यस्यासावाशविः पूर्वपदोकारस्याकारः । हे आशवे ! आशुवीर्य क्षिप्रकारिसामर्थ्य ! आशुं क्षिप्रं वेगवन्तम् । द्रवत्वात् । यज्ञश्रियं यज्ञभूषणम् । नृमादनं पुम्मदकरं कृतपानानां पुंसां हर्षकरम् । पतयत् उत्पतयन्तम् । मदात् मदमुत्पाद्योत्पतनादिके व्यापारे हेतुम् । मन्दयत्सखं मन्दयति सखायमिति मन्दयत्सखस्तम् । मयूरव्यंसकादिदर्शनात् । यः सोमं पिबति तत्सखीनां मन्दत्वहेतुम् । कथं पुरोगतेर्धावनादौ कृतपानानां बलव-

**त्तयाऽकृतपानेभ्यः पुरोगमनात् । एवंभूतं सोममाभर स्वोदर इति शेषः । अध्यात्मं त्वेवंविधं मनस्तुष्ट्या हृदि साध्विदमित्याभरेति व्यवस्थितो विकल्पः । ईमित्यनूद्यैवेति व्याख्यातम् । तस्य केनाप्यन्वयायोगात्तवेत्यध्याहृत्य तवैवेत्युक्तम् । त्वदधीनमेव सोमं त्वं स्वीकुर्विति । सोमस्य द्रवरूपत्वादाशुत्वम् । मनसश्चञ्चलत्वादाशुत्वम् । तदुद्रेकेण च पुंसां मदादिकं भवति । आशवे आशुत्वार्थमिति व्याख्यानं प्रमाणविरुद्धमित्यतः सम्बुद्धितया व्याख्यातम् ॥ ३७ ॥**

## टिप्पणी

**शतमित्यपरिमितनामेति**। दशदश तच्छतं, दशशतानि तत्सहस्रम्, तत्सर्वमित्यादिप्रमाणेषु शतशब्दस्यापरिमितापरनामकबहुत्ववाचितया प्रसिद्धत्वादिति भावः । ऋचि अस्येति षष्ठी द्वितीयार्थ इति प्रदर्शनाय भाष्य एनमित्युक्तमित्यभिप्रेत्य योजनामाह अस्यैनमिति प्रमाणविरुद्धमिति । परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च । यः सर्वज्ञः सर्ववित्, एष सर्वेश्वरः एष सर्वज्ञः क्व व्रणादि क्व चाज्ञानं स्वतन्त्राचिन्त्यसद्गुण' इत्यादिप्रमाणेषु शक्तिज्ञानादेरज्ञानवर्जस्य च स्वाभाविकत्वकथनेन सोमपानसामर्थ्येनाज्ञानशून्यत्वकथनं परमेश्वरस्य प्रमाणविरुद्धमिति भावः । भाष्ये तमोऽसह्यतयेत्यत्र तमोऽसह्यपदं द्वेधा योजयति **असह्यं तमो यस्येत्यादिना**।

'वाहिताग्न्यादिषु' इति सूत्रे निष्ठेत्यनुवर्त्य निष्ठान्तोपसर्जनस्य विकल्पेन परनिपातत्वोक्तावप्याकृतिगणश्चायमिति वृत्त्यादावुक्तत्वेन शक्तिसहोश्चेति सूत्रेण यत्प्रत्ययान्ततया निष्पन्नस्यासह्यशब्दस्य परनिपातो ज्ञेयः । **तमसो सह्येति वेति**। 'कर्तृकर्मणोः कृति' इति कर्मणि प्राप्तषष्ठ्याः कृद्योगलक्षणा

षष्ठी समस्यत इति वाच्यम् इति समासविधानेन प्रतिपदविधाना षष्ठी समस्यत इति वाच्यम् इति समासविधानेन प्रतिपदविधाना षष्ठी न समस्यते इति निषेधस्याप्राप्तेः षष्ठीसमासो ज्ञेय इति भावः । न च वाच्यं 'कर्मणि च' इति सूत्रेण कर्मणि षष्ठ्याः समासस्य निषिद्धत्वादिति, तस्मिन् सूत्रे कर्मणीत्युच्चार्यविहितषष्ठ्याः एव 'आश्चर्यो गवां दोहो गोपालेन' इत्यादौ समासस्याप्राप्ते इह कर्तुरनुपादानेन कर्मणि षष्ठ्या एव श्रवणेन समासोपपत्तिरिति ज्ञेयम् ।

ह्येव शब्दाविति । वृत्राणि हीति हिशब्दः आवृतेरेवेति एवशब्दश्च भाष्ये प्रयुक्तावित्यर्थः । यद्यप्येवशब्दः पूर्वं श्रुतः तथापि अल्पाच्तरमिति हिशब्दस्य पूर्वनिपात इत्यभिप्रेत्य टीकायां ह्येवशब्दावित्यनूदितमिति ज्ञेयम् ॥ ३७ ॥

**मंत्रः – ३८**

(अ.१, सू.४, मं.८)

**अ॒स्य पी॒त्वा श॑तक्रतो घ॒नो वृ॒त्राणा॑मभवः ।**
**प्राव॒ो वाजे॑षु वा॒जिन॑म् ॥**

**पदपाठः**

**अ॒स्य । पी॒त्वा । श॒त॒क्र॒तो॒ इति॑ शत॒ऽक्र॒तो । घ॒नः । वृ॒त्राणा॑म् । अ॒भ॒वः॒ । प्र । आ॒वः॒ । वाजे॑षु । वा॒जिन॑म् ॥**

## भाष्यम्

**एनं पीत्वा बहुज्ञानाभूस्तमोभिरनावृतः ।**
**प्रसादादेव मु(भ)क्तेषु तमोसह्यतया घनः ।**
**आवृतेरेव वृत्राणि ह्यज्ञानान्यन्नदं नरम् ।**
**प्रावो युद्धेषु योद्धारं भक्तं ज्ञानिनमेव च (वा) ॥ ३८ ॥**

## टीका

हे शतक्रतो ! शतमित्यपरिमितनाम । क्रतुर्ज्ञानं बहुज्ञान । त्वम् अस्यैनं सोमं पीत्वा । वृत्राणां तमसां घनोऽभेद्योऽभवः । तमोभिरनावृतोभूरिति यावत् ।

ननु परमेश्वरस्य सोमपानोत्पन्नया शक्त्या ज्ञानाप्रतिहतिरित्येतत्प्रमाणविरुद्धमतोऽभिप्रायमाह **प्रसादादिति** । येषां सोमः परमेश्वरेण पीतः तेषु तेन यज्ञेनोदिताद्भगवत्प्रसादादेव मुक्तेषु सत्सु प्रसादादेव परमेश्वरस्तमो न सहतेऽतः सोमं पीत्वा वृत्राणां घनो भव इत्युच्यते, न तु सोमपानसामर्थ्येन तस्याज्ञानानावृत्तिः । असह्यं तमो यस्यासौ तमोसह्यः । तमसोसह्य इति वा । अज्ञानेषु वृत्रशब्दं निर्वक्ति **आवृतेरिति** । सर्वजीवावरणात् । अस्य निर्वचनस्य यदावृणोत्तद्वृत्रस्य वृत्रत्वमित्यादि श्रुतिप्रसिद्धतया प्राबल्यं सूचयितुं ह्येवशब्दौ । किं च त्वं वाजिनमन्नवन्तम् । अन्नदं नरमिति यावत् । वाजेष्वन्नेषु सर्वभोगविषये प्रावो रक्षः । अथवा वाजिनं योद्धारं वाजेषु युद्धेषु प्रावः । नान्नदानादिमात्रेणेश्वरो रक्षतीत्यतः शेषमाह **भक्तं ज्ञानिनमेव चेति** । ॥ ३८ ॥

**टिप्पणी**

**बाह्ये स्पष्टमिति** । धनानां हिरण्यादिधनानां सातये लब्धये वाजेषु प्रसिद्धयुद्धेषु बाह्यशत्रुभिर्दुर्जनैस्सह योधयाम इति बाह्यार्थः स्पष्ट इत्यर्थः । ॥ ३८ ॥

**मंत्रः – ३९**

(अ.१, सू.४, मं.९)

**तं त्वा वाजेषु वाजिनं वाजयामः शतक्रतो ।**
**धनानामिन्द्र सातये ॥**

**पदपाठः**

तम् । त्वा । वाजेषु । वाजिनम् । वाजयामः ।
शतक्रतो इति शतक्रतो । धनानाम् । इन्द्र । सातये ॥

**भाष्यम्**

**योधयामो वयं तं त्वां ज्ञानादिधनलब्धये ।**
**अज्ञानाद्यस्मदरिभिः ॥ ३९ ॥**

**टीका**

हे शतक्रतो इन्द्र ! तमेवमुक्तगुणं वाजिनं योद्धारं त्वाम् । अध्यात्मं धनानां सातये ज्ञानादिधनलब्धये वाजेषु युद्धेष्वज्ञानाद्यस्मदरिभिः सह वाजयामो योधयामः । बाह्ये स्पष्टम् ॥ ३९ ॥

## टिप्पणी

**पृथिवी नामेति** । 'क्ष्मावनिर्मेदिमही' इत्यभिधानादिति भावः । एवं पृथिव्यां लोकरूढिमाश्रित्य गौण्या वृत्त्या भगवति योजितमवनिपदं यौगिकव्युत्पत्त्या मुख्यार्थपरमित्यभिप्रेत्य योजनामाह **अवतेरिति** । **ऐश्वर्यकर्मण इति** । ऐश्वर्यं कर्म क्रियावाच्यं यस्य तस्येत्यर्थः । एवं प्राप्तिकर्मण इत्यत्रापि प्राप्तिः कर्म क्रियावाच्यं यस्य तस्येत्यर्थो ज्ञेयः । अव रक्षण गतिकान्तीत्यादिना अवधातोः ऐश्वर्यापरनामकस्वाम्यवाचितया प्राप्त्यर्थतया च धातुगणे पाठादिति भावः ।

**अनिप्रत्यय इति** । कर्त्रर्थे औणादिकानिप्रत्यय इत्यर्थः । तथा-शेषद्रविणस्य स्वामी प्रापकश्चेत्यर्थः । **साम गायतेति** । 'गीतिषु सामाख्या, ऋच्यध्यूढं साम गायति' इति साम्नो गानसम्बन्धित्वोक्तेः सामेति कर्मकारकतया शेषः पूरित इति ज्ञेयम् । **गायतेति** । मध्यमपुरुषप्रयोगलब्धशेषमाह **हे उद्गातार इति** । उद्गातृप्रभृतय इत्यर्थः । उद्गातृनामक ऋत्विजः एकत्वेऽपि तत्सहचरितानां प्रस्तोत्रादीनां बहुत्वेन प्रोद्गातृशब्दस्य तल्लक्षकत्वात् प्रोद्गातॄणां प्रथमभक्षश्च सम इत्यादाविव प्रकृते उद्गातार इति बहुवचनोपपत्तिरिति द्रष्टव्यम् । **गायतिः शब्दमात्रार्थ इति** । न तु शब्दविशेष साममात्रपर इति मात्रशब्दार्थः । गै शब्द इति धातुपाठादिति भावः । तथा च ष्टुञ् स्तुतावित्यादाविव शब्दात्मक-स्तुतीनां धात्वर्थान्तर्भावेन कर्मत्वोपपत्तेः सामेति शेषपूरणं न कर्तव्यमिति भावः । अत्र पक्षेऽपि हे उद्गातार इति शेषपूरणं ज्ञेयम् ॥ ३९ ॥

मंत्रः — ४०

(अ.१, सू.४, मं.१०)

यो रायो३ऽवनिर्महान्त्सुपारः सुन्वतः सखा ।
तस्मा इन्द्राय गायत ॥

पदपाठः

यः । रायः । अवनिः । महान् । सुऽपारः ।
सुन्वतः । सखा । तस्मै । इन्द्राय । गायत ॥

भाष्यम्

योऽशेषद्रविणावनिः(धिः) ।
सुखदः संसृतेः पारस्तस्मा इन्द्राय गायत ।
कम्पोऽशेषग्रहे क्वापि लज्जायां वा पुरातने ।
पृथक्त्वेऽधृष्यतायां वा हरिणर्क्षीहितोदितः ॥ ४० ॥

टीका

य इन्द्रो रायोऽवनिः अशेषद्रविणस्यावनिः । अवनिरिति पृथिवीनाम । अवनिरिवाव निराश्रयः । अवतेरैश्वर्यकर्मणः प्राप्तिकर्मणो वा कर्तर्यनिप्रत्ययः । महानुत्तमः सुखदः संसृतेः पारश्चेति सुपारः । सुन्वतो यजमानस्य सखा । तस्मा इन्द्राय साम गायत । हे उद्गातारः ! यद्वा गायतिः शब्दमात्रार्थः । तस्मै तदर्थं स्तुतिशब्दान् कुरुतेति । अशेषेति कम्पार्थ उक्तः । तत्र कम्पस्याशेषार्थतायां प्रमाणमाह कम्प इति ॥ ४० ॥

**टिप्पणी**

ननु सोमशब्दोपपदात् वह प्रापण इति धातोः 'कर्मण्यण्' इत्यण्-प्रत्यये स्तोमशब्दनिष्पत्तौ प्रथमाबहुवचने 'अष्टि आज्जसेरसुक्' इत्यसुगागमे 'प्रथमयोः पूर्वसवर्णः' इति दीर्घे ब्राह्मणास इत्यादिवत् स्तोमवाहास इति निर्देशः स्यात्, कथं स्तोमवाहस इति ऋचि निर्देश इत्यत आह **छान्दसो ह्रस्व इति**। आत्वतेत्यत्र तुशब्दकृत्यं दर्शयति **इत्थम्भाव-स्येति** । देशविशेषोपवेशनशुचित्वादिविशिष्टत्वरूपेत्थम्भावस्येत्यर्थः । **एवमन्यत्रापीति**। यासु ऋक्षु स्पष्टार्थता तत्र भाष्ये व्याख्यानं न क्रियत इति द्रष्टव्यमित्यर्थः ॥ ४० ॥

## सूक्तम् – ५

**दशार्चम् । मधुच्छन्दाः । इन्द्रः । गायत्री ।**

**मंत्रः – ४१**

(अ.१, सू.५, मं.१)

**आ त्वेता नि षींदतेन्द्रंमभि प्र गांयत ।**
**सखांयः स्तोमंवाहसः ॥**

**पदपाठः**

आ । तु । आ । इत । नि । सीदत । इन्द्रंम् ।
अभि । प्र । गायत । सखांयः । स्तोमंऽवाहसः ॥

टीका

दशार्चमैन्द्रं सूक्तम् । हे सखायः ! स्तोमवाहसः स्तोमाः सामविशेषाः । तान्वहन्तीति स्तोमवाहसः । छान्दसो ह्रस्वः । उद्गातार इति यावत् । एत आगच्छत । आनिषीदत आगत्योपविशत । इन्द्रमभिप्रगायत च । आगमननिषदनयोरित्थंभावस्य सूचकस्तुशब्दः । स्पष्टत्वादृचो न व्याख्यानं कृतम् । एवमन्यत्रापि ॥ ४१ ॥

मंत्रः – ४२

(अ.१, सू.५, मं.२)

पुरूतमं पुरूणामीशानं वार्याणाम् ।
इन्द्रं सोमे सचा सुते ॥

पदपाठः

पुरुऽतमम् । पुरूणाम् । ईशानम् । वार्याणाम् ।
इन्द्रम् । सोमे । सचा । सुते ॥

भाष्यम्

सुपूर्णानां पूर्णतमं वरेण्यानामधीश्वरम् ।
सुते सोमे सुखेनैव सचा गायत तं प्रभुम् ॥ ४२ ॥

टीका

पुरूणां सुपूर्णानां मध्ये पुरूतमं पूर्णतमम् । वार्याणां वरेण्यानाम् उपादेयानां वस्तूनाम् । ईशानमधीश्वरमिन्द्रं तं प्रभुं सोमे सुते सति । सचा सुखेनैव मनः प्रसादपूर्वकं गायतेत्यनुवृत्त्या सम्बन्धः । अत्र

**पुरूतममिति । तमप्छान्दसः । व्यत्ययेनोदात्तत्वम् । यद्वा तमु अभिकाङ्क्षायामित्यस्य कर्मणि रूपमेतत् । पुरुभिः पूर्णैस्तम्यत इति पुरुतमस्तम् । पुरूणां वार्याणामिति सामानाधिकरण्यम् ॥ ४२ ॥**

## टिप्पणी

**वार्याणामिति** । द्वितीयाध्याये 'अभि त्वा देव सवितरि' इत्यस्यामृचि टीकायाम् अवद्यपण्येत्युपाधेरविवक्षितत्वात् 'ऋहलोर्ण्यत्' इति ण्यत्प्रत्ययो भवत्येवेति वक्ष्यति तद्वदत्रापि स्त्रीत्वोपाधेरनिरोधलक्षणोपाधिश्चाविवक्षित-त्वात् वार्यशब्दनिर्वाहो ज्ञेयः ।

ननु 'नित्यो नित्यानां चेतनश्चेतनानाम्' इत्यादाविव रूपाणां पुरुमति निर्धारणषष्ठीप्रयोगबलादेवातिशयार्थलाभात् पुरुतममित्यतिशयार्थकतमप्-प्रत्ययो व्यर्थ इत्यत आह **तमप्छान्दस इति** ।

ननु 'प्रत्ययः परश्च, आद्युदात्तश्च' इति सूत्रेण प्राप्तस्य प्रत्ययोदात्त-स्वरस्यापवादकतया 'अनुदात्तौ सुप्पितौ' इति सूत्रे पित्प्रत्ययस्यानुदात्तत्व-विधानेन प्रकृते तमप्प्रत्ययाकारस्यानुदात्तत्वप्राप्तेः कथमुदात्ततया अध्या-पकपाठ इत्यत आह **व्यत्ययेनेति** । 'व्यत्ययो बहुलम्' इत्युक्तेः स्वरव्यत्यय इति भावः । उदात्तस्वरार्थकथनायैव भाष्ये प्रभुमित्युक्तमित्यभिप्रेत्य टीकायाम् इन्द्रं तं प्रभुमिति योजितमिति ज्ञेयम् । अग्निमीळ इत्यस्यामृचि पूर्वमेव हितं प्रभुमित्येतद्भाष्यव्याख्यानावसरे टीकायां प्रभुमित्युदात्तस्वरार्थः उदात्तस्योच्चतार्थतेति हि वक्ष्यतीत्युक्तेरिति ज्ञेयम् । एतच्च प्रभुत्वोपपादनं पुरुत्वोपपादनार्थं चेति ज्ञेयम् । सर्वस्वामित्वादेव सकलकल्याणगुणपूर्णत्वं सर्वैराकाङ्क्ष्यत्वं चोपपन्नमिति भावः ।

**तमु अभिकाङ्क्षायामित्यस्येति**। अस्माद्धातोः कर्मण्यर्थे कविधानमिति कप्रत्यये वा औणादिकाकारप्रत्यये वा सति पुरुतमेति रूपसिद्धिरिति भावः। अस्मिन् पक्षे 'आद्युदात्तश्च' इत्युत्सर्गतः प्राप्तप्रत्ययोदात्तस्वरत्वमेव न तु व्यत्यय इति ज्ञेयम्। तत्र पुरुशब्दविग्रहप्रदर्शनपूर्वकं तदर्थकथनेन योजनामाह **पुरुभिरिति**। **तम्यत इति**। अभिकाङ्क्षत इत्यर्थः। अस्मिन् पक्षे पुरूणामिति षष्ठ्याः निर्धारणार्थकत्वाभावेन षष्ठी शेष इति सम्बन्धादिरूपशेषार्थकत्वात् कुत्रान्वय इत्यत आह **पुरूणामिति**। वार्याणामित्युक्तवस्तूनामुपादेयत्वोपपादनपरतया पूर्णत्वोपपादनार्थं वार्याणामित्यनेन विशेषणविशेष्यभावापन्नतया सामानाधिकरण्येनान्वय इति भावः। पुरुतममित्यत्र संहितायां पुरुशब्दे दीर्घः 'अन्येषामपि दृश्यते' इत्यनेन इति ज्ञेयम्॥ ४२॥

**मंत्रः – ४३**

(अ.१, सू.५, मं.३)

**स घा नो योग आ भुवत्स राये स पुरंध्याम्।**
**गमद्वाजेभिरा स नः॥**

**पदपाठः**

सः। घ। नः। योगे। आ। भुवत्। सः।
राये। सः। पुरम्ऽध्याम्। गमत्। वाजेभिः।
आ। सः। नः॥

### भाष्यम्

**मुक्तौ योगायासमन्ताद्भवेन्नो घोऽवधारणे ।**
**स एव भगवान् ज्ञानवित्ताय स च बुद्धिगः ।**
**बुद्धिः पुराश्रयत्वेन पुरन्धिः पत्न्यथापि वा ।**
**पत्न्यर्थत्वे तु तादर्थ्यं सोऽन्नैः सह न आव्रजेत् ॥ ४३ ॥**

### टीका

अत्र घशब्दोऽवधारणे वर्तते । ततश्च सघ स एव भगवान् नोऽस्माकमासमन्ताद्योगे (योगार्थं) मुक्तौ सायुज्यलक्षणाय योगाय भुवत् अभवत् विकरणव्यत्ययात् । भवेत् कालव्यत्ययात् । स एव राये अध्यात्मं ज्ञानवित्ताय भुवत् बहिर्व्यक्तम् । स एव च पुरन्ध्यां बुद्धौ सर्वेषां बुद्धिगो वर्तते । कथं बुद्धिः पुरन्धिरित्यत आह **बुद्धिरिति** । पुरं शरीरं धीयतेऽस्यामिति पुरन्धिः । कर्मण्यधिकरणे चेति किः, उपपदस्य मुमागमश्छान्दसः । बाह्ये व्याचष्टे **पत्नीति** । अथवा पत्न्यपि पुरन्धिरित्यन्वयः । तन्नामसु पाठात् । तत्र कथं सप्तम्यन्वय इत्यत आह **पत्न्यर्थत्व इति** । पुरन्धिशब्दस्य पत्न्यर्थत्वे तुयोग इतिवत्सप्तम्यास्तादर्थ्यमर्थः । पुरन्ध्यां पत्न्यर्थं भुवदिति । किं च स इन्द्रो वाजेभिः वाजैरन्नैः सह । अन्नानि दातुमिति यावत् । नोऽस्मान्प्रत्यागमत् आव्रजेत् ॥ ४३ ॥

### टिप्पणी

विकरणव्यत्ययादिति । शब्विकरणभूधातोः लङि व्यत्ययेन शविकरणतेत्यर्थः । ननु 'अनद्यतने लङ्' इति लङ अनद्यतनभूतार्थकत्वात्

भवेदिति विध्याद्यर्थकलङर्थतया भाष्ये कथं व्याख्यानं क्रियत इत्यत आह **कालव्यत्ययादिति** । छन्दसि लुङ् लुट् लृटः कालत्रये लङी विधानात् प्रकृते भवदिति लङः व्यत्ययेनागामिकालार्थकत्वप्रदर्शनाय भवेदिति भाष्ये प्रयुक्तमिति भावः ।

यद्यपि 'वर्तमाने लट्' इत्यादाविव कालोपाधितया लिङ्प्रत्ययो न विहितः तथापि विध्याद्यर्थपर्यालोचनाया आगामिकालस्यान्तर्भावात् कालव्यत्ययादित्युक्तमिति ज्ञेयम् । **बहिर्व्यक्तमिति** । राये हिरण्यादि-वित्ताय भुवदिति बाह्यार्थः स्पष्टमित्यर्थः । **कर्मणीति** । कर्मकारक उपपदे घुसंज्ञकेभ्य धातुभ्य अधिकरणकारकेऽर्थे किप्रत्ययो भवतीति पाणिनि-सूत्रार्थः । तथा च उदधिरिषुधिरित्यादाविव प्रकृते पुरुशब्दोपपदात् डुधाञ् धारणपोषणयोरित्यस्मात् किप्रत्यये धातोराकारलोपे उपपदपुरुशब्दस्य छान्दसमुमागमे पुरन्धिरिति रूपमिति भावः । भाष्ये अथापि वेत्यपि-शब्दवाशब्दयोः भिन्नक्रमतया अन्वय इत्यभिप्रेत्य योजनामाह **अथवा पत्न्यपीति** । **तन्नामस्विति** । याज्ञिकप्रयोगादौ पत्नीनामत्वेन प्रसिद्धत्वा-दित्यर्थः । **योग इतिवदिति** । योग आ भुवदित्यत्र योग इति सप्तम्याः योगायेति भाष्योक्तरीत्या तादर्थ्यमित्यर्थः । तथा पुरन्ध्यामित्यत्रापि पत्न्यर्थत्वे तादर्थ्य इत्यर्थः[१] ॥ ४३ ॥

**मंत्रः – ४४**

(अ.१, सू.५, मं.४)

**यस्यं संस्थे न वृण्वते हरी समत्सु शत्रवः ।**
**तस्मा इन्द्राय गायत ॥**

१. तादर्थ्यमर्थ इत्यर्थः - क ।

पदपाठः

यस्यं । सम्ऽस्थे । न । वृण्वते । हरी इतिं ।
समत्ऽसुं । शत्रंवः । तस्मैं । इन्द्राय । गायत ॥

भाष्यम्

**यस्य स्थितौ न वृणुते हर्यग्रमपि शत्रवः ।**
**मनः पुरो वा विषयहरणान्मन एव च ।**
**बुद्धिश्च हरिशब्दोक्ते तमआदीनि शत्रवः ॥ ४४ ॥**

टीका

यस्येन्द्रस्य संस्थे घञर्थे कविधानम्। स्थितौ सत्याम्। यस्मिन्निन्द्रे रथस्थिते सतीति यावत्। समत्सु युद्धेषु। शत्रवो हरी अश्वौ हर्यग्रमपि न वृण्वते न वृणुते। अश्वाग्रमपि न प्राप्नुवन्ति। तस्मा इन्द्राय गायत। अध्यात्मं हरी इत्येतस्यार्थमाह **मनः पुरो वेति**। अत्र मनश्शब्देन बुद्धेरप्युपलक्षणम्। हरिशब्दो मनोबुद्ध्योः कथं वर्तत इत्यत आह **विषयेति**। एवशब्दो निर्वचनस्फुटतायाम्। शत्रूनाह **तम आदीनीति**। ततश्चैवं योजना। यस्येन्द्रस्य संस्थे यस्मिन्परमेश्वरे विशेषतो भक्तशरीरे सन्निहिते सति। समत्सु ज्ञानयुद्धेषु शत्रवः तमःप्रभृतयो हरी मनोबुद्ध्योः पुरो न वृण्वते। मनोबुद्धी नाज्ञानाद्यावृते भवत इति ॥ ४४ ॥

टिप्पणी

ननु भाष्ये स्थितावपि भावार्थक क्तिन्प्रत्ययान्तपदेन व्याख्यानात् ऋचि संस्थ इति व्याख्येयपदमपि भावार्थकमिति वाच्यम्। तथा च स्त्रियां

क्तिनित्यधिकारे 'षिद्भिदादिभ्योऽङ' इत्यङप्रकरणे आतश्चोपसर्गे इति सूत्रे वृत्त्यादावाकारान्तेभ्यो धातुभ्य उपसर्ग उपपदे स्त्रियामङ्प्रत्ययो भवति भावेऽकर्तरि च कारके च । प्रदा उपदा प्रधा उपधेत्याद्युदाहृतत्वेन प्रकृते भावार्थेऽङ्प्रत्यये स्त्रियां टापि सप्तम्येकवचने संस्थायामिति ऋचि निर्देशः स्यात्, कथं संस्थ इति निर्देश इत्यत आह **घञर्थ इति** । 'ऋदोरप्' इत्यप्प्रकरणे 'ग्रहवृद्धनिश्चिगमश्च'[२] (२. पा.सू. ३-३-५८)' इति सूत्रे 'घञर्थे कविधानं स्थास्नापाव्यधिहनियुध्यर्थम्' इति वार्तिके घञ्प्रत्ययप्रतिपाद्य-भावेऽर्थे कप्रत्ययस्य विधानेन प्रकृते संपूर्वात्तिष्ठते कप्रत्यये धातोराकारलोपे संस्थ इति रूपमिति भावः ।

न च वाच्यं कप्रत्ययप्रकरणे विद्यमानेन आतश्चोपसर्गे क इति सूत्रेण कप्रत्ययो भविष्यतीति, तस्य कर्तरि कृदिति कर्त्रर्थविधानेन भावार्थक-त्वाभावात् वार्तिकाश्रयणमेव कृतमिति ज्ञेयम् । वृञ् वरण इति धातुः इनुविकरणे इना विकरणे च पठ्यते । तथा च ऋचि इनुविकरणलडा-त्मनेपदे बहुवचनस्य निर्देश इत्यभिप्रेत्य योजनामाह **न वृण्वते न वृणुत इति** । **एवशब्द इति** । मन एव चेत्युक्त एवशब्दः हरिशब्दनिर्वचन-स्फुटतायां वर्तत इत्यर्थः । अध्यात्मं समग्रवाक्ययोजनामाह **ततश्चैवं योजनेति** ॥ ४४ ॥

**मंत्रः – ४५**

(अ.१, सू.५, मं.५)

**सुतपाव्ने सुता इमे शुचयो यन्ति वीतये ।**
**सोमासो दध्याशिरः ॥**

पदपाठः

सुतऽपाव्ने । सुताः । इमे । शुचयः । यन्ति ।
वीतये । सोमासः । दधिऽआशिरः ॥

भाष्यम्

**सोमपे शुचयः सोमाः प्राप्त्यै दधिविमिश्रिताः ।**
**मनांसि ध्यानयुक्तानि वा(चा)ऽऽयान्ति हरये सदा ॥४५॥**

टीका

शुचयः शुद्धाः सुता अभिषुता दध्याशिरो दध्याशिराः दधिविमिश्रिताः आशिरशब्दो मिश्रितार्थ इत्येके । अन्ये त्वहोरात्रान्तरितं दध्याशिरं ततश्चाशिरं दधि येषु ते दध्याशिराः तस्य तात्पर्यं दधिविमिश्रिता इति । इमे सोमासः सोमाः वीतये वीतिर्गत्यादौ पठ्यते । यजमानस्येन्द्रप्राप्त्यै सुतप्राप्त्यै सोमपे आतो मनिन् क्वनिब्वनिपश्चेति वनिप् । इन्द्राय यन्ति यान्ति । गत्यर्थकर्मणीति चतुर्थी । अध्यात्मं तु सुता वेदवाक्यसङ्घर्षवन्तः । शुचयो रागादिविधुराः दध्याशिरः आदृगमहनजनः किकिनौ लिट् चेति किप्रत्ययः । दधि परमेश्वरे धारणम् । ध्यानमिति यावत् । तेन युक्ताः सोमाः मनांसि सुतपाव्ने मनसा सेव्याय हरये सदा यान्ति वीतये तत्प्राप्त्यर्थमिति ॥ ४५ ॥

टिप्पणी

वी गत्यादाविति । वी गति प्रजनकान्त्यशनखादनेष्विति वीधातुः गत्याद्यर्थतया धातुगणे पठ्यत इत्यर्थः । तथा च प्रकृते गत्यर्थाद् वीधातोः भावे क्तिन्प्रत्यये चतुर्थ्येकवचने वीतय इति रूपसिद्धेः प्राप्त्यै

इत्यर्थपरत्वमिति भावः । भाष्ये प्राप्त्यै इत्युपलक्षणम्, प्रजनशब्दित-प्रजाभिवृद्धिसत्कुलप्रसूतिकान्त्यशनखादनार्थं चेत्यपि ग्रहणमिति सूचनाय आदृगमहनेति । अस्मिन् सूत्रे आकारान्तेभ्यो धातुभ्यः ऋवर्णान्तेभ्य गमहनजन इत्येतेभ्यः छन्दसि विषये तच्छीलादिषु किकिनौ प्रत्ययौ भवतः, लिड्वच्च तौ भवतः । आदिति तकारो मुखसुखार्थः । नन्वयं तपरो मा भूत् तादपि परस्तार इति ऋकारे तत्कालग्रहणमिति वृत्त्यादावुक्तत्वेन प्रकृते डुधाञ् धारणपोषणयोरित्यस्माद्धातोः धारणार्थे किप्रत्यये धातो-राकारलोपे लिट्कार्ये द्विर्वचनादौ सति दधिशब्दनिष्पत्तेः तस्य धारणा-र्थकत्वमिति भावः ॥ ४५ ॥

**मंत्रः – ४६**

(अ.१, सू.५, मं.६)

**त्वं सुतस्यं पीतयें सद्यो वृद्धो अंजायथाः ।**
**इन्द्र ज्यैष्ठ्यांय सुक्रतो ॥**

**पदपाठः**

त्वम् । सुतस्यं । पीतयें । सद्यः । वृद्धः ।
अजायथाः । इन्द्रं । ज्यैष्ठ्यांय । सुक्रतो इतिं
सुऽक्रतो ॥

**भाष्यम्**

**[1]सदा पूर्णः शुभज्ञानज्यैष्ठ्यव्यक्त्यै सुताप्तये ।**
**न क्षुदादेरभिव्यक्तोऽभवः ॥ ४६ ॥**

१. सदा पूर्ण – पा० ।

## टीका

**हे इन्द्र ! सुक्रतो शुभज्ञान सद्योवृद्धः समानेऽहनि यस्मिन्नहनि स्वयं वर्तते तस्मिन् सदा स्वयं च वर्तते। अतः सदा वृद्धः सदा पूर्णस्त्वं सुतस्य पीतये सोमस्य पानाय सुताप्तय इति तात्पर्यम् । यद्वा अपि पूर्वस्येणः क्तिनि रूपमेतत् । वष्टिभागुरिरल्लोपमवाप्योरुपसर्गयोरित्यपेरल्लोपः । सोमस्य पीतये सुताप्तये यज्ञे यदजायथाः अभिव्यक्तोऽभवस्तत् ज्यैष्ठ्याय ज्यैष्ठ्यव्यक्त्यै सर्वदेवताभ्योऽतिशयेन सोमपानादिना स्वकीयं ज्यैष्ठ्यं प्रकटयितुमेव । न तु क्षुदादेर्हेतोः ॥ ४६ ॥**

## टिप्पणी

ननु सद्यो वृद्ध इत्यस्य सदा पूर्ण इति भाष्ये व्याख्यानात् सद्यःशब्दस्य सदाशब्दार्थत्वं प्रतीयते, तत्कथमित्यतस्तदुपपादयति **समानेऽहनीति** । 'सद्यः परुत्परार्यैषमः'[१] इति सूत्रे समानेऽहनीत्यर्थे सद्यःशब्दस्य निपातनात् प्रकृते सद्यो वृद्ध इत्यत्र सद्यःशब्दस्य समानेऽहनीत्यर्थपरत्वमिति भावः । तावता सद्यःशब्दस्य सदाशब्दार्थत्वं कथमित्यतः पर्यावसानगत्या प्राप्तमित्याह **यस्मिन्नहनीति** । तथा च सदावृद्धः सदापूर्णः इति भाष्यव्याख्यानमुपपन्नमिति भावः ।

ननु ऋचि पीतय इत्यस्य पा पान इति धातोर्निष्पन्नत्वेन पानार्थकत्वात् भाष्ये सुताप्तय इति प्राप्त्यर्थकतया कथं व्याख्यानं क्रियत इत्यत आह **सुताप्तय इतीति** । एवं तात्पर्यकथनपरतया भाष्यं व्याख्याय पीतय इत्यस्याक्षरार्थकथनपरं भाष्यमिति वक्तुं पीतिशब्दं निर्वक्ति **यद्वेति** । अपिपूर्वस्य इणगताविति धातोः भावे क्तिन्प्रत्ययेऽपिपदगतेकारेण धातोः

---

१. ५-३-२२ पा.सू. ।

'अकः सवर्णो दीर्घः, इति दीर्घे सत्यपीतिशब्दस्य निष्पत्तेः तस्य 'यमप्येति भुवनं साम्पराये' इत्यादाविव प्राप्त्यर्थकत्वमिति भावः, तर्हि ऋचि अपीतय इति निर्देशः स्यादित्यत आह वष्टीति । भागुरिनामक ऋषिः अव अपि इत्येतयोरुपसर्गयोरल्लोपमकारलोपं वष्टि । वाञ्छतीति शाब्दिकैरुक्तत्वेन प्रकृतेऽपिशब्दस्य अकारलोप इत्यर्थः । अक्षरार्थकथनप्रकारेण योजनामाह सोमस्येति । न क्षुदादेरिति[1] । आदिशब्देन पिपासाग्रहः ॥ ४६ ॥

**मंत्रः – ४७**

(अ.१, सू.५, मं.७)

**आ त्वा विशन्त्वाशवः सोमास इन्द्र गिर्वणः ।**
**शं ते सन्तु प्रचेतसे ॥**

**पदपाठः**

आ । त्वा । विशन्तु । आशवः । सोमासः ।
इन्द्र । गिर्वणः । शम् । ते । सन्तु । प्रऽचेतसे ॥

**भाष्यम्**

**गीर्भिर्वृतप्रभो ।**
**प्रकृष्टचेतास्त्वद्धृत्यो योऽस्मै स्युः शङ्कराः सुताः ॥४७॥**

**टीका**

हे गिर्वणो गीर्भिर्वेदवाक्यैर्वननीय भजनीय । वनतेरसुन् वृतेति तात्पर्यम् । यद्वा वृणोतेः कर्मण्यनस्प्रत्ययो डित् । इन्द्र प्रभो आशवः

---

१. न क्षुधादेरिति – क ।

**क्षिप्राः सोमासः सोमास्त्वा त्वामाविशन्तु। त्वामाविष्टाश्च ते सुताः प्रचेतसे यः प्रकृष्टचेतास्ते त्वदीयस्त्वद्भृत्यो यजमानोऽस्मै अस्य शं शङ्कराः सन्तु स्युः ॥ ४७ ॥**

### टिप्पणी

**वनतेरिति** । वन सम्भक्ताविति धातोः कर्मण्यौणादिकासुन्प्रत्यये नकारोकारयोर्लोपे वनस् शब्दस्य सकारान्तत्वसिद्धौ तस्य गिरुशब्देन समासे 'संज्ञापूर्वको विधिरनित्यः' इति वा 'सर्वे विधयः छन्दसि विकल्प्यन्ते' इति वा 'वोरूपधाया दीर्घ इकः' इति गिरुशब्दोपधादीर्घस्याप्रवृत्तौ च 'अत्वसन्तस्य चाधातोः' इति दीर्घस्याप्यसम्बुद्धाविति निषेधेनाप्रवृत्तौ च 'पूर्वपदात्संज्ञायामगः' इति नकारस्य णत्वे च हल्ङ्याभ्यो इति सम्बुद्धिलोपे सकारस्य रुत्वविसर्गयोः गिर्वण इति रूपसिद्धिरिति भावः । तद्धि वन सम्भक्ताविति धातुनिष्पन्नस्य गिर्वणशब्दस्य गीर्भिर्वृतेति वृञ् वरण इति धातुनिष्पन्नत्वेन वृतशब्देन कथं व्याख्यानं क्रियत इत्यत आह **वृतेति** ।

**तात्पर्यमिति** । तात्पर्यपरतया भाष्यं व्याख्याय अक्षरार्थपरतया भाष्यं व्याख्यातुं गिर्वण इत्यत्र वनशब्दं निर्वक्ति **यद्वेति** । वृञ् वरण इति धातोरुणादयो बहुलमिति नसिप्रत्यये इकारलोपे बहुलग्रहणादेव प्रत्ययस्य डिद्वद्भावे डित्यभस्यापि टेर्लोप इति धातुऋकारस्य लोपे गिरुशब्देन समासे नकारस्य णत्वे च गिर्वणशब्दनिष्पत्तौ वृतेति भाष्यपदेनैकार्थकत्वमिति भावः । प्रचेतसे ते इत्यनयोः सामानाधिकरण्येनान्वये ते इत्यस्य भगवत्परत्वप्राप्त्या तस्य सोमपानेनागन्तुकसुखप्राप्तेराप्तकामस्य का स्पृहेत्यादि-प्रमाणविरुद्धत्वेन वैयधिकरण्येनान्वय उक्त इत्यभिप्रेत्य भाष्ये प्रकृष्टचेता-स्त्वद्भृत्य इत्युक्तमित्यभिप्रेत्य योजनामाह **यः प्रकृष्टचेता** इत्यादिना ।

एकशतं षष्ठ्यर्थाः सम्भवन्तीति शाब्दिकैरुक्तेः प्रकृते स्वामिभृत्यभाव-लक्षणसम्बन्धार्थषष्ठीमादाय त इत्यस्य भृत्यपरत्वमुपपन्नमिति भावः । ॥ ४७ ॥

**मंत्रः – ४८**

(अ.१, सू.५, मं.८)

**त्वां स्तोमा॑ अवीवृधन्त्वामु॒क्था श॑तक्रतो ।**
**त्वां व॑र्धन्तु नो॒ गिरः॑ ॥**

**पदपाठः**

त्वाम् । स्तोमाः॑ । अ॒वी॒वृ॒ध॒न् । त्वाम् । उ॒क्था ।
श॒त॒क्र॒तो॒ इति॑ शतऽक्रतो । त्वाम् । व॒र्ध॒न्तु॒ ।
न॒ः । गिरः॑ ॥

**भाष्यम्**

**[1]व्यञ्जयन्त्यधिकं स्तोमाः साम्न्युक्थान्यृक्षु चैव हि ।**
**महागुणैर्व्यञ्जयन्तु गिरोऽस्माकमपि प्रभो ।**
**आकाशवृद्धिवद्वृद्धिर्विष्णोः स्यान्नैव चान्यथा ।**
**'न वर्धते नो कनीयानि'ति ह्येनं श्रुतिर्जगौ ।**
**महातात्पर्यरोधाच्च श्रुत्यर्थो नापरो भवेत् ।**
**यद्यन्यापेक्षया वृद्धिरीशत्वं[2] स्यात्कुतोऽस्य च ।**
**अक्षितोतिरिति ह्यस्मात् पूर्णाभिप्रायतोदिता ॥ ४८ ॥**

---

१. व्यञ्जयन्त्वधिकं – पा० । २. रीशित्वं – पा० ।

टीका

हे शतक्रतो ! प्रभो ! त्वां साम्नि सामविशेषाः स्तोमा अवीवृधन् व्यञ्जयन्ति स्म । एवमृक्षूक्था । उक्थानि च त्वामेवावीवृधन् । हि यस्मादेवं तस्मान्नोऽस्माकमपि गिरस्त्वां वर्धन्तु वर्धयन्तु । महागुणैर्युक्तं त्वां व्यञ्जयन्तु । त्वामित्यस्य पुनरुक्तेरधिकमित्युक्तम् । णिज्लोपस्य तात्पर्यं स्वातन्त्र्यादिमहागुणैर्युक्तमिति ।

नन्वत्र वृद्धिशब्दस्य प्रसिद्ध एवार्थो युक्तः व्यक्तौ प्रयोगादर्शनादित्यत आह **आकाशेति** । कुड्याद्यपसरणादिनाऽऽकाशेऽभिव्यक्ते वृद्ध आकाश इति प्रयोगवद्विष्णावपि वृद्धिशब्दप्रयोगो न तूपचयार्थतया । आकाशे बाधकवशादुपचरितोऽङ्गीक्रियत इति चेत् समं प्रकृतेऽपीत्याह **न वर्धत इति** । जगौ वृद्धिक्षयरहितमिति शेषः । बाधकान्तरमाह **महातात्पर्येति** । विष्णोरीश्वरत्वे यत्सर्ववेदानां महातात्पर्यं तद्विरोधाच्च न वृद्धिः श्रुत्यर्थो भवेत् । कथं विरोध इत्यत आह **यदीति** । यदि विष्णोः स्तोमाद्यधीना वृद्धिः स्यात्तर्हीश्वरत्वं न स्यात् पराधीनश्चेश्वरश्चेति विप्रतिषेधात् । ततश्च यत्तत्र वेदानां महातात्पर्यं तद्विरुद्ध्येतेति । विष्णोर्वृद्ध्यङ्गीकृतावुत्तरवाक्यविरोधोऽपि स्यादित्याह **अक्षितोतिरिति** । अस्माद्वृद्ध्याद्यभावेन स्वातन्त्र्यादेव हि विष्णोरक्षितोतिरित्युदिता पूर्णाभिप्रायता युज्यते नान्यथेत्यर्थः ॥ ४८ ॥

टिप्पणी

ऋचि शतक्रतो इत्यस्य पूर्णज्ञानवत्वादिपरमसामर्थ्ययुक्तत्वरूपार्थकत्वस्फोरणाय[1] भाष्ये प्रभो इत्युक्तमित्यभिप्रेत्य योजनामाह हे शतक्रतो

१. अर्थप्रतिपादकत्वस्फोरणाय ।

**प्रभो इति**। ननु वृधु वर्धन इति धातोर्णिचि भूते लुङ् इति लुङन्ततया निष्पन्नस्यावीवृधन्नित्यस्य भूतार्थकत्वात् 'वर्तमाने लडि'ति वर्तमानार्थक-लडन्ततया निष्पन्नेन व्यंञ्जयन्तीति पदेन कथं व्याख्यानं भाष्ये क्रियत इत्यतः नात्र वर्तमानार्थको लट्, किन्तु 'लट् स्म' इति सूत्रे स्मशब्दयोगे भूतानद्यतनपरोक्षार्थे धातोर्लट्प्रत्ययो भवति। नृडेति स्म पुरीधीयते यजति स्म युधिष्ठिर इति वृत्त्यादावुक्तत्वेन प्रकृते स्मशब्दयोगे लडिति भावेन स्मशब्दाध्याहारेण भाष्ययोजनामाह **व्यञ्जयन्ति स्मेति**। भाष्ये स्मशब्दा-प्रयोगस्तु नित्यातिवृद्धस्य हरेः वर्धनप्रतिपादनं लडाद्यन्यतमेन येन केनचि-च्छब्देन कर्तव्यं भूताद्यर्थविशेषस्तु नारायणीय इति प्रदर्शनायेति ज्ञेयम्। उक्तं चोपनिषद्भाष्यादौ आसीदित्यादिप्रयोगस्तु भगवति सार्वकालिकत्वपर-तयेवेति।

**पुनरुक्तेति**। असकृदुक्तिरूपाभ्यासादित्यर्थः। महागुणैरिति भाष्यो-क्तस्य ऋचि व्याख्येयपदं न श्रूयत इत्यत आह **णिज्लोपस्येति**। वर्धन्त्वित्यत्र लुप्तणिच् प्रत्ययस्य तात्पर्यकथनपरमित्यर्थः। चोदयित्री-सूनृतानामित्यस्यामृचि स्वातन्त्र्याल्लुप्तयो भवेदिति भाष्य-व्याख्यावसरे टीकायां चेतन्तीशब्दः लुप्तः यः यस्य स लुप्तयो भवेत्। य इति णेरुप-लक्षणम् स्वातन्त्र्यस्नेहयोरन्तर्णीतणिजिति स्मरणादित्युक्तत्वात् प्रकृते स्वातन्त्र्यादिमहागुणैरित्युक्तमुपपन्नमिति भावः। लुप्तणिजर्थत्वज्ञापनायैव टीकायां ज्ञानानन्दादिमहागुणैरित्यनुक्त्वा स्वातन्त्र्यादिमहागुणैरित्युक्तमिति ज्ञेयम्।

**प्रसिद्ध एवेति**। उपचय एवार्थो युक्त इत्यर्थः। **न तूपचयार्थ-तयेति**। वृद्धिशब्दप्रयोग इति पूर्वेणान्वयः। **बाधकवशादिति**। 'आकाशव-

त्सर्वगतश्च नित्यः' इत्यादावाकाशे अविकारत्वस्य निर्णीतत्वादिति भावः। **उपचरित इति**। वृद्धिशब्दप्रयोग इत्यन्वेति। न वर्धत इतीति भाष्ये इति ह्येनमित्यत्र श्रुतहिशब्दः 'न कर्मणा वर्धत नो कनीयान्' इति श्रुतेः प्रसिद्धत्वद्योतको वा हेत्वर्थको वानुसन्धेय इति भावः। ननु 'न कर्मणा वर्धते नो कनीयान्' इति श्रुतौ कर्मनिमित्तवृद्धिप्रतिषेधात् वृद्धिमात्रमस्तीति ज्ञायते, अन्यथा विशेषणवैयर्थ्यात्। तथा च कर्मनिमित्तकवृद्धेरभावेऽपि स्वाभाविकोपचयरूपवृद्धेः सम्भवात् कथमाकाशदृष्टान्तेन वृद्ध्यभावापादनमिति चेत्, गीताभाष्ये एकादशाध्याये 'कालोऽस्मि लोकक्षयकृत्प्रवृद्ध' इति श्लोकस्थप्रवृद्धपदव्याख्यावसरे न कर्मणेति तु कर्मणापि न किमु स्वयमिति कैमुत्यार्थपरतया श्रुतेर्व्याख्यानं, तत्रत्यटीकायां न कर्मणेति विशेषनिषेधस्तु वृद्धिलक्षणविक्रियाकारणत्वेन सम्भावितत्वेन कर्मणापि यदा न वर्धते तदा स्वयं कर्मणा विना न वर्धत इति किमु वक्तव्यमिति वृद्धिलक्षणविक्रियामात्रनिषेधाय कैमुत्यप्रदर्शनार्थमिति कैमुत्यविवरणं कृतमिति ज्ञेयम्।

**ईश्वरत्वे इति**। सर्वोत्कृष्टे इत्यर्थः। यत्सर्ववेदानां महातात्पर्यमिति विष्णुतत्त्वनिर्णये देवदेवस्य विष्णोर्महातात्पर्यं नैव चान्यत्र सत्यमित्याद्यनेकप्रमाणान्युदाहृत्य मोक्षो हि सर्वपुरुषार्थोत्तम इत्युपपादनपूर्वकमतो विष्णोः गुणोत्कर्ष एव सर्वश्रुतिस्मृतीनां महातात्पर्यमित्युपसंहाराद् उपनिषद्भाष्यादावपि सर्वश्रुतिस्मृतीनां विष्णोः महातात्पर्यस्योपपादनाच्च तद्रीत्यात्रापि तात्पर्योपपादनप्रकारो द्रष्टव्य इति भावः। **पूर्णाभिप्रायेणेति**। वाञ्छितपूर्तिमत्वेत्यर्थः[1] 'आप्तकामस्य का स्पृह' इति श्रुतेः न प्रयोजनवत्वात् इति सूत्रभाष्यादावनेकश्रुतिस्मृतिरूपप्रमाणोदाहरणपूर्वकमाप्तकामत्वस्योपपादनाच्चेति भावः॥ ४८॥

---

१. वाञ्छिताखिलपूतिमतेत्यर्थः - क ।

मंत्रः — ४९
(अ.१, सू.५, मं.९)

**अक्षितोतिः सनेदिमं वाजमिन्द्रः सहस्रिणम् ।
यस्मिन्विश्वानि पौंस्या ॥**

पदपाठः

अक्षितऽऊतिः । सनेत् । इमम् । वाजम् । इन्द्रः ।
सहस्रिणम् । यस्मिन् । विश्वानि । पौंस्या ॥

भाष्यम्

**अनन्तफलदं वाजमस्मत्तो लभतां स च ।
ददातु वा पौरुषाणि शक्तयो यत्र चाखिलाः ।
अतश्चानन्तशक्तित्वान्न वृद्ध्याद्याः कथञ्चन ।
सर्वोपेतेत्येतमर्थमभिप्रेत्याह वेदराट् ॥ ४९ ॥**

टीका

यस्मिन्यत्रेन्द्रे विश्वानि पौंस्या पौरुषाण्यखिलाश्च शक्तयः सन्ति सोऽक्षितोतिः पूर्णाभिप्रायो वाञ्छितस्याखिलस्य पूर्तिमानिन्द्रः सहस्रिणं सहस्रशब्दोऽनन्तवाची तद्वन्तम् अनन्तफलदमिति यावत् । इमं वाजमन्नं हविः सनेत् अस्मत्तो लभताम् । अथवाऽऽत्मपूजार्थं वाजमस्माभिः सनेत् सनयेत् लम्भयेत् अस्मभ्यं ददात्वित्यर्थः । यस्मिन्विश्वानि पौंस्येत्यनेनापि वाक्येन पूर्वत्र वृद्ध्यङ्गीकारे विरोध इति सिंहावलोकितेनाह अतश्चेति । ब्रह्मसूत्रविरोधं च तत्राह सर्वेति । एतमर्थं सर्वशक्तित्वादीश्वरस्य वृद्ध्याद्यभावम् ॥ ४९ ॥

## टिप्पणी

षण संभक्ताविति धातोस्सनेदिति ऋचि रूपमित्यभिप्रेत्य भाष्यपदेन योजनामाह **सनेदस्मत्तो लभतामिति**। डुलभष् प्राप्ताविति धातोर्लभतामिति निष्पन्नत्वेन प्राप्तिभाजनयोरेकार्थत्वादिति भावः। षण सम्भक्ताविति धातोर्वा षण दान[1] इति धातोर्वान्तर्भावितण्यर्थस्य सनेदिति रूपमित्यभिप्रेत्य भाष्यं प्रवृत्तमिति पक्षान्तरमाह **अथवेति**। ओरदिति वक्यव्ये ओर्गुण गुणग्रहणेन संज्ञापूर्वकविधेरनित्यत्वज्ञापनाद् 'अत उपधायाः' इति वृद्धिर्न प्रवर्तत इति दुर्घटवृत्तावुक्तत्वाच्च प्रकृते टीकायां सनयेदिति णिचि परतः ह्रस्वोपधात्वेन निर्देश उपपन्न इति ज्ञेयम्। **सर्वेतीति**। 'सर्वोपेता च तद्दर्शनात्' इति ब्रह्मसूत्रस्यायमर्थः। चः समुच्चये। देवतेति श्रुतिबलाल्लभ्यते सर्वशब्दो लक्षणया सर्वविषयकसर्वकालिकशक्तिपरः। तथा च सर्वाभिस्तादृशशक्तिभिरुपेता चात्माख्यदेवता न केवलं सामान्यतः शक्तिमतीति चार्थः। तादृशशक्तिमत्वावेदक 'सर्वैर्युक्ता शक्तिभिर्देवता सा परेति यां प्राहुरजस्रशक्तिम्' इति श्रुतिवाक्यादित्यर्थः। आतमनीत्युपक्रमादुपेतेति वाच्ये उपेतेत्युक्तिः श्रुतिविशेषसूचनायेति। उक्तञ्च तत्र ब्रह्मसूत्रभाष्ये 'नित्यानन्दा नित्यरूपाजरा च या शश्वतात्मेति च यां वदन्ति' इति चतुर्वेदशिखायाम्। अतो न केवलं विचित्रशक्तिः किन्तु सर्वशक्तिरेवेति ॥ ४९ ॥

**मंत्रः – ५०**

(अ.१, सू.५, मं.१०)

**मानो मर्ता अभि द्रुहन्तनूनामिन्द्र गिर्वणः।**
**ईशानो यवया वधम् ॥**

---

१. षण लाभे।

**मंत्रः – ४९**

(अ.१, सू.५, मं.९)

**अक्षितोतिः सनेदिमं वाजमिन्द्रः सहस्रिणम् ।**
**यस्मिन्विश्वानि पौंस्या ॥**

**पदपाठः**

अक्षितऽऊतिः । सनेत् । इमम् । वाजम् । इन्द्रः ।
सहस्रिणम् । यस्मिन् । विश्वानि । पौंस्या ॥

**भाष्यम्**

**अनन्तफलदं वाजमस्मत्तो लभतां स च ।**
**ददातु वा पौरुषाणि शक्तयो यत्र चाखिलाः ।**
**अतश्चानन्तशक्तित्वान्न वृद्ध्याद्याः कथञ्चन ।**
**सर्वोपेतेत्येतमर्थमभिप्रेत्याह वेदराट् ॥ ४९ ॥**

**टीका**

यस्मिन्यत्रेन्द्रे विश्वानि पौंस्या पौरुषाण्यखिलाश्च शक्तयः सन्ति सोऽक्षितोतिः पूर्णाभिप्रायो वाञ्छितस्याखिलस्य पूर्तिमानिन्द्रः सहस्रिणं सहस्रशब्दोऽनन्तवाची तद्वन्तम् अनन्तफलदमिति यावत् । इमं वाजमन्नं हविः सनेत् अस्मत्तो लभताम् । अथवाऽऽत्मपूजार्थं वाजमस्माभिः सनेत् सनयेत् लम्भयेत् अस्मभ्यं ददात्वित्यर्थः । यस्मिन्विश्वानि पौंस्येत्यनेनापि वाक्येन पूर्वत्र वृद्ध्यङ्गीकारे विरोध इति सिंहावलोकितेनाह अतश्चेति । ब्रह्मसूत्रविरोधं च तत्राह सर्वेति । एतमर्थं सर्वशक्तित्वादीश्वरस्य वृद्ध्याद्यभावम् ॥ ४९ ॥

## टिप्पणी

षण संभक्ताविति धातोस्सनेदिति ऋचि रूपमित्यभिप्रेत्य भाष्यपदेन योजनामाह **सनेदस्मत्तो लभतामिति**। डुलभष् प्राप्ताविति धातोर्लभतामिति निष्पन्नत्वेन प्राप्तिभाजनयोरेकार्थत्वादिति भावः। षण सम्भक्ताविति धातोर्वा षण दान[1] इति धातोर्वान्तर्भावितण्यर्थस्य सनेदिति रूपमित्यभिप्रेत्य भाष्यं प्रवृत्तमिति पक्षान्तरमाह **अथवेति**। ओरदिति वक्यव्ये ओर्गुण गुणग्रहणेन संज्ञापूर्वकविधेरनित्यत्वज्ञापनाद् 'अत उपधायाः' इति वृद्धिर्न प्रवर्तत इति दुर्घटवृत्तावुक्तत्वाच्च प्रकृते टीकायां सनयेदिति णिचि परतः ह्रस्वोपधात्वेन निर्देश उपपन्न इति ज्ञेयम्। **सर्वेतीति**। 'सर्वोपेता च तद्दर्शनात्' इति ब्रह्मसूत्रस्यायमर्थः। चः समुच्चये। देवतेति श्रुतिबलाल्लभ्यते सर्वशब्दो लक्षणया सर्वविषयकसर्वकालिकशक्तिपरः। तथा च सर्वाभिस्तादृश-शक्तिभिरुपेता चात्माख्यदेवता न केवलं सामान्यतः शक्तिमतीति चार्थः। तादृशशक्तिमत्वावेदक 'सर्वैर्युक्ता शक्तिभिर्देवता सा परेति यां प्राहु-रजस्रशक्तिम्' इति श्रुतिवाक्यादित्यर्थः। आतमनीत्युपक्रमादुपेतेति वाच्ये उपेतेत्युक्तिः श्रुतिविशेषसूचनायेति। उक्तञ्च तत्र ब्रह्मसूत्रभाष्ये 'नित्या-नन्दा नित्यरूपाजरा च या शश्वतात्मेति च यां वदन्ति' इति चतुर्वेदशिखा-याम्। अतो न केवलं विचित्रशक्तिः किन्तु सर्वशक्तिरेवेति ॥ ४९ ॥

**मंत्रः – ५०**

(अ.१, सू.५, मं.१०)

**मानो॒ मर्ता॑ अ॒भि द्रु॑हन्त॒नूना॑मिन्द्र गिर्वणः।**
**ईशा॑नो यवया व॒धम् ॥**

---

१. षण लाभे।

पदपाठः

**मा । नः । मर्ताः । अभि । द्रुहन् । तनूनाम् ।**
**इन्द्र । गिर्वणः । ईशानः । यवय । वधम् ॥**

भाष्यम्

**मा मर्ता नस्तनूनां तु द्रोग्धारः स्युः कथञ्चन ।**
**ईशोऽस्यपाकुरु वधं तेन नो मुक्तिदानतः ।**
**मानुषेभ्यस्तनूनां च नैव नः स्युर्विपत्तयः ।**
**कालेन दैवतः [1]प्राप्तः स्याददेहत्वतो वधः ॥ ५० ॥**

टीका

हे गिर्वणः ! इन्द्र ! मर्ताः मर्त्याः नोऽस्माकं तनूनां शरीरेभ्यो माभिद्रुहन् द्रोग्धारः कथंचन मा स्युः । कथम् । येन कारणेन त्वमीशान ईशोऽसि तेन नोऽस्माकं वधं यवय अपगमय अपाकुरु । संसारे वधाभावोऽसम्भवीत्यतो मुक्तिदानत इति शेषमाह । ऋचं प्रकारान्तरेण व्याख्याति **मानुषेभ्य** इति । मर्तानस्तनूनां माभिद्रुहन् अस्मत्तनूनां मानुषेभ्यो विपत्तयो नैव स्युः । वरमीशानस्त्वं वधं यवय प्रापय । कालेन दैवतस्त्वत्तः प्राप्तोऽदेहत्वतो देहाभावरूपेण वधः स्यात् । दुर्जनैः क्रियमाणादुपद्रवाद्देवाधीनं मरणमेव वरम् । अतस्तत्परिहारं कुर्वित्याशयः ॥ ५० ॥

टिप्पणी

हे गिर्वण इति । गीर्भिर्वननीयेति पूर्ववत् व्याख्यानं द्रष्टव्यमिति भावः । 'कृधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः' इति सूत्रे क्रोधाद्यर्थानां धातूनां

---

१. प्राप्ते – पा० ।

प्रयोगे यं प्रति कोपस्तत्कारकं सम्प्रदानसंज्ञं भवतीति सम्प्रदानसंज्ञाविधानेन सम्प्रदाने चतुर्थीति चतुर्थीप्राप्तेः ऋचि तनूनामिति व्यत्ययेन चतुर्थ्यर्थे षष्ठीत्यभिप्रेत्य योजनामाह **तनूनां शरीरेभ्य इति** । यद्यपि 'कृधद्रुहोरुपसृष्टयोः कर्म' इति सूत्रे कृधद्रुहोरपसर्गसम्बन्धयोः प्रयोगे यं प्रति कोपः तत्कारकं कर्मसंज्ञं भवतीति कर्मसंज्ञाविधानेन कर्मणि द्वितीयेति द्वितीयाप्रसक्तेः टीकायां शरीराणीति निर्देशः कर्तव्यः । तथापि प्रकृते अभिद्रुहन्नित्यत्राभीत्युपसर्गस्य धात्वर्थविशेषकत्वाभावेन धात्वर्थसम्बन्धित्वाभावात् कथञ्चनेति भाष्योक्तरीत्या अतिकथञ्चन केनापि प्रकारेणेति धात्वर्थद्रोहसाधने प्रकारसमर्पकत्वेन पृथगन्वयात् धातोरुपसृष्टत्वाभावेन कर्मसंज्ञाप्राप्त्यभावात् चतुर्थीनिर्देश एव टीकायां कृत इति ज्ञेयम् ।

यु मिश्रणामिश्रणयोरिति धातोरुभयार्थतया पाठादमिश्रणरूपापगमनपरतया योजनामाह **यवय अपगमेति** । युधातोर्णिचि छान्दसत्वेन वा संज्ञापूर्वकविधेरनित्यत्वेन वा वृध्यभावे गुणे लोण्मध्यमपुरुषैकवचने यवयेति रूपमिति ज्ञेयम् । यवयेत्यस्य मिश्रणरूपप्रापणार्थपरतयापि व्याख्यातुमवतारयति **ऋचं प्रकारान्तरेणेति** ॥ ५० ॥

## सूक्तम् – ६

दशार्चम् । मधुच्छन्दाः ।

१, २, ४ मरुतः; ३, ५ मरुत इन्द्रश्च; ६-१० इन्द्रः । गायत्री ।

### मंत्रः – ५१

(अ.१, सू.६, मं.१)

**यु॒ञ्जन्ति॑ ब्र॒ध्नम॑रु॒षं चर॑न्तं॒ परि॑ त॒स्थुषः॑ ।**

**रोच॑न्ते रोच॒ना दि॒वि ॥**

पदपाठः

युञ्जन्ति । ब्रध्नम् । अरुषम् । चरन्तम् । परि ।
तस्थुषः । रोचन्ते । रोचना । दिवि ॥

भाष्यम्

**पौंस्यानि वासुदेवस्य ब्रध्नं वृद्धं दिवाकरम् ।**
**अरुणं चरन्तं परितो गिरीन्युञ्जन्ति सर्वदा ।**
**तैरेवान्यानि चन्द्रादिरोचनानि त्रिविष्टपे ।**
**रोचयन्ति ॥ ५१ ॥**

टीका

दशार्चमेतत्सूक्तम् । तत्र प्रथमा द्वितीया चतुर्थी च मारुत्यः । तृतीया पञ्चमी चैन्द्रमारुत्यौ । शेषाश्चैन्द्य इति विभागः ।

तत्रेश्वरविषये तावद्व्याख्याति **पौंस्यानीति** । यस्मिन्विश्वानि पौंस्येति प्रकृतानि वासुदेवस्य पौंस्यानि अरुषमरुणं वर्णतः । तस्थुषः स्थावरान् गिरीन् परितश्चरन्तं ब्रध्नं दिवाकरम् । कथम् । वृद्धं वृद्धत्वेन ब्रध्नशब्दवाच्यम् । वृधुवृद्धावित्यस्यैतद्रूपम् । अत एव महन्नामसु पाठः । सर्वदा युञ्जन्ति नियुञ्जते प्रवर्तयन्ति । किं चैतैरेव पौंस्यैर्निमित्तैरन्यानि दिवाकराच्चन्द्रादीनि रोचनानि ज्योतींषि दिवि त्रिविष्टपे रोचन्ते दीप्यन्ते रोचयन्ति चान्यान् ॥ ५१ ॥

टिप्पणी

मारुत्य इति । मरुद्देवता प्रथमादिऋच इत्यर्थः । अत्र मरुच्छब्देन ब्रह्मादिदेवता ग्राह्याः । वक्ष्यति च टीकायामुत्तरस्यामृचि मरुच्छब्द सर्वदेवतावचनः प्रतिपत्तव्य इति ।

नन्वनुक्रमणिकायां 'युञ्जन्ति, आदहेत्येताः षण्मारुत्यः, वीळुचित्, इन्द्रेणेत्यैन्द्रौ च' इति । अनाख्याते त्विन्द्रो देवतेति वाक्येन अदहेत्यादि षण्णां ऋचां मरुद्देवताकत्वं वीळुचिदिन्द्रेणेत्यनयोः इन्द्रमरुद्देवताकत्वं अनाख्याते त्वित्यनेन आद्य ऋचस्य दशम्याश्च ऋचः इन्द्रदेवताकत्वं उक्तम्, तत्कथमाद्यादीनामपि ऋचां मरुद्देवताकत्वमुच्यते इति चेन्न । अतपरिज्मन्नागहि इत्यस्यामृचि भाष्ये युञ्जन्तीत्यत्र बाहुल्यादित्यादिना अनुक्रमणिकोक्तव्यवस्थाया दूष्यमाणत्वात् तत्रत्यभाष्यानुसारेणैव अत्र टीकायां इयं देवताअवस्था दर्शितेति ज्ञेयम् ।

**ईश्वरविषये तावदिति** । अस्या ऋच उत्तरस्यामृचि भाष्ये सूर्यादि-स्थापकत्वं चेति ब्रह्मादिदेवतापरत्वेनापि व्याख्यानात्तदपेक्षया तावच्छब्द इति ज्ञेयम् । प्रसिद्धारुणसारथिव्यावृत्त्यर्थमाह **वर्णत इति** । हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम्', 'हिरण्मयेन सविता रथेन' इत्यादि प्रमाणे-ष्वादित्यमण्डलस्य हिरण्मयशब्दितारुणवर्णत्वस्य प्रसिद्धत्वेन तद्गतसूर्य-स्याप्यरुणवर्णत्वात् । तथा ध्येयः सदेत्यादिषु प्रमाणेषु सूर्यस्थस्य हरेः हिरण्मयरूपतया प्रसिद्धत्वेन तत्सम्बन्धात् प्रसिद्धसूर्यस्याप्यरुणवर्णत्वस्य 'यदादित्यगतं तेजः' इत्यादिप्रमाणेषु प्रसिद्धत्वाद्वर्णत अरुणत्वं ज्ञेयमिति भावः । **कथमिति** । ब्रह्मशब्दस्य दिनकरशब्दितसूर्यवाचकत्वं केन प्रवृत्तिनिमित्तेनेत्यर्थः । वृद्धत्वं कथं ब्रह्मशब्दप्रवृत्तिनिमित्तमित्यत आह **वृधु वृद्धावित्यस्येति** । अस्माद्धातोरौणादिके न प्रत्यये धातोरमागमे यणादेशो वकारस्य बकारे ब्रह्मेति रूपसिद्धिरिति भावः ।

**अत एवेति** । ब्रह्मशब्दस्य वृद्धत्वनिमित्तकत्वादेव महद्ब्रह्म इत्यादिना वेदनिघण्टौ महत्वशब्दितवृद्धत्वप्रवृत्तिनिमित्तकमहच्छब्दपर्यायतया महन्नामसु

पाठ इत्यर्थः। ऋचि युञ्जन्तीति लट् सार्वकालिको न तु वर्तमानमात्रार्थः इति सूचनाय भाष्ये सदेत्युक्तमित्यभिप्रेत्य सार्वकालिकसम्बन्धलब्धार्थं दर्शयति **नियुञ्जते प्रवर्तयन्तीति**। ''प्रोपाभ्यां युजेरयज्ञपात्रेषु' इति सूत्रे 'स्वराद्यन्तोपसृष्टेति वक्तव्यम्' इति वार्तिकेन नियुङ्क्ते उद्युङ्क्ते इत्यात्मनेपदविधानात् प्रकृते टीकायां नियुञ्जत इत्यात्मनेपदानुवादः कृत इति ज्ञेयम्।

**दिवाकरादिति**। अन्यानीति पूर्वेणान्वयः। 'अन्यारादितरार्त' इत्यन्यशब्दयोगे पञ्चमीविधानादिति भावः। ऋचि रोचन्त इत्यस्य भाष्ये रोचयन्तीत्यन्तर्भावितण्यर्थपरतया व्याख्यानम्, अणिजर्थपरत्वव्याख्यानस्याप्युपलक्षणमित्यभिप्रेत्य तत्समुच्चायकतया रोचयन्ती चेति चशब्दाध्याहारेणार्थद्वयपरतया योजनामाह **रोचन्त इत्यादिना**।

दिपी दीप्ताविति धातो श्यन्विकरणात्मनेपदित्वेन कर्त्रर्थे लिडात्मनेपदबहुवचने श्यन्विकरणे दीप्यन्त इति रूपसिद्धेष्टीकायामुक्तस्य तस्य पदस्य कर्त्रर्थकत्वमिति ज्ञेयम्। अस्यार्थस्य स्फुटप्रतिभासत्वात्कण्ठतो व्याख्यानं भाष्ये न कृतमिति ज्ञेयमिति भावः॥ ५१ ॥

**मंत्रः – ५२**

(अ.१, सू.६, मं.२)

**युञ्जन्त्यस्य काम्या हरी विपक्षसा रथे।**
**शोणा धृष्णू नृवाहसा ॥**

**पदपाठः**

**युञ्जन्ति। अस्य। काम्या। हरी इति। विऽपक्षसा।**
**रथे। शोणा। धृष्णू इति। नृऽवाहसा॥**

भाष्यम्

**हरी चास्य मनोबुद्धी स्वशक्तयः ।**
**युञ्जन्त्यधिगुणत्वेन काम्यावश्वावथापि वा ।**
**विशिष्टपक्षसंयुक्ताविव क्षिप्रतरौ सदा ।**
**रथे देहेऽपि वा देवाः स्वमनो बुद्धिमेव च ।**
**अस्य देहे प्रयुञ्जन्ति सूर्यादीन् स्थापयन्ति च ।**
**सूर्यादिस्थापकत्वं च ब्रह्मादीनां भवेत्सदा ।**
**शोणौ च शमणौ प्रोक्तौ सुखप्राप्तौ यतः सदा ।**
**श्यामौ मूर्धनि शोणौ च शक्राश्वावग्रगौ स्मृतौ ।**
**धृष्टौ नृन्प्रति तं वे(चे)शं वहन्तौ तावुभावपि ॥ ५२ ॥**

टीका

प्रकृता वासुदेवस्य स्वशक्तयः स्वरूपभूताः शक्तयोऽस्य हरी एतदधीने मनोबुद्धी रथे भक्तानां देहे युञ्जन्ति योजयन्ति । तान्मनस्विनो बुद्धिमतश्च कुर्वन्ति । एतामृचं मरुद्विषये व्याख्याति **अपि वेति** । देवा मरुतोऽपि वा अस्येन्द्रस्य हरी अश्वौ तस्यैव रथे युञ्जन्ति योजयन्ति । अथवा देवाः स्वीयं मनोबुद्धिं चास्य जीवजातस्य देहे युञ्जन्ति तत्प्रेरणाय प्रयुञ्जते । पूर्वामप्यृचं मरुद्विषयतया तात्पर्यतो व्याचष्टे **सूर्यादीनिति** । वासुदेवस्य पौंस्यानीति स्थाने देवा इति वक्तव्यम् । **समानमन्यत्** । सूर्यादिस्थापकत्वं किं सर्वदेवतासु प्रतिपत्तव्यं नेत्याह **सूर्यादीति** । अन्येषु लक्षणया प्रयोग इति भावः । ब्रह्मादीनामित्युक्त्या मरुच्छब्दः सर्वदेवतावचनः प्रतिपत्तव्यः । द्वितीयस्यामृचि काम्यादिविशेषणानि मनोबुद्ध्योरश्वयोश्च योजयति **अधिगुणत्वेनेत्यादिना** । अधिगुणत्वं

काम्यत्वे हेतुर्न तु शब्दार्थः। विशिष्टौ पक्षौ ययोस्तौ विपक्षौ। असम्भवात् गौण्या वृत्त्या योजयति **विशिष्टेति**। पक्षिणाविति शेषः। शमणावित्यस्यैव विवरणं सुखप्राप्तौ यतः सदेति। अणतेः पचाद्यच्। शं सुखमणौ प्राप्तौ शमणौ। तावेव शोणौ। शंशब्दसमानार्थः शशब्दः अकारस्योकारः। तस्यार्थः सदेति।

नन्वस्तु मनोबुद्ध्योरिदं व्याख्यानमश्वयोस्तु शोणत्वं प्रसिद्धमेव किं न स्यादित्यत आह **श्यामाविति**। यतः शक्राश्वौ श्यामौ प्रमितौ अतोऽसम्भवाद्योगस्तत्राप्यनुसर्तव्य एव। प्रकारान्तरेण शोणशब्दमश्वयोर्व्याचष्टे **मूर्धनीति**। उत्तमाङ्गसम्बन्धिना गुणेन लक्षणया शोणावुच्येते। नन्विन्द्रस्य सहस्राश्वत्वात् द्वयोरेवाश्वयोर्ग्रहणं कस्मादित्यत आह **अग्रगाविति**। प्राधान्यात् द्वयोरेव ग्रहणमिति भावः। धृष्णू धृष्टौ वियातौ। नृन्प्रतीत्यनेन नृवाहसावित्येतत् नृन्प्रति वहन्ताविति नरन्तमीशमिन्द्रं विष्णुं वा वहन्ताविति च द्वेधा व्याख्यातम्। तावुभावपीति मनोबुद्धी अश्वौ चेत्यर्थः। काम्यावित्यादौ सर्वत्रेदं सम्बध्यते॥ ५२॥

## टिप्पणी

ऋचि युञ्जन्त्यस्येत्यत्रास्येति षष्ठ्यन्तस्य पौंस्यानि वासुदेवस्येति प्रकृतवासुदेवपरतया हरीत्यनेनान्वयः इति प्रदर्शनाय भाष्ये हरी चास्येत्यनूदितमित्यभिप्रेत्य योजनामाह **अस्य हरी एतदधीनेति**। भगवदधीनेत्यर्थः। 'प्रेरकः सर्वदेहानां प्राणधी चोदिता च सः', 'निषुसीद गणपते गणेषु त्वामाहुः' इत्यादिप्रमाणेषु बुध्यादीनां भगवदधीनताया प्रसिद्धत्वादिति भावः। **तानिति**। भक्तानित्यर्थः। **मनस्विनो बुद्धिमतश्चेति**। जिज्ञासाधिकरणे 'प्राणबुद्धिमनःखात्मदेहापत्यधनादयः' इत्यनुव्याख्यानव्याख्यावसरे

सुधायां मनोबुद्धिश्चान्तःकरणवृत्तीति मनोबुद्धिशब्दार्थयोरन्तःकरणवृत्ति-विशेषपरतया व्याख्यानात् तत्रोक्तरीत्या प्रकृतेऽपि मनोबुद्धिशब्दार्थौ ज्ञेयौ । तथा च मनस्शब्दात् मत्वर्थे 'अस्मायामेधास्रजो विनिः' इति विन्प्रत्यये बुद्धिशब्दात् मतुप्प्रत्यये द्वितीयाबहुवचने मनस्विनी बुद्धिमतश्चेति रूपमिति ज्ञेयम् ।

भाष्ये देहेऽपि वेत्यत्रापि वेति निपातद्वयसमुदायस्य समुच्चयार्थकतया पक्षभेदसूचकत्वेन तस्य देवपदेनान्वय इत्यभिप्रेत्य योजनामाह **देवा मरुतोऽपि वेति** । अनुक्रमणिकोक्तमरुच्छब्दस्य सर्वदेवतापरत्वमङ्गीकार्यमिति प्रदर्शनाय भाष्ये देहेऽपि वा देवा इति देवपदं प्रयुक्तमित्यभिप्रेत्य देवाः मरुतोऽपीत्यनूदितमिति ज्ञेयम् । अस्य देह इत्यत्रास्येत्यस्य बुद्धिमेव चेत्येवकारेणान्वय इत्यभिप्रेत्य योजनामाह **तस्यैवेति** । इन्द्रस्यैवेत्यर्थः । एवकारस्य भिन्नक्रमत्वादेव मनोबुद्धि चेत्येव वक्ष्यति । अश्वयोः रथे योजनमनायासेनेति प्रदर्शनाय युञ्जन्तीत्यस्यान्तर्भावितण्यर्थभावपरतया[1] योजनामाह **योजयन्तीति** । स्वीयमिति स्वकीयमित्यर्थः । अत्र स्वशब्दः सर्वदेवतावचन इति ज्ञेयम् । **बुद्धिं चेति** । स्वीयमित्यस्य स्वीयामिति विपरिणामेन वा शेषत्वेन वा बुद्धिमित्यनेनान्वय इति ज्ञेयम् । अस्येत्यस्यावृत्तिमभिप्रेत्य योजनामाह **अस्य जीवजातस्येति** । **समानमन्यदिति** । ब्रध्नशब्दादियोजनमित्यर्थः । **अन्येष्विति** । सूर्याद्यपेक्षयापकृष्टदेवेषु युञ्जन्तीतिकर्त्र्थकलडन्तस्य लक्षणया प्रयोग इति भावः ।

यद्वा युञ्जन्तीत्युक्त कर्तृप्रतिपादकतया प्राप्तस्य मरुच्छब्दस्य ब्रह्माद्युत्तमदेवेषु मरुतः स्थापका इति स्थापकत्वांशे शक्तिः, अन्यदेवेषु तु

---

१. युञ्जन्तीत्यत्रान्तर्भावितण्यर्थतया - क ।

छत्रिणो गच्छन्तीत्यादौ छत्रिशब्दादिरिव लक्षणया प्रयोग इत्यर्थः । **मरुच्छब्द इति** । अनुक्रमणिकोक्त मरुच्छब्द इत्यर्थः । तस्य सर्वदेवतापरतायाः युञ्जन्तीत्यत्र बाहुल्यादित्यादिना समर्थयिष्यमाणत्वादिति भावः । **काम्यादीति** । भावप्रधानेन काम्यत्वादिविशेषणानीत्यर्थः । अत एव वक्ष्यति **काम्यत्वे हेतुरिति** । अथवा काम्यादिशब्दवाच्यानि विशेषणानीत्यर्थः ।

**अश्वयोश्चेति** । तथा च भाष्ये अथापि वेति निपातसमुदायः चशब्दार्थतया मनोबुध्यश्वौ चेति समुच्चायक इति भावः । अत एव च वक्ष्यति **तावुभावपीति** । **अधिगुणत्वमिति** । इतरवस्त्वपेक्षया अधि अधिकाः गुणाः ययोस्तौ अधिगुणौ तयोर्भावः अधिगुणत्वं तेनाधिगुणत्वेनेति भाष्यार्थो ज्ञेय इति भावः । **न तु शब्दार्थ इति** । कमु कान्ताविति धातोर्निष्पन्नस्य काम्यशब्दस्य कमनीयार्थतया प्रसिद्धत्वेन लोके सौन्दर्यादिगुणोपपन्नस्यैव काम्यत्वदर्शनेन प्रकृतेऽपि काम्यत्वेऽधिगुणत्वं हेतुतया प्राप्तं न तु काम्यशब्दार्थ इति भावः ।

**असम्भवादिति** । पक्षिणामेव पक्षयुक्तत्वात् अश्वयोर्मनोबुध्योश्च पक्षाभावात्[१] क्षिप्रगामित्वगुणयोगेन गौण्या वृत्त्या विपक्षसावित्युक्ताविति भावः । भाष्ये विशिष्टपक्षसंयुक्तावित्यत्र विशेष्याकाङ्क्षां पूरयति **पक्षिणाविति** शेष इति । **शमणतीत्यस्यैव विवरणमिति** । 'स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुरि'ति भाष्यलक्षणत्वोक्तेरिति भावः । **सुखप्राप्ताविति** । अत्र प्राप्तशब्दः गत्यर्थाकर्मकेत्यादिना कर्तरि निष्पन्न इति ज्ञेयम् । तथा च सुखप्राप्ताविति द्वितीयाश्रितेति सूत्रेण द्वितीयासमासो ज्ञेयः । **अणतेरिति** । अन गताविति धातोः कर्त्रर्थे 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः' इति सूत्रेण

---

१. पक्षिवत् क्षिप्रगामित्वगुणयोगात् - क ।

अच्प्रत्ययान्ततया निष्पन्नस्याणशब्दस्य शशब्दसमानार्थकशशब्देन श्रितादिषु 'गमिगम्यादीनामुपसङ्ख्यानम्' इति द्वितीयासमासे 'पृषोदरादीनि यथोपदिष्टम्' इति धात्वकारस्योकारे तस्य शशब्दाकारेण 'आद्गुण' इति गुणे द्वितीया द्विवचने शोणावितिरूपसिद्धिरिति भावः ।

'ऋचि सुपां सुलुक्' इत्यादिनाकारादेश इति ज्ञेयम् । **अकारस्योकार इति** । धात्वकारस्योकार इत्यर्थः । **तस्यार्थ इति** । उकारस्यार्थ इत्यर्थः । उकारस्थानिनोऽप्योकारस्य उकारग्रहणेन ग्रहणमिति ज्ञेयम् । तथा चाधिक्येऽधिकमित्युक्तेः वर्णविपर्ययलक्षणाधिक्येन सदेत्यर्थलाभ इति भावः । **इदं व्याख्यानमिति** । शोणशब्दस्य योगव्युत्पत्त्याश्रयणेन व्याख्यानमित्यर्थः । **शोणत्वमिति** । शोणवर्णत्वमित्यर्थः । तस्यैव शोणशब्दप्रवृत्तिनिमित्तीकृत्य शोणशब्दस्य रूढिवृत्तिः किं न स्यादिति शङ्काभिप्रायो ध्येयः । **वियाताविति** । वैयात्यापरनामकधाष्टर्ययुक्तावित्यर्थः । 'धृष्टेर्धृष्णुर्वियातश्च' इत्यमरोक्तेरिति ज्ञेयम् । **नृन् प्रतीत्यनेनेति** । नृन् प्रति सन्तं वशं वहन्तावित्यत्र नृन् प्रति वहन्ताविति तमीशं वा वहन्ताविति वाक्यभेदाश्रयणेन नृवाहसावित्येतत् द्वेधा व्याख्यानं भवतीत्यर्थः ।

इन्द्रं विष्णुं वेति वैकल्पिकपक्षस्यैकात्वाश्रयणेन पूर्वोक्तपक्षेण सह द्वेधेत्युक्तमिति ज्ञेयम् । द्वितीयाध्याये अभिनो देवीखसामहः शर्मणा नृपत्नीरित्यस्यामृचि नरो देवाः प्रधानपुरुषत्वादिति भाष्यटीकयोर्वक्ष्यमाणत्वात् प्रकृते नृन् प्रतीत्यस्य देवान् प्रतीति वा भक्तजनान् प्रतीति वा तत्कृतपूजास्वीकाराय वहन्तावित्यर्थः । यदा नृन् प्रति शत्रून् प्रति तान् संहर्तुं वहन्तावित्यर्थो ज्ञेयः । अत्र पक्षे इन्द्रस्य विष्णोश्च योग्यतया कर्मकारकत्वेन वहन्तावित्यनेन अन्वय इति ज्ञेयम् ।

**नरमिति** । पुरुषश्रेष्ठमित्यर्थः । 'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः' इत्युक्तेरिति ज्ञेयम् । यद्वा नरमविनाशिनमित्यर्थः । द्वितीयाध्याये कदा क्षत्रश्रियं नरम् इत्यस्यामृचि अविनाशिनं रक्षणायेति भाष्ये वक्ष्यमाणत्वादिति ज्ञेयम् । अत्र पक्षे नृ वाहसावित्यत्र नृशब्दार्थतयैव इन्द्रस्य विष्णोश्च कर्मकारकत्वेनान्वय इति ज्ञेयम् । पक्षद्वयेऽपि नृशब्दस्य वाहसशब्देन 'श्रितादिषु गमिगम्यादीनामुपसंख्यानम्' इति द्वितीयासमासो ज्ञेयः । काम्यावित्यादाविति ऋचि काम्यौ विपक्षसौ शोणौ धृष्णु नृह्वासाविति यानि पञ्चविशेषणानि हरिशब्दार्थयोः मनोबुध्योरश्वयोश्च वर्तन्ते तद्विवरणपरैः काम्यौ विशिष्टपक्षसंयुक्तावित्यादिभाष्यगतैस्सर्वैः विशेषणपदैः मनोबुद्धी अश्वौ चेति मनोबुद्ध्यादिरूपवर्गद्वयात्मकविशेष्यसमर्पकतया तावुभावपीति पदद्वयं सम्बध्यत इत्यर्थः ॥ ५२ ॥

**मंत्रः – ५३**

(अ.१, सू.६, मं.३)

**केतुं कृण्वन्नकेतवे पेशो मर्या अपेशसे ।**
**समुषद्भिरजायथाः ॥**

**पदपाठः**

केतुम् । कृण्वन् । अकेतवे । पेशः । मर्याः ।
अपेशसे । सम् । उषत्ऽभिः । अजायथाः ॥

**भाष्यम्**

**अज्ञाय कुर्वन्सज्ज्ञानं हेमाहेमाय चेश्वरः ।**

**उषद्भिः सम्प्रकाशद्भिः शक्तिभिर्व्यक्ततामगाः ।**
**मर्या मरणवन्तोऽपि देवा एवम् ॥ ५३ ॥**

**टीका**

हे इन्द्र ! ईश्वर मर्याः बहुवचनमेकवचनार्थो मारकः त्वमकेतवे अज्ञाय अज्ञस्य केतुं सज्ज्ञानं कृण्वन् कुर्वन्नपेशसे अहेमाय हेमवर्जितस्य पेशो हेम च कुर्वन्नुषद्भिः । वशाकान्तावित्यस्येदं रूपम् । शकारषकार आधिक्यार्थः । सम्प्रकाशद्भिः सम्प्रकाशमानैः पौंस्यैः शक्तिभिः । सह समजायथाः यज्ञे व्यक्ततामगाः । न केवलं त्वं किन्तु मर्या मरणवन्तो देवाः अप्येवम् । अकेतवे केतुमपेशसे पेशश्च कुर्वन्तः स्वसामर्थ्यैः सह समजायन्तेति ॥ ५३ ॥

**टिप्पणी**

वश कान्तावित्यस्येति । वश कान्ताविति धातोर्लटः शत्रादेशे ग्रहिज्येत्यादिना सम्प्रसारणादि कार्ये वक्ष्यमाणरीत्या षत्वे उषद्भिरिति रूपमिति भावः । ननु वशाकान्ताविति धातोर्वष्टीत्यादौ झलि परतः पदान्ते च व्रश्चेत्यादिना सूत्रेण शकारस्य षत्वविधानात् प्रकृते झलिपरत्वादिनिमित्ताभावेन षत्वप्राप्तेरभावात् ऋचि उशद्भिरिति वाच्ये कथमुषद्भिरिति निर्देश इत्यत आह शकारस्येति । आधिक्येऽधिकमित्युक्तेः षकाररूपवर्णव्यत्यासेन सम्यक्प्रकाशमानरूपाधिक्यार्थलाभादिति भावः । अत एव सम्प्रकाशद्भिरिति सं प्रेत्युपसर्गद्वयाभ्यां षकारार्थविवरणं भाष्ये कृतमिति ज्ञेयम् । कान्तिशब्दस्येच्छादीप्तिरूपोभयार्थतया प्रसिद्धत्वेन वष्टीत्यादाविच्छार्थकत्वेऽपि प्रकृते दीप्त्यर्थकत्वं ग्राह्यमिति प्रदर्शनाय संप्रकाश-

द्विरिति काशृ दीप्ताविति धातुना व्याख्यानं भाष्ये कृतमिति ज्ञेयम् । अत्र पदानामपेक्षितप्रक्रियाविशेषः ऋगर्थमञ्जर्यां सम्यगुपपादितो द्रष्टव्यः । ॥ ५३ ॥

**मंत्रः – ५४**

(अ.१, सू.६, मं.४)

**आदह स्वधामनु पुनर्गर्भत्वमेरिरे ।**
**दधाना नाम यज्ञियम् ॥**

**पदपाठः**

आत् । अह । स्वधाम् । अनु । पुनः । गर्भऽत्वम् ।
आऽईरिरे । दधानाः । नाम । यज्ञियम् ॥

**भाष्यम्**

**हरेर्वशात् ।**
**तदैव सुखमन्वेव पुनर्गूढत्वमापिरे ।**
**स्वेच्छयैव परेशस्य शक्तयो देवता अपि ।**
**यज्ञे वाच्यं दधानाश्च नाम ॥ ५४ ॥**

**टीका**

यज्ञियं यज्ञे भवं यज्ञे वाच्यं नाम दधानाः परेशस्य शक्तयः । आत् अकारवाच्याद्विष्णोर्निमित्तात् । स्वेच्छयेति यावत् । अह तदैव यज्ञे व्यक्तत्वादनन्तरमेव स्वधामनु सुखमनु सुखेनैव न तु भयेन पुनर्गर्भत्वं गूढत्वमेरिरे आपिरे आप्ताः । देवता अप्येवम् ॥ ५४ ॥

## टिप्पणी

**अकारवाच्यादिति** । अः इति ब्रह्मेत्यादि श्रुतेः । अकारवाच्यत्वं विष्णोरिति भावः । ननु स्वस्यैव स्वनिमित्तकत्वं कथमित्यत आह **स्वेच्छयेति** । **यावदिति** । ऋचि महेति निपातः तदेत्यर्थे वर्तत इत्यभिप्रेत्य योजनामाह **अह तदैवेति** । आङ्पूर्वस्य ईर गताविति धातोः लिटि एरिरे इति रूपमित्यभिप्रेत्य तस्य भाष्यपदेन योजनामाह **एरिरे आपिर इति** । **देवता अप्येवमिति** । भगवच्छक्तिवत् देवतापि यज्ञे स्वस्वनामानि दधाना अकारवाच्याद्विष्णोस्तत्प्रसादात् यज्ञे व्यक्तत्वानन्तरं सुखेनैव पुनर्गूढत्वमेरिरे इत्यर्थो ज्ञेय इति भावः ॥ ५४ ॥

**मंत्रः – ५५**

(अ.१, सू.६, मं.५)

**वीळु चिदारुजत्नुभिर्गुहा चिदिन्द्र वह्निभिः ।**
**अविन्द उस्रिया अनु ॥**

**पदपाठः**

वीळु । चित् । आरुजत्नुऽभिः । गुहा । चित् ।
इन्द्र । वह्निऽभिः । अविन्दः । उस्रियाः । अनु ॥

**भाष्यम्**

**वीळु दृढं ह्यपि ।**
**आरुजद्भिः स्वसामर्थ्यैर्गुहायां संस्थितोऽपि सन् ।**
**वहद्भिरखिलं लोकं प्रकाशत्वानि लब्धवान् ।**

**[१]देवैर्वैतादृशैः साकमानुकूल्येन लब्धवान् ॥ ५५ ॥**

## टीका

हे इन्द्र ! गुहाचित् गुहायां संस्थितोऽपि लोकानां गूढत्वेनावस्थितोऽपि संस्त्वं वीळु दृढं चित् अपि ब्रह्माण्डादिकमारुजत्नुभिः आरुजद्भिः रुजोभङ्गे संहरद्भिः वह्निभिः अखिलं लोकं वहद्भिः पौंस्यैः स्वसामर्थ्यैः सह उस्रियाः प्रकाशत्वानि प्रकटत्वानि नानाविधं प्राकट्यमनु स्वेच्छानुसारेणाविन्दो लब्धवानसि। स्वप्रकाशो वर्तसे। यद्वैतादृशैर्वीळुचिदारुजत्नुभिः वह्निभिर्देवैः साकं त्वमुस्रिया अन्वविन्दः आनुकूल्येन लब्धवानसि ॥ ५५ ॥

## टिप्पणी

भाष्ये देवैर्वेति वाशब्दः पक्षभेदसूचक इत्यभिप्रेत्य योजनामाह यद्वेति । एतादृशैरित्यस्य पूर्वोक्त [२]दृष्टब्रह्माण्डादिसंहर्तृत्वलोकधारकत्वरूपगुणविशिष्टत्वार्थपरत्वमित्यभिप्रेत्य तानि पदानि योजयति एतादृशैरित्यादिना। वीळुचिदित्यादिपदानां पूर्ववदेवार्थो ज्ञेय इति भावः ॥ ५५ ॥

**मंत्रः – ५६**

(अ.१, सू.६, मं.६)

**देवयन्तो यथा मतिमच्छा विदद्वसुं गिरः ।**
**महामनूषत श्रुतम् ॥**

---

१. दैवैर्वा तादृशैः – पा० ।

२. दृढब्रह्माण्ड - क, पूर्वोक्तब्रह्माण्ड - रा. ।

**पदपाठः**

देवऽयन्तः । यथा । मतिम् । अच्छ ।
विदत्ऽवसुम् । गिरः । महाम् । अनूषत । श्रुतम् ॥

**भाष्यम्**

**सम्यक्प्रद्योतयन्तोऽमुं मतिरूपं यथास्थितम् ।**
**विदद्वित्तं महान्तं च विश्रुतं सुगिरोऽस्तुवन् ॥ ५६ ॥**

**टीका**

अच्छेति निपातः संशब्दार्थे । अच्छ देवयन्तः । सम्यक् प्रद्योतयन्तः सम्यक् प्रकाशयन्त्यो गिरो वेदरूपाः सुगिरः । लिङ्गव्यत्यासः छान्दसः । अथवा गिर इति कर्तृसाधनः पुल्लिङ्गः । अत एव शोभना गिरो येषां ते सुगिरः । यथा यथास्थितं निर्विकारं मतिं मतिरूपं विदद्वसुं विदद्वित्तं विददिति कर्मणि छान्दसं रूपम् । लब्धवित्तम् । महां महान्तं श्रुतं विश्रुतं प्रसिद्धममुमिन्द्रमनूषत अस्तुवन् ॥ ५६ ॥

**टिप्पणी**

अच्छेतीति । अव्ययानामनेकार्थत्वोक्तेः 'स्वरादिनिपातमव्ययम्' इति निपातस्याव्ययत्वेन संशब्दितसम्यक्कृतार्थकत्वमुपपन्नमिति भावः । ननु गॄ निगरण इति धातोः स्त्रियां क्तिन्निति स्त्याधिकारे सम्पदादिभ्यः क्विब्वाच्य इति भावार्थे क्विप्प्रत्ययान्ततया निष्पन्नस्य गिर्शब्दस्य[1] स्त्रीलिङ्गत्वेन तद्विशेषणस्यापि स्त्रीलिङ्गत्वावश्यम्भावात् कथं देवयन्त इति पुल्लिङ्गत्वमित्यत आह **लिङ्गव्यत्यास** इति । कर्ता साधनं शब्दोत्पत्तौ निमित्तं यस्य शब्दस्य स कर्तृसाधन इत्यर्थः । तथाच गिरन्ति वेदरूपवाचमुच्चा-

---

१. गीर्शब्दस्य ।

रयन्ति 'कर्त्रर्थे क्विब्वा' इति सूत्रेण क्विप्प्रत्ययान्ततया निष्पन्नस्य गिर-शब्दस्य वेदोच्चारणकर्तृपुरुषपरत्वेन पुल्लिङ्गत्वात् तद्विशेषणस्यापि देवयन्त इति पदस्य पुल्लिङ्गत्वमुपपन्नमिति भावः । गिर् इत्यस्य कर्तृसाधनत्वे भाष्यज्ञापकमाह **अत एवेति** । कर्तृव्युत्पत्त्या पुरुषपरत्वज्ञापनायैव सुगिर इत्यन्यपदप्रधानकबहुव्रीहिपदं प्रयुक्तमिति भावः । प्रथमपक्षे शोभनाश्च ताः गिरश्च सुगिर इति कर्मधारयो ज्ञेयः ।

**छान्दसमिति** । 'लटः शतृशानचौ' इति कर्तरि लटः शास्त्रादेव विधानात् कर्तरि शबिति शबोऽपि कर्तरिविधानात् वृत्त्यादौ (पञ्चम्यन्तं) पचन्तं देवतं पश्येति कर्तर्युदाहृतत्वाच्च प्रकृते विदिर् लाभ इति धातोः कर्मकारके अर्थे शत्रन्ततया विददिति रूपं छान्दसमिति भावः ॥ ५६ ॥

**मंत्रः – ५७**

(अ.१, सू.६, मं.७)

**इन्द्रे॑ण॒ सं हि दृक्ष॑से सञ्ज॒ग्मा॒नो अबि॑भ्युषा ।**
**म॒न्दू स॑मा॒नव॑र्चसा ॥**

**पदपाठः**

**इन्द्रे॑ण । सम् । हि । दृक्ष॑से । स॒म्ऽज॒ग्मा॒नः ।**
**अबि॑भ्युषा । म॒न्दू इति॑ । स॒मा॒नऽव॑र्चसा ॥**

**भाष्यम्**

**तस्य सन्दर्शनायैव सङ्गतस्तेन[१] शङ्करः ।**
**मखात्मा पुरूहूतो वा श्री भूमी च सुखात्मिके[२] ॥ ५७ ॥**

१. सङ्गतस्तस्य – पा० । २. सुखात्मक – पा० ।

## टीका

**अत्र मखात्मेत्युत्तरस्यामृचि स्थितस्य मखशब्दस्य व्याख्यानम्। वाचशब्दौ व्यत्यासेन योज्यौ । मं मदं सुखं ददातीति मन्दुः शङ्करः पुरुहूतश्च । श्रीभूमीवा मन्दू । कथम् । सुखात्मिके । ततश्च मन्दू शङ्करपुरुहूतौ श्रीभूमीवा संदृक्षसे। दृशोस्तुमर्थेकसे। तस्य परमेश्वरस्य सन्दर्शनाय अबिभ्युषा निर्भयेन समानवर्चसा निर्विकारतेजसा इन्द्रेण तेनैव परमेश्वरेण सञ्जग्मानः सञ्जग्मानौ सङ्गतः सङ्गतौ बभूवतुः । प्रसिद्धेन्द्रविषये मन्दू इति द्यावापृथिव्यौ। मदहेतुत्वात्। अन्यत्समानम् ॥ ५७ ॥**

## टिप्पणी

नन्वस्यामृचि मखपदाभावात् भाष्ये मखात्मेति कथमुक्तमित्यत आह **अत्रेति** । अनवद्यैरित्युत्तरस्यामृचि मखपदप्रयोगादभिमान्यभिमन्यमानयो-रैक्यव्यपदेशस्य महतश्चतुर्मुखादित्यादौ दर्शनात् मखात्मेति मखपदव्याख्यानं शिष्यबुद्धिसौकर्यायात्रैव कृतमिति भावः ।

**वाचशब्दाविति** । पुरुहूतो वेति श्रुतवाशब्दः । श्रीभूमी चेति[१] श्री भूमी वेत्यत्र श्रुतचशब्दः (वाशब्दः) पुरुहूतस्येत्येवं रूपव्यत्यासेन योज्या-वित्यर्थः । **मं मन्दमिति** । ऋचि मदशब्दादकारलोपः छान्दस इति भावः । मदि हर्षे इति धातोर्निष्पन्नस्य मदशब्दस्य सुखवाचित्वमित्यभि-प्रेत्य योजनामाह **सुखमिति** । डुदाञ् दान इति धातोः औणादिक डुप्रत्यये डित्यभस्यापीति धातोष्टिलोपे मकारात्परस्य द्वितीयैकवचनस्या-मश्छान्दसत्वेन वा संज्ञापूर्वको विधिरनित्य इति वा सुपो धातुप्रातिपदि-

१. श्री भूमी वेति - क ।

कयोः इति लुगाभावे मन्दशब्दनिष्पत्तिरिति भावः । **दृशोस्तुमर्थे कसौ इति** । दृशिर् प्रेक्षणे इति धातोः तुमर्थे 'से सेन सेऽसेन् कसे कसेन्' इत्यादिना सूत्रेण कसे प्रत्यये लशक्व तद्धिते इति ककारलोपे दृश् असे इति स्थिते 'दृशेः कसश्च वक्तव्यः' इति वार्तिकेन कसप्रत्ययविधानवत् वर्णागमो वर्णविपर्ययश्चेत्युक्तरीत्या कसादेशस्याप्यङ्गीकार्यत्वेन प्रकृते दृश् इति शकारस्य सकारादेशे आदेशप्रत्यययोरिति सस्य षत्वे कषयोर्योगे क्ष इति दृक्ष इति रूपसिद्धौ असे इत्यनेन अतो गुण इति पररूपत्वे दृक्षस इति रूपसिद्धिरिति भावः । कृन्मेजन्तः इति सूत्रेण तस्याव्ययत्वं च ज्ञेयम् ।

ऋचि सन्ति दृक्षस इत्यत्र हिशब्द एवार्थकस्सन् दृक्षस इत्यनेनान्वेतीत्यभिप्रेत्य भाष्ये सन्दर्शनायेति स्पष्टमुक्तत्वात् टीकायां सन्दर्शनायेत्येवोक्तमिति ज्ञेयम् । ञिभी भय इति धातोः लिटः कसु प्रत्ययादिकार्ये नञ्समासे तृतीयैकवचने अबभ्युषेति रूपमित्यभिप्रेत्य योजनामाह **निर्भयेनेति** । 'तदेजति तन्नेजति', 'ततो बिभेति सर्वोऽपि न बिभेति हरिः स्वयम्' इत्यादिप्रमाणैः परमेश्वरे निर्भयत्वस्य प्रमितत्वादिति भावः ।

**सङ्गताविति** । श्रीभूम्योर्विवक्षायां तु सञ्गमाने सङ्गते बभूवतुरिति लिङ्गव्यत्ययेन योज्यमिति भावः । यद्वा छान्दोग्ये तृतीयाध्याये पञ्चदशे खण्डे सोऽहमेतं वायुं दिशां वत्सं वेद इत्येतद्व्याख्यावसरे भाष्ये 'वायुं सुतं हरेर्ज्ञात्वा नाहं पुत्रतयारुदम् । हरेः प्रसादसामर्थ्यादजरा चामरा ह्यहम् । अनादिकालसम्बन्धादित्युवाच परा रमा ।' इति प्रमाणेन सोऽहमिति वाक्यस्य लक्ष्मीवचनत्वमुक्त्वा 'पुलिङ्गेनोच्यते स्त्री च पुंवच्छक्तिमती क्वचित्' इति चोक्तेः । तथा च 'अत्ता चराचरग्रहणात्' इति सूत्रभाष्ये पुलिङ्ग

च कूटस्थोऽक्षर इत्यादिवदित्युक्तेः । तत्र टीकायां यथा रमायां पुंशक्तिमत्वात् पुलिङ्गप्रयोगः कूटस्थोऽक्षर उच्यते, सोऽहमेतमेनं वायुं दिशां वत्सं वेद इत्यादावित्युक्त्वा पुलिङ्गेनोच्यत इति छान्दोग्यभाष्ये वाक्यस्योदाहृतत्वाच्च ।

अत्रापि द्वितीयाध्याये वयं हित अगन्महीत्यस्यामृचि आपराकादित्यत्र पराकशब्दव्याख्यावसरे भाष्ये पराकः सुसुखैव श्रीरिति लक्ष्म्यां पराक इति पुलिङ्गप्रयोगात् । तत्रत्यटीकायां श्रीरेव पराकः पुलिङ्गं सामर्थ्योपेतत्वादित्युक्तत्वाच्च प्रकृते श्रीभूम्योः सञ्गमानौ सङ्गताविति पुलिङ्गप्रयोग उपपन्न इति ज्ञेयम् । केन निमित्तेन द्यावापृथिव्यौ मन्दू इत्युक्ते इत्यत आह मदहेतुत्वादिति । सुखहेतुत्वादित्यर्थः । तथा च मं सुखं दत्त इति विग्रहो द्रष्टव्य इति भावः ।

अन्यदिति । इन्द्रेण संदिदृक्षसेत्यादिपदानां योजनं तु पूर्वोक्तरीत्यैव ज्ञेयमित्यर्थः । प्रसिद्धेन्द्रस्य त्रिलोकाधीश्वरत्वेन यथायोग्यं निर्भयत्वादिकं ज्ञेयमिति भावः ॥ ५७ ॥

**मंत्रः – ५८**

(अ.१, सू.६, मं.८)

**अनवद्यैरभिद्युभिर्मखः सहस्वदर्चति ।**
**गणैरिन्द्रस्य काम्यैः ॥**

**पदपाठः**

अनवद्यैः । अभिद्युऽभिः । मखः । सहस्वत् ।
अर्चति । गणैः । इन्द्रस्य । काम्यैः ॥

### भाष्यम्

**अनवद्यैर्महाज्ञानैः प्रियैर्देवगणैः सह ।**
**वायुना च सहार्चन्ति सुधीत्वात्परमेश्वरम् ॥ ५८ ॥**

### टीका

मखो मखात्मा मखाभिमानी पुरुहूतोऽनवद्यैः निर्दोषैः अभिद्युभिरभितो द्यौः प्रकाशो ज्ञानं येषां तैः महाज्ञानैः इन्द्रस्य परमेश्वरस्य काम्यैः प्रियैर्गणैर्देवतागणैः सह सहस्वत् सहस्वान् । सहो वायुस्तद्वान् । सहस्वद्यथा भवति तथेति वा । वायुना च सहेति यावत् । इन्द्रस्य इन्द्रं परमेश्वरमर्चति । तात्पर्यमाह अर्चतीति । वायुरिन्द्रः सर्वे देवाश्च परमेश्वरमर्चन्तीत्युक्तं भवतीति । अनवद्यैरित्यादिविशेषणानि हेतुगर्भाणीत्यभिप्रेत्य सर्वेषां सङ्ग्रह उक्तः सुधीत्वादिति । इन्द्रविषये त्वनवद्यैरभिद्युभिरिन्द्रस्य काम्यैः ऋत्विग्गणैः क्रियमाणो मखः सहस्वद्बलवदतिशयेनेन्द्रमर्चतीति करणे कर्तृत्वोपचारेण योज्यम् ॥ ५८ ॥

### टिप्पणी

सहस्वच्छब्दस्य व्यत्यये नपुंसकत्वमित्यभिप्रेत्य योजनामाह सहस्वत् सहस्वानिति । ननु 'अस्मायामेधास्रजोविनिः'[१] इति सूत्रेऽसन्तान्मत्वर्थेऽन्प्रत्ययविधानेन कथमत्र मतुप्प्रत्यय इति चेत् उच्यते, तस्मिन् सूत्रे वृत्तौ मतुप् सर्वत्र समुच्चीयते असन्ततावत् पयस्वी पयोवान् मायावी मायावान् इत्यादिकथनेन मतुबोऽपि समुच्चयोक्तेर्वा बहुलं छन्दसीत्युत्तरसूत्रे छन्दसि विषये बहुलं विनिप्रत्ययो भवति मत्वर्थे, अग्निस्तेजस्वी । न च भवति सूर्यो विवर्चस्वानिति वृत्तावुक्तत्वेन प्रकृतेऽपि

१. पा.सू. ५-२-१२१ ।

बहुलग्रहणेनैव वा मतुप्प्रत्ययोपपत्तेरिति । तथा च सहस्शब्दात्परस्य मतुपो मकारस्य 'झयः'[1] इति सूत्रेण वत्वे 'अत्वसन्तस्य चाधातोः' इति दीर्घे नुमादिकार्ये च सति सहस्वानिति रूपमिति ज्ञेयम् । **सहो** वायुरिति । असम्भवस्तु सतोऽनुपपत्तेः इत्यधिकरणभाष्ये प्राणं वा व महान् सह ओजो बलमित्याचक्षते पैङ्गिश्रुतिरिति । श्रीमदाचार्यैरुक्तश्रुतौ सहस्वशब्दस्य वायुपरत्वोक्तेः प्रकृतेऽपि सहस्वशब्दस्य वायुपरत्वमित्यभिप्रेत्य भाष्ये वायुना सहेत्युक्तमिति भावः ।

क्रियाव्यर्गविशेषणानां[2] क्लीबत्वमेकवचनान्तत्वं च वक्तव्यमिति शाब्दिकोक्तेः क्रियाविशेषणत्वेन नपुंसकत्वमुपपन्नमित्यभिप्रेत्य योजनान्तरमाह **सहस्वद्यथेति** । इन्द्रस्येत्यस्यावृत्त्या तस्य द्वितीयान्ततया विपरिणम्यान्वय इत्यभिप्रेत्य योजनामाह **इन्द्रस्य इन्द्रमिति** । तात्पर्यमाहेत्युक्ततात्पर्यप्रकारं दर्शयति **वायुरिन्द्र इत्यादिना** । **अनवद्यैरित्यादीति** । अनवद्यैरभिद्युभिः काम्यैः इत्येतानि विशेषणानि अनवद्यत्वात् महाज्ञानित्वात् अतिप्रियत्वाच्चार्चयन्तीति भगवदर्चनक्रियायाम् अनवद्यत्वादीनां हेतुत्वेनान्वय इत्यभिप्रेत्य सर्वेषां विशेषणानां लक्षणया सङ्ग्राहकत्वेन सुधीत्वादिति भाष्यप्रयुक्तमिति भावः । एवं मखाभिमानित्वाच्च इन्द्रः भगवन्तमर्चतीति हेतुगर्भतया मखपदप्रयोगकृत्यं ज्ञेयम् ।

**इन्द्रमर्चतीति** । चुरादिधातुपाठे 'आधृषाद्वा' इति पठितेन गणसूत्रेण घृष अप्रसहन इत्यतः प्राक्तनानामेतत्सूत्रादुपरिपठितानां धातूनां णिचि विकल्पितत्वेन अर्च पूजायामिति धातोरपि तत्र पाठेन णिची विकल्पितत्वात् णिच्पक्षे अर्चयतीति रूपमिति भावः । ननु ज्योतिष्टोमेन स्वर्गकामो

---

१. पा.सू. ८-२-१० ।     २. क्रियाविशेषणानां - क ।

यजेत इत्यादौ यागस्य करणत्वेन श्रवणात् कथं तस्यार्चयतीति कर्तृत्वोक्तिरित्यत आह करणे कर्तृत्वोपचार इति ॥ ५८ ॥

मंत्रः – ५९
(अ.१, सू.६, मं.९)

**अतः परिज्मन्ना गहि दिवो वा रोचनादधि ।**
**समस्मिन्नृञ्जते गिरः ॥**

पदपाठः

अतः । परिऽज्मन् । आ । गहि । दिवः । वा ।
रोचनात् । अधि । सम् । अस्मिन् । ऋञ्जते । गिरः ॥

भाष्यम्

**अतो हेतोरिहायाहि दिवो वा सूर्यमण्डलात् ।**
**परिज्मन् सर्वगास्माकमधिकृत्य समर्हणम्[१] ।**
**अस्मिन्गिरः [२]प्राप्नुवन्ति सम्यक्परममुख्यतः ।**
**युञ्जन्तीत्यत्र बाहुल्याद्देवयन्तोऽत्र इत्यपि ।**
**बाहुल्याद(द्व)ष्टितो गीर्भिर्विनार्थो नान्य इष्यते ॥५९॥**

टीका

परितो ज्मां भूमिं वर्तत इति परिज्मा । हे परिज्मन् ! सर्वग ! यत एवं त्वं सर्वयज्ञानां भोक्ता अतो हेतोर्दिवः स्वर्गात् रोचनाद्दीप्यमानात्सूर्यमण्डलाद्वा अधि अस्माकं समर्हणमधिकृत्य इह यज्ञस्थानम्

---

१. समर्हणाम् – पा० । २. प्राप्नुयुश्च – पा० ।

आगहि आयाहि । किञ्च । अस्मिंस्थाने गिरः स्तुतिरूपा वेदवाचः सं सम्यक् तस्यैव विवरणं परममुख्यतस्त्वामृञ्जते । धातूनामनेकार्थत्वात् प्राप्नुवन्ति । अतोऽप्यायाहि ।

अत्र सूक्ते प्रथमस्तृच ऐन्द्रः । आदहेत्याद्याः षट् मारुत्यः । तत्रापि वीळुचिदिन्द्रेणेति द्वे ऐन्द्र्यौ च । दशमी त्वैन्द्रीति केचिद्ब्रुवते । यथा युञ्जन्त्यादहेत्येताः षण्मारुत्यो वीळुचिदिन्द्रेणेत्यैन्द्र्यौ चेति । अनाख्याते त्विन्द्रो देवतेति च । तदेतद्दशम्यां विप्रतिपत्त्यभावात्तद्व्याख्यानात्प्रागेव निराकरोति **युञ्जन्तीत्यत्रेति** । युञ्जन्ति ब्रध्नं युञ्जन्त्यस्येत्यत्र ऋग्द्वये देवताभ्योऽन्य इन्द्रलक्षणोऽर्थो नेष्यते प्रामाणिकैः । कुतः । बाहुल्यात् बहुवचनश्रवणात् । तस्य यथाकथञ्चिद्व्याख्याने ब्रध्नशब्दस्यादित्ये रूढिर्विरुध्यते । 'असौ वा आदित्यो ब्रध्न' इति श्रुत्यन्तरव्याख्यान-विरोधश्च । उपलक्षणं चैतत् । 'केतुं कृण्वन्नि'त्यस्यामृचि कृण्वन्नित्या-द्येकवचनस्य मर्या इति बहुवचनस्य च श्रवणादन्यः केवलेन्द्रलक्षणोऽर्थो नेष्यते । चतुर्थ्यां पञ्चम्यां च न विप्रतिपत्तिः । उत्तरासु चतुर्षु प्रतिपाद्येऽर्थे बाहुल्याद्दृष्टितो बहुवचनस्याश्रवणादन्योऽर्थो देवतालक्षणो नेष्यते । कथञ्चिद्योजना तु क्लिष्टतरा ।

ननु देवयन्त इत्यस्यामृच्यतःपरिज्मन्नित्यस्यामपि बहुवचनश्रव-णात् कथं बाहुल्याद्दृष्टित इत्युच्यत इत्यत उक्तं **देवयन्तोऽत इत्यपि गीर्भिर्विना बाहुल्याद्दृष्टित इति** । गिरां तत्र बहुवचनविषयत्वं न प्रतिपाद्यस्येत्यर्थः । बाहुल्याद्बृष्टित इति क्वचित्पाठः । तत्र युञ्जन्तीत्यत्र बाहुल्यात् देवानामेवार्थत्वमन्यस्त्विन्द्रलक्षणोऽर्थो नेष्यत इत्युक्ते शङ्कते एवं तर्हि देवयन्त इत्यत्रात इत्यत्रापि बाहुल्याद्देवार्थत्वमेवेन्द्रस्त्वर्थो

**नेष्यत इति । तत्रोत्तरं देवयन्त इति । देवयन्तोऽत इत्यपि बाहुल्याद्बहुवचनसामर्थ्यादन्यो देवतारूपोऽर्थो नेष्यते । तर्हि बहुवचनं निरर्थकं स्यात् तत्राह गीर्भिर्विनेति । कुत एतदित्यत आह दृष्टित इति । स्फुटं तथाप्रतीयमानत्वात् । विषयान्तराप्रतीतौ सत्यां प्राग्बहुवचनं हेतुत्वेनोक्तमिति भावः ॥ ५९ ॥**

## टिप्पणी

ऋच्यत इत्येतदागमने पूर्वोक्तसर्वयज्ञभोक्तृत्वरूपहेतुसमर्पकमिति प्रदर्शनाय भाष्ये अतो हेतोरित्युक्तमित्यभिप्रेत्य योजनामाह **यत एवमिति** । अस्मिन् ऋञ्जते गिर इत्येतदप्यागमने[१] स्तुतिस्वीकारार्थत्वनिमित्तान्तरपरमित्यभिप्रेत्य ऋचि भाव्ये च ऋञ्जते प्राप्नुवन्तीत्यनन्तरमत इत्यत्रापिपदाध्याहारेण अतोऽपि हेतोरिति हायाहीत्यस्यानुवृत्तिमभिप्रेत्य ऋक्पदानुवादेन भाष्यपदानि योजयति **किञ्चेति** ।

ऋञ्जत इत्यस्य सकर्मकत्वात् प्रकृतेन्द्रस्यैव कर्मकारकत्वेनान्वय इत्यभिप्रेत्य योजनामाह **त्वामिति** । ननु भीमसेनधातुपाठे शब्विकरण ऋजि भर्जन् इति ऋजि धातोर्भर्जनार्थकत्वोक्तेः भाष्ये प्राप्नुवन्तीति प्राप्त्यर्थकतया कथं व्याख्यानं क्रियत इत्यत आह **धातूनामिति** । क्रियाप्रसिद्धिसिद्ध्यर्थमेकैकोऽर्थः प्रदश्यर्ते प्रयोगतोऽनुगन्तव्यः, अनेकार्था हि धातवः इति शब्दिकोक्तेरिति भावः । भाष्ये प्राप्नुवन्तीति बहुवचनकथनेन ऋचि ऋञ्जत इत्येकवचनं व्यत्ययेन बहुवचनार्थ इति ज्ञेयम् । अतोऽपीति । न केवलं यज्ञभागस्वीकारार्थमागमनं किन्तु वेदादिरूपस्तुतिस्वीकारार्थमपीत्यपिशब्दार्थो ज्ञेयः । यद्यपि यतः समस्मिन् ऋञ्जते गिरः

---

१. स्तुतिस्वीकारार्थरूपनिमित्त - क ।

अतो हेतोः आयाहीत्येकवाक्यतया योजयितुं शक्यत एव, तथापि सर्वयज्ञभोक्तृत्वं सर्ववेदस्तुत्यत्वरूपमाहात्म्याधिक्यप्रतिपादनाय भाष्ये टीकायां च वाक्यभेदेन निमित्तद्वयपरतया योजितमिति ज्ञेयम् ।

अत्र सूक्त इति । युञ्जन्तीत्यादि दशर्चे षष्ठे सूक्त इत्यर्थः । आदहेत्याद्या इति । आदह स्वधामन्वित्याद्याः । अतः परिज्मन्नागहात्यन्ताः[1] षट् ऋचो मारुत्य इत्यर्थः । तत्रापि । षट्स्वपि वीळुविदारुजतृभिः । इन्द्रेण सन्दृक्षसे इति द्वे ऋचावैन्द्र्यौ मारुत्यौ चेत्यर्थः । किञ्चिदिति । अनुक्रमणिकाकारा इत्यर्थः । उक्तार्थे संमतित्वेनानुक्रमणिकाकारोक्तवाक्यमेवोदाहरति यथेति । ननु प्रथमस्य त्र्यर्चस्य दशम्याश्चेन्द्रदेवताकत्वमनुक्रमणिकायामनुक्तं कथमनूदितमित्यत आह अनाख्याते त्विति । युञ्जन्त्यादहेत्येताः षण्मारुत्यः वीलुचिदिन्द्रेणेत्यैन्द्र्यौ चेत्यत्र प्रथमस्य तृचस्य दशम्याश्चेन्द्रदेवताकत्वानुक्तावप्यनुक्रमणिकायामेव स्थलान्तर अनाख्याते त्विन्द्रो देवतेति इन्द्रदेवताकत्वान्नानुक्तानुवादः । अनाख्याते त्विति । वाक्यस्य यत्र ऋक्षु देवता विशिष्य व्याख्यायते तत्रेन्द्रो देवतेत्यर्थो ज्ञेयः । तदेतदिति । तदेतन्मतं दशम्यां ऋचि देवताविप्रतिपत्त्यभावात्तद्व्याख्यानात्प्रागेव निराकरोतीत्यर्थः ।

नन्विन्द्रस्य कर्तृत्वेन योजनायां युञ्जन्तीति बहुवचनायोगेऽपि परितस्थुष इत्यत्र विभक्तिव्यत्ययाश्रयणेन परितोऽवस्थिता लोकत्रयवर्तिनः प्राणिन[2] अनुषञ्चरन्तमिति विशेषविशिष्टमिन्द्रं युञ्जन्ति स्वकीये कर्मणि देवतात्वेन सम्बद्धं कुर्वन्तीति कर्मत्वेन योजनायां बहुवचनं युक्तमित्यत आह तस्येति । बहुवचनस्य यथाकथञ्चिद्व्याख्याने ब्रध्नशब्दस्येन्द्रे-

१. परिज्मन्नित्यन्ताः - क । २. पुरुषाः - क ।

ऽनुपपत्तिः[१] । भास्कराहस्करब्रध्नप्रभाकरविभाकराः इत्यमरकोशादौ ब्रध्नशब्दस्यादित्ये रुढेरङ्गीकृतत्वेन तद्विरोधः स्यादित्यर्थः । असौ वा आदित्यः इति युञ्जन्ति ब्रध्नमित्याह **असौ वा आदित्यो ब्रध्न इति** । श्रुत्यन्तरे यद् ब्रध्नशब्दस्यादित्यार्थत्वेन व्याख्यानं तद्विरोधश्चेत्यर्थः । तथा च योगव्युत्पत्त्याश्रयणेन परपक्षे इन्द्रपरत्वव्याख्यानमयुक्तमिति भावः ।

**उपलक्षणं चैतदिति** । बाहुल्यादिति भाष्योक्तदूषणं केतुं कृण्वन्निति तृतीयायाः ऋचः इन्द्रपरत्वपक्षदूषणस्याप्युपलक्षणमित्यर्थः । उपलक्षितशेषमेव दर्शयति **केतुं कृण्वन्नित्यस्यामिति** । **कृण्वन्नित्याद्येकवचनस्येति** । आदिशब्देनाज्ञा यथा इत्येकवचनं गृह्यते । केवलेन्द्रलक्षण इत्यर्थ इति शेषः । एतेन रूढविरोधादिकथनेन भाष्ये बाहुल्यादित्यस्याद्यऋचः इन्द्रपरत्वे रूढिविरोधादिबहुदोषप्रसङ्गादित्यप्यर्थो ज्ञेयः । तथा च भाष्येऽनुक्तं रूढविरोधादिकं टीकायां कथमुच्यत इति न चोद्यावकाश इति ज्ञेयम् । चतुर्थ्यां पञ्चम्यां च विप्रतिपत्तिरिति तयोः ऋचोः मरुद्देवताकत्वस्यास्माभिः परेण चाङ्गीकृतत्वेन तत्र विप्रतिपत्तिर्नास्तीत्यर्थः ।

**उत्तरासु चतसृष्विति** । देवयन्तो यथामतिः, इन्द्रेण सन्दिदृक्षसे, अनवद्यैभिद्युभिः, अतः परिज्मन्नागहि, इति चतसृषु ऋक्ष्वित्यर्थः । ननु देवयन्त इत्यत्र मरुद्गण इत्यस्याध्याहारः, तथा च देवयन्तः मरुत्संज्ञकान् देवान् आत्मन इच्छन्तः गिरः स्तोतारः ऋत्विजः विदद्वसुं महामरुद्गणमनूषतेति योजना । इन्द्रेण सन्दिदृक्षस इत्यत्र हे मरुद्गण इत्यस्याध्याहारः । तथा च हे मरुद्गण त्वमिन्द्रेण सञ्जग्मावः सङ्गच्छमानः सन्दिदृक्षसे सम्यक् दृश्येथाः खल्विति योजना । अत एवमादिरूपेण योजनायां मरुतां

---

१. ब्रध्नशब्दस्येन्द्रे उपपत्तिः - क ।

प्रतिपाद्यत्वं युक्तमित्यत आह **कथञ्चिदिति** । आद्ययोरध्याहारात् तृतीयस्यां गणैस्सहितमिन्द्रस्येन्द्रमर्चतीत्यप्राधान्यत्वेन प्रतीतानां मरुतां प्रतिपाद्यत्व-स्वीकाराच्चतुर्थ्यमपि परिज्मन् परितो व्यापिन् मरुद्गणेत्यध्याहारतः परकीय-योजना क्लिष्टतरेति भावः ।

अत्रापि भाष्योक्तस्य बाहुल्यादित्यस्य परपक्ष अध्याहारादिबहुदोष-प्रसङ्गादित्यर्थो ज्ञेयः । **बहुवचनश्रवणादिति** । देवयन्त इत्यस्यामृचि देवयन्तः गिर अनूषतेति बहुवचनस्यातः परिज्मन्नित्यस्यां समस्मिन् ऋजन्ते गिर इति बहुवचनस्य श्रवणादित्यर्थः । बाहुल्यादृष्टित इति पाठो दृश्यत इत्यर्थः । अस्मिन् पक्षे बाहुल्यादित्येतत् वक्ष्यमाणरीत्या शङ्कोत्तरत्वेन योजयितुं युञ्जन्तीत्यत्र बाहुल्यादितिपरपक्षदूषणतया पूर्वोक्तार्थमेव शङ्का-बीजत्वेनानूद्य योजनामाह **तत्रेत्यादिना** । तत्रैवं पाठ अङ्गीक्रियमाणे सती-त्यर्थः ।

**अत इत्यत्रापीति** । अतः परिज्मन् आगहीत्यस्यामपि ऋचीत्यर्थः । **बाहुल्यादिति** । बहुवचनश्रवणादित्यर्थः । **तर्हि बहुवचनमिति** । देवयन्त इत्यस्यामृचि अतः परिज्मन्नित्यस्यामप्यृचि श्रुतं बहुवचनमित्यर्थः । **कुत एतदिति** । गिरां बहुवचनविषयत्वं कुतो हेतोरवगन्तव्यमित्यर्थः । **स्फुटमिति** । गिरामेव बहुवचनविषयतया स्पष्टं प्रतीयमानत्वादित्यर्थः । यद्यपि दृशिर् प्रेक्षण इति धातुरपरोक्षज्ञाने वर्तते, तथापि पश्यार्थैश्चाना-लोचन इत्यनालोचनपदेन ज्ञानमात्रेऽपि दृशिधातोः प्रयोगस्य वृत्त्यादौ दर्शितत्वेन प्रकृते दृक्षित इति शब्दजन्यज्ञानेऽपि भाष्योक्तप्रयोग उपपन्न इति ज्ञेयम् ।

ननु युञ्जन्तीत्यत्र बाहुल्याद्देवताभ्योऽन्योऽर्थो नेष्यत इत्यत्र बहुवचनं हेतुत्वेनोक्तं तदयुक्तम्, देवयन्तः परिज्मन्निति ऋग्द्वयेऽपि बहुवचने सत्यपि गिरामेव बहुवचनविषयकत्वस्वीकारेण देवतानां विषयत्वानङ्गीकारात् तत्र हेतोः व्यभिचार इत्यत आह **विषयान्तरेति** । विषयान्तर प्रतीतत्व-विशिष्टबहुवचनस्यैव हेतुत्वकथनेन पूर्वोक्तऋग्द्वये गिरामेव विषयतया स्पष्टं प्रतीयमानत्वेन पूर्वोक्तहेतोस्तत्राभावान्न व्यभिचार इति भावः ॥ ५९ ॥

**मंत्रः – ६०**

(अ.१, सू.६, मं.१०)

**इतो वा सातिमीमहे दिवो वा पार्थिवादधि ।**
**इन्द्रं महो वा रजसः ॥**

**पदपाठः**

**इतः । वा । सातिम् । ईमहे । दिवः । वा ।**
**पार्थिवात् । अधि । इन्द्रम् । महः । वा । रजसः ॥**

**भाष्यम्**

**इतो दिवो वा पातालात्सातिं लाभस्वरूपिणम् ।**
**महतो रञ्जकाद्विष्णोर्लोकाद्वा तमधीमहे ॥ ६० ॥**

**टीका**

वयमितो दिवोऽर्वाक्तनात् द्युलोकाद्वा । पार्थिवात् पृथिवी-सम्बन्धिनः पातालाद्वा । महो महतो महतां रजसो रञ्जकाद्विष्णो-र्लोकाद्वा । एतेषु लोकेषु स्थितमिति यावत् । सातिं षणसम्भक्तावि-

**त्यस्येदं रूपम् । लाभस्वरूपिणं भगवानेव हि भक्तानां लाभः । तमिन्द्रमधीमहे स्मरामः । इक् स्मरणे स्तुमो वा इङ् अध्ययने । याचामहे वा । याश्चाकर्मसु पाठात् ॥ ६० ॥**

## टिप्पणी

अस्मद्युत्तम इति सूत्रे वृत्त्यादावस्मच्छब्देन उपपदत्वेन श्रूयमाणेऽश्रूयमाणे वा तदर्थविवक्षायामुत्तमपुरुषो भवतीत्युक्त्या उत्तमपुरुषाविनाभावादस्मच्छब्दस्य प्रकृत ईमहेत्युत्तमपुरुषबहुवचनप्रयोगबलाद् वयमिति लभ्यत इत्यभिप्रेत्य योजनामाह **वयमिति** । [१]सुधायामाद्यपद्यव्याख्यावसरे नमामीत्युत्तमपुरुषप्रयोगादेवाहमिति लभ्यत इति । तथा च वयमित्यस्य तमिन्द्रमधीमह इति क्रियया कर्तृकारकत्वेनान्वयो ज्ञेयः । तत्र वा इत्यादिपदानीन्द्रविशेषणपराणीत्यभिप्रेत्य योजनामाह **इत इत्यादिना** । इदंशब्दात्परस्य पञ्चमीविभक्तेः पञ्चम्यास्तसिलिति तसिलादेशे तस्मिन्परत इदंशब्दस्य 'इदम् इश' इतीशादेशे शकारस्य लोपे इत इति रूपसिद्धेः इदंशब्दस्य सन्निहितपरतायाः प्रसिद्धत्वेन प्रकृते दिवो [२]पार्थिवादिति लोकवाचि प्रायपाठेन इदमित्यस्य सन्निहितपृथिवीलोकपरतायाः स्पष्टं प्रतीयमानत्वेन भाष्ये तदर्थस्यानुक्तावपि स्वयं तमनूद्य तस्य सन्निहितपरत्वस्फोरणायापेक्षितशेषपूर्त्या योजनामाह **इतो दिवोऽर्वाक्तनादिति** । पृथिवीलोकादित्यर्थः ।

ऋचि पार्थिवादित्यत्र दिवो वेति पूर्वत्रश्रुतस्य वाशब्दस्यानुषङ्गो वाध्याहारो वा कर्तव्य इत्यभिप्रेत्य योजनामाह **पातालाद्वेति** । **रजसो रञ्जकादिति** । रञ्ज राग इति धातोरौणादिके कसुन्प्रत्यये पञ्चम्येकवचने

---

१. उक्तं च - क ।     २. वादिति पाठः ।

रजस इति रूपसिद्धिरिति भावः । इत इत्यादिषु श्रुता पञ्चमीविभक्तिः सप्तम्यर्थे वर्तत इत्यभिप्रेत्य योजनामाह **एतेषु लोकेषु स्थितमिति** ।

ननु सातिमित्यव्ययस्य लाभस्वरूपिणमित्यर्थपरत्वं कथमित्यत आह **षण्संभक्ताविव्यस्येति**। शब्विकरणे पठितात् षण सम्भक्तावित्यस्माद्धातोः स्त्रियां क्तिनिति क्तिन्प्रत्यये जन सन खलां सन् झलोरित्यात्वे धात्वादेः षः स इति षकारस्य सत्त्वे द्वितीयैकवचने सातिमिति रूपस्य निष्पन्नत्वेन तत्र धात्वर्थपर्यालोचनायां [१]सम्भक्तिः सम्भजनमित्येकार्थत्वप्रतीतेः सातिमित्यस्य लाभरूपिणमित्यर्थपरतया व्याख्यानमुपपन्नमिति भावः । विशेषबलात् लाभरूपिणमिति मत्वर्थोपपत्तिरिति ज्ञेयम् । ननु सुखतत्साधनयोरेव लाभरूपत्वात् भगवतः कथं लाभरूपत्वमित्यत आह **भक्तानामिति** । 'तदेतत्प्रेयः पुत्रात्प्रेयो वित्तात्प्रेयोऽन्यस्मात्सर्वस्मादन्तरतरं यदयमात्मा' इति, तथा 'स एव विष्णुर्भगवान् पुत्रद्रित्त्वात्तथात्मनः । अन्यस्मादपि सर्वस्मात्प्रेष्ठ एव स्वभावतः' इति तथा 'प्राणबुद्धिर्मनः खात्मदेहापत्यधनादयः । यत्सम्पर्कात् प्रिया आसन् अतः कोन्वपरः प्रियः' इत्यादि प्रमाणेषु बृहदारण्यकोपनिषदादौ तद्भाष्यटीकोदाहृतेषु भगवतः सर्ववस्तुभ्योऽतिप्रीतिविषयतया श्रवणेन तस्यैव लाभस्वरूपत्वं भक्तानामिति भावः । ऋच्यधीत्युपसर्गस्य व्यवहिताश्चेति सूत्रेण ईमहे इत्यनेनान्वये सति इङिकावध्युपसर्गं न व्यभिचरत इति शाब्दिकोक्तरीत्या ईमहे इत्यस्य इक्स्मरण, इङ अध्ययन इति धातुद्वयनिष्पन्नत्वेनाधीमह इत्यस्य स्मरणार्थकत्वं वेदादिरूपाध्ययनकरणस्तुत्यर्थत्वं च ज्ञेयमिति प्रदर्शनाय भाष्ये अधीमह इत्यनूदितमित्यभिप्रेत्य अर्थद्वयपरतया तावद्योजनामाह **स्मरामः स्तुमो वेति** ।

---

१. सम्भजनं सम्भक्तिर्लाभः इत्येकार्थत्वप्रतीतेः - क ।

ईमह इत्यस्य स्तुत्यर्थत्वं कथमित्यत आह **इङध्ययन इति** । वेदादिरूपाध्ययनकरणकत्वाच्छ्रुतेरिति भावः । ईमह इत्यस्य स्मरणार्थकत्वे दीर्घ आत्मनेपदं च छान्दसम् । अध्ययनार्थत्वे तदर्थमात्रं छान्दसम् । तस्य ङित्वेनात्मनेपदित्वादिति । ननु पूर्वोक्तरीत्या ईमह इत्यस्य स्मरणाध्ययन-रूपार्थद्वयपरत्वसम्भवेऽपि याञ्चार्थकत्वं कथमित्यत आह **याञ्चाकर्म-स्विति** । ईमह यामीत्यादिषु सप्तदशसु याञ्चाकर्मसु इमह इत्यस्य पाठात् याञ्चार्थकत्वमुपपन्नमिति भावः ॥ ६० ॥

## सूक्तम् – ७

**दशार्चम् । मधुच्छन्दाः । इन्द्रः । गायत्री ।**

**मंत्रः – ६१**

(अ.१, सू.७, मं.१)

**इन्द्रमिद्गाथिनो बृहदिन्द्रमर्केभिरर्किणः ।**
**इन्द्रं वाणीरनूषत ॥**

**पदपाठः**

इन्द्रम् । इत् । गाथिनः । बृहत् । इन्द्रम् ।
अर्केभिः । अर्किणः । इन्द्रम् । वाणीः । अनूषत ॥

**भाष्यम्**

**तमेव गाथिनः साम्ना स्तुवन्त्यृग्भिश्च बह्वृचाः ।**
**बृहन्तमन्यवाणीभिरपि ॥ ६१ ॥**

## टीका

दशार्चमैन्द्रं सूक्तम् ।

बृहत् बृहन्तम् इन्द्रमित् इन्द्रमेव गाथिनः गाथाः गानानि तद्वन्तः सामवेदिन उद्गातारः साम्नाऽनूषत अस्तुवन् । सदा स्तुवन्ति । अर्किणः । अर्का ऋचः तद्वन्तो बह्वृचा होतारश्चार्केभिः ऋग्भिरिन्द्रमनूषत । अन्याश्च यजुराद्या वाणीः वाण्यः । सुपां सुलुक्पूर्वसवर्णेति पूर्वसवर्णः । इन्द्रमनूषत । अत्र करणे कर्तृत्वोपचार इति भावेनान्यवाणीभिरपीति मुख्यार्थो दर्शितः । अध्वर्युप्रभृतय इति शेषः । उभयत्र करणस्य दर्शनात्साम्नेत्यध्याहृतम् ॥ ६१ ॥

## टिप्पणी

ननु ऋचि वाणीरित्यस्य वाणीभिरिति भाष्ये करणार्थकतया व्याख्यानात् टीकायां वाणीति कर्त्रर्थकतया कथं व्याख्यानं क्रियत इत्यत आह **अत्र करण इति** । करणभूते वाणीशब्दार्थ इत्यर्थः । **मुख्यार्थ इति** । यजुरादिवाणीनां स्तुतिसाधनत्वेन करणकारकतया मुख्यार्थत्वात् स एव कण्ठतो भाष्ये दर्शितः । कर्तृत्वरूपोपचरितार्थस्त्वपिना सूचित इति भावः । अपिः पदार्थसम्भावनान्ववसर्गगर्हा समुच्चयेषु इति सूत्रेऽपिशब्दस्य समुच्चयार्थकत्वोक्तेरिति ज्ञेयम् । करणार्थकत्वपक्षे 'सुपां सुलुक्' इति सूत्रे सुपां सुपो भवन्तीति वक्तव्यमिति वार्तिकोक्तेः व्यत्ययेन ऋचि वाणीरिति द्वितीयाविभक्तिरिति ज्ञेयम् ।

ननु करणार्थकत्वे करणस्य कर्तृप्रयोज्यकत्वात् ऋचि भाष्ये च कर्तुरनुपादानात् कथं करणमात्रस्य क्रियान्वय इत्यतः तदपेक्षितशेषमाह

**अध्वर्युप्रभृतय इति**[1] । **शेष इति** । ननु ऋचि साम्नेति पदाभावात् भाष्ये साम्नेति कथमनूदितमित्यत आह **उभयत्रेति** । अर्केभिरर्किण इति वाक्ये वाणीरनूषतेति वाक्ये चार्कशब्दितकरणकारकस्य वाणीशब्दितकरण-कारकस्य च श्रवणेन तत्प्रायपाठबलात् गाथिन इत्यत्रापि ऋच्यध्यूढं साम गायतीति गानयोग्यत्वात्साम्नः तस्यैव करणत्वमिति प्रदर्शनाय भाष्ये साम्नेत्यध्याहारः कृत इति भावः ।

अस्यामृच्युक्तं सर्वं प्रमेयमाथर्वणोपनिषद्भाष्यादौ 'ऋग्भिर्होत्रेण शंसति तथोद्गात्रे स्तुवन्ति ये । विष्णुमेव तथा तस्मै यजुर्भिरपजुह्वति । स्तुव-न्त्याथर्वणश्चैनं सेतिहासपुराणकैः' इत्याद्युदाहृतप्रमाणेषु व्यक्तमिति ज्ञेयम् । तत्र टीकायामौद्गात्रे स्तुवन्तीत्यत्र उद्गातृस्तुतिसाधनत्वेन सामभिरिति शेष इत्युक्तमिति ज्ञेयम् ॥ ६१ ॥

**मंत्रः – ६२**

(अ.१, सू.७, मं.२)

**इन्द्र इद्धर्योः सचा संमिश्ल आ वचो युजा ।**
**इन्द्रो वज्री हिरण्ययः ॥**

**पदपाठः**

इन्द्रः । इत् । हर्योः । सचा । सम्ऽमिश्लः । आ ।
वचःऽयुजा । इन्द्रः । वज्री । हिरण्ययः ॥

---

१. अध्वर्यव इति - क ।

## टीका

दशार्चमैन्द्रं सूक्तम् ।

**बृहत् बृहन्तम् इन्द्रमित् इन्द्रमेव गाथिनः गाथाः गानानि तद्वन्तः सामवेदिन उद्गातारः साम्नाऽनूषत अस्तुवन् । सदा स्तुवन्ति । अर्किणः । अर्का ऋचः तद्वन्तो बह्वृचा होतारश्चार्केभिः ऋग्भिरिन्द्रमनूषत । अन्याश्च यजुराद्या वाणीः वाण्यः । सुपां सुलुक्पूर्वसवर्णेति पूर्वसवर्णः । इन्द्रमनूषत । अत्र करणे कर्तृत्वोपचार इति भावेनान्यवाणीभिरपीति मुख्यार्थो दर्शितः । अध्वर्युप्रभृतय इति शेषः । उभयत्र करणस्य दर्शनात्साम्नेत्यध्याहृतम् ॥ ६१ ॥**

## टिप्पणी

ननु ऋचि वाणीरित्यस्य वाणीभिरिति भाष्ये करणार्थकतया व्याख्यानात् टीकायां वाणीति कर्त्रर्थकतया कथं व्याख्यानं क्रियत इत्यत आह **अत्र करण इति** । करणभूते वाणीशब्दार्थ इत्यर्थः । **मुख्यार्थ इति** । यजुरादिवाणीनां स्तुतिसाधनत्वेन करणकारकतया मुख्यार्थत्वात् स एव कण्ठतो भाष्ये दर्शितः । कर्तृत्वरूपोपचरितार्थस्त्वपिना सूचित इति भावः । अपिः पदार्थसम्भावनान्ववसर्गगर्हा समुच्चयेषु इति सूत्रेऽपिशब्दस्य समुच्चयार्थकत्वोक्तेरिति ज्ञेयम् । करणार्थकत्वपक्षे 'सुपां सुलुक्' इति सूत्रे सुपां सुपो भवन्तीति वक्तव्यमिति वार्तिकोक्तेः व्यत्ययेन ऋचि वाणीरिति द्वितीयाविभक्तिरिति ज्ञेयम् ।

ननु करणार्थकत्वे करणस्य कर्तृप्रयोज्यकत्वात् ऋचि भाष्ये च कर्तुरनुपादानात् कथं करणमात्रस्य क्रियान्वय इत्यतः तदपेक्षितशेषमाह

**अध्वर्युप्रभृतय इति**[1] । **शेष इति** । ननु ऋचि साम्नेति पदाभावात् भाष्ये साम्नेति कथमनूदितमित्यत आह **उभयत्रेति** । अर्केभिरर्किण इति वाक्ये वाणीरनूषतेति वाक्ये चार्कशब्दितकरणकारकस्य वाणीशब्दितकरण-कारकस्य च श्रवणेन तत्प्रायपाठबलात् गाथिन इत्यत्रापि ऋच्यध्यूढं साम गायतीति गानयोग्यत्वात्साम्नः तस्यैव करणत्वमिति प्रदर्शनाय भाष्ये साम्नेत्यध्याहारः कृत इति भावः ।

अस्यामृच्युक्तं सर्वं प्रमेयमाथर्वणोपनिषद्भाष्यादौ 'ऋग्भिर्होत्रेण शंसति तथोद्गात्रे स्तुवन्ति ये । विष्णुमेव तथा तस्मै यजुर्भिरपजुह्वति । स्तुव-न्त्याथर्वणश्चैनं सेतिहासपुराणकैः' इत्याद्युदाहृतप्रमाणेषु व्यक्तमिति ज्ञेयम् । तत्र टीकायामौद्गात्रे स्तुवन्तीत्यत्र उद्गातृस्तुतिसाधनत्वेन सामभिरिति शेष इत्युक्तमिति ज्ञेयम् ॥ ६१ ॥

**मंत्रः – ६२**

(अ.१, सू.७, मं.२)

**इन्द्र इद्धर्योः सचा संमिश्ल आ वचो युजा ।**
**इन्द्रो वज्री हिरण्ययः ॥**

**पदपाठः**

इन्द्रः । इत् । हर्योः । सचा । सम्ऽमिश्लः । आ ।
वचःऽयुजा । इन्द्रः । वज्री । हिरण्ययः ॥

१. अध्वर्यव इति - क ।

भाष्यम्

**हर्यो विमिश्रितः ।**
**रथेऽथवा मनोबुद्ध्योर्वाङ्मात्रेणैव योगिनोः ।**
**सचा सुखेन वज्री च ज्ञानानन्दो हि धातुतः ।**
**हितश्च रमणीयश्च हिरण्यय इतीरितः ॥ ६२ ॥**

टीका

स इन्द्र इत् इन्द्र एव वचोयुजा वचोयुजोः । सुपामित्यनेनैवादेशः । वाङ्मात्रेणैव योगिनोर्हर्योरश्वयो रथे सचा सुखेनैव आसमन्तात्सम्मिश्लः सम्मिश्रो विमिश्रितः सारथेरतिप्रयत्नमन्तरेण रथयोगवद्ध्यामश्वाभ्यां युक्तं रथमारूढ इति यावत् । अथवेन्द्रः परमेश्वरो भक्तशरीरे वचोयुजा वेदवाक्यानुवर्तिनोर्हर्योर्मनोबुद्ध्योः सम्मिश्लः तद्युक्तं शरीरं विशेषतोऽध्यतिष्ठत् । किं च स इन्द्रो वज्री प्रसिद्धे स्फुटम् । विष्णौ व्याख्याति ज्ञानानन्द इति । तदुपपादयति धातुत इति । व्रजगतौ रमुक्रीडायामिति धातुभ्यां भावे डप्रत्ययः । तद्वान् वज्रीत्यर्थः । विशेषादेवेनिप्रत्यय इति ज्ञापयितुं ज्ञानानन्द इत्येव व्याख्यातम् । अर्श आदिभ्योऽज्वा । हितश्चेत्यत्र वर्णलोपादिकमूह्यम् ॥ ६२ ॥

टिप्पणी

आदेश इति । ऋत्विग् दधृगित्यादिसूत्रेण युजिर योग इति धातुनिष्पन्नात् युक्शब्दात्परस्य षष्ठीद्विवचनस्य ङसः सुपां सुलुक् पूर्वसवर्णेत्यादि सूत्रेण आ इत्याकारादेशो युजा इति रूपमिति भावः । अस्य सूत्रस्य पूर्वस्यामृच्यनूदितत्वान्नात्र समग्रानुवादः कर्तव्य इति भावेन सुपामित्यने-

नैवेत्येवकारः प्रयुक्त इति ज्ञेयम् । आदेश इत्यत्र सामादेश इति विभज्य 'अकः सवर्णे दीर्घ' इति दीर्घेणादेश इति निर्देश इति ज्ञेयम् । **तद्युक्तमिति** । मनोबुद्धियुक्तमित्यर्थः । **प्रसिद्धे स्फुटमिति** । वज्रमस्यास्तीति वज्रीति प्रसिद्धेन्द्रे वज्रायुधयुक्तं स्पष्टमित्यर्थः । अतो भाष्ये न व्याख्यातमिति भावः । **तदुपपादयतीति** । ज्ञानानन्दगुणयोगेन वज्रिशब्दार्थत्वं विष्णोरुपपादयतीत्यर्थः ।

धातुत इत्यत्र धातुभ्यामिति पञ्चमीद्विवचनान्तात्तसिल्प्रत्यय इत्यभिप्रेत्य योजनामाह **व्रजगतावित्यादिना** । गत्यर्थानां ज्ञानार्थत्वात् प्रकृते व्रजधातोर्ज्ञानार्थकत्वमिति भावः । भावे डप्रत्यये 'चुटू' इति डकारलोपे डित्यभस्यापि टिलोप इति । रम् इत्यत्रामित्यस्य लोपे वज्रशब्दनिष्पत्तिरिति भावः । **तद्वानिति** । वज्रशब्दितज्ञानानन्दवान् इत्यर्थः । यद्यपि द्वितीयाध्याये तथा तदस्तु सोमपा इत्यस्यामृचि भाष्ये वज्रो ज्ञानं व्रजगतावित्यस्मादित्येकधातुनिष्पन्नत्वं वज्रशब्दस्योक्ते विवृतं च तत्र टीकायां व्रजगतावित्यस्माद्भावे रप्रत्यये कृते गत्यर्थानां ज्ञानार्थकत्वात् वज्रो ज्ञानमिति लभ्यते । **तदस्यास्तीति वज्रीति** । तथापि तत्र भाष्ये तत्तन्मनोऽभीष्टकरणे भगवतः सार्वज्ञरूपसामर्थ्योपेतत्वकथनाय वज्रशब्दस्य ज्ञानार्थकत्वमेकधातुनिष्पन्नत्वं चोक्तम् ।

अत्र सर्वजीवगतमनोबुद्धिप्रेरकत्वोपयुक्तसार्वज्ञोपपादनाय स चेत्युक्तसुखरूपत्वोपपादनाय च तथा 'कश्छन्दसां योगमावेद धीरः' इति श्रुतेः वैदिकपदेषु योजनप्रकारवैचित्र्यप्रदर्शकत्वरूपस्वसामर्थ्यप्रदर्शनाय च वज्रशब्दस्य धातुद्वयनिष्पन्नत्वं ज्ञानानन्दोभयार्थकत्वं चोक्तमिति ज्ञेयम् ।

वैदिकपदेषु वैचित्र्यप्रदर्शनायैवानुव्याख्याने 'ओतत्ववाची ह्योङ्कारो वक्त्यसौ तद्गुणोतताम्' इत्यनेन ओंपदस्यावधातुनिष्पन्नत्वं वेञ् तन्तुसन्तान इति धातुनिष्पन्नत्वं चोक्तं विवृतं च तत्र सुधायाम् । ननु गुणोततामिति कथमित्यादिना वैचित्र्यं तु धातुद्वयजत्वसूचनार्थमित्यन्तेनेति ज्ञेयम् । विस्तृतं च सुधाव्याख्याने सुधापरिमले ॐपदस्य धातुद्वयनिष्पन्नरूपत्वमिति । ...नु[1] ऋचि वज्रमस्यास्तीति वज्रीति वज्रशब्दस्य मत्वर्थे 'अत इनि ठनौ' इति विहितेन इन्प्रत्ययेन निर्देशात् तद्व्याख्यानपरभाष्येऽपि ज्ञानं चानन्दश्च ज्ञानानन्दौ तावस्य स्त इति ज्ञानानन्दीति निर्देशः कर्तव्यः । तत्कथं ज्ञानानन्द इति निर्देशः कृत इत्यत आह **विशेषादेवेति** ।

नेह नानेत्यादिप्रमाणेषु गुणगुणिभेदस्य विष्णौ निषिद्धत्वेन भेदहीने त्वपर्यायशब्दान्तरनियामकः विशेषो नाम कथितः, इत्युक्तसामर्थ्यापरनामकविशेषशक्त्यैव भगवति मत्वर्थो सम्बन्धो ज्ञेयः । न तु दण्डीत्यादिवद्भेदेनेति ज्ञापनाय भाष्ये ज्ञानानन्द इत्यभेदेन व्यपदेशः कृत इति भावः । विशेषबलादेव भाष्ये ज्ञानानन्द इत्यत्र मत्वर्थप्रत्यय इत्यभिप्रेत्य योजनान्तरमाह **अर्श आदिभ्य इति** । मतुब्प्रकरणे 'अर्श आदिभ्योऽजि'ति सूत्रेण अर्शस इत्यादिरूपसिद्ध्यर्थं मत्वर्थेऽच्प्रत्ययविधानेन ज्ञानानन्दशब्दादप्यच्प्रत्यये चकारलोपे यस्येति चेत्यकारलोपे ज्ञानानन्द इति रूपसिद्ध्या वज्रपदेन समानार्थकत्वमिति भावः ।

ननु हितश्च रमणीयश्चेत्यर्थे हिरण्मय इति कथं रूपसिद्धिरित्यत आह **हितश्चेत्यत्रेति** । हितशब्दे तकाराकारयोर्लोपः । रमु क्रीडायामिति धातोर्ण्यर्प्रत्यय अन्तलोपे वा रमणीयशब्दे मकाराकारयोर्लोपे ईकारस्य यशब्द-

---

१. अत्र 'ननु' इति भाति ।

विकारे वा सति हिरणमयशब्दनिष्पत्तिरित्यूह्यमित्यर्थः[1] । यद्यप्यङ्गपादान्ते 'ऋत्विग्व्यवास्त्री' इति सूत्रे हिरणमयशब्दात् तस्य विकार इति विकारार्थे मयट्प्रत्यये सति तस्य मयटो मकारस्य लोपे हिरणमय इति रूपसिद्धिरिति वृत्त्यादावुक्तः, तथापि तत्र हिरण्ययशब्दस्य रूढिवृत्त्याश्रयणेन तथोक्तत्वात् प्रकृते यौगिकव्युत्पत्त्याश्रयणेन वर्णलोपादिकमूह्यमित्युक्तमिति ज्ञेयम् ।

द्वितीयाध्याये [2]बिभ्रद्द्रापिमित्यस्यामृचि हितं च रमणीयं च चक्रं स्वर्णं च वर्णतः इति भाष्यव्याख्यावसरे टीकायां हितं च रमणीयं चेति भाष्योक्तरीत्या हिरण्यशब्दस्य यौगिकव्युत्पत्तिं प्रदर्श्य तत्र वर्णलोपादिकमत्रोक्तरीत्योह्यमित्यभिप्रेत्य स्वर्णं च वर्णत इति भाष्यपदानुसारेण हिरण्ययं वेति निपातनात् साधुरिति समाधानकथनेन रूढिपक्षाश्रयणेनैव वृत्त्यादावुक्तनिपातनत्वोक्तेश्चेति[3] ज्ञेयः ॥ ६२ ॥

**मंत्रः – ६३**

(अ.१, सू.७, मं.३)

**इन्द्रो॑ दी॒र्घाय॒ चक्ष॑स॒ आ सूर्यं॑ रोहयद्दि॒वि ।**
**वि गोभि॒रद्रि॑मैरयत् ॥**

**पदपाठः**

**इन्द्रः॑ । दी॒र्घाय॑ । चक्ष॑से । आ । सूर्य॑म् । रो॒ह॒य॒त् ।**
**दि॒वि । वि । गोभिः॑ । अद्रि॑म् । ऐ॒र॒य॒त् ॥**

---

१. हितश्च रमणीयश्चेति हिरण्ययः, हितशब्दे तलोपश्च रमु क्रीडायामिति धातोः (रमणीयार्थे) न्ययप्रत्येऽन्तलोपश्च 'ऋत्व्यवास्त्व्यवास्त्वमाध्वी हिरण्ययानि च्छन्दसि' इति निपातनात् म.म.।

२. २८१ मंत्र, अ.२, सू.२५ । ३. निपातनोक्तेश्चेति - क ।

**भाष्यम्**

**दीर्घकालं दर्शनाय सूर्यमारोहयद्दिवि ।**
**ज्ञानैरादरयोग्यं च प्राणात्मानं समैरयत् ॥ ६३ ॥**

**टीका**

स इन्द्रो दीर्घाय चक्षसे जनानामहर्लक्षणं दीर्घकालं पदार्थदर्शनाय सूर्यं दिवि गगने आरोहयत् आरोपितवान् । किञ्च । आद्रियत इत्यद्रिः । अद्रिं आदरयोग्यं प्राणात्मानं गोभिर्ज्ञानैः व्यैरयत् ज्ञानयुक्तं प्रावर्तयत् । प्रसिद्धेन्द्रस्तु गोभिर्वज्रैरद्रिं पर्वतं वज्रेण पर्वतान्व्यैरयत् हतवान् । यद्वोदकैर्वृष्ट्या पर्वतं हतवान् । अथवोदकैर्निमित्तैरुदकार्थमिति यावत् । (अद्रिं) मेघं व्यैरयत् नियमितवान् ॥ ६३ ॥

**टिप्पणी**

'स्वर्गेषु पशुवाग्वज्र दिङ्नेत्र भूजले । लक्ष्य दृष्टो स्त्रियां पुंसि गौ' इत्यमरोक्तेर्गोशब्दस्य बहुवचनत्वं चेत्युपेत्य[1] क्रमेण योजनामाह **गोभिर्वज्रैरित्यादिना** । द्वितीयाध्याये त्वं नोऽग्ने तव देव पायुभिरित्यस्यामृचि त्वं न[2] इति बहुवचनमवयवबहुत्वापेक्षयेति टीकायामुक्तरीत्या प्रकृतेऽपि वज्रावयवबहुत्वापेक्षया गोभिरिति बहुवचनम् । वज्रमित्येकवचनं व्यत्ययेन बहुवचनार्थे वर्तत इत्यभिप्रेत्य योजनामाह **वज्रेण पर्वतानिति** । ईर पेषण इति चुरादिगणे पठितस्य लङि व्यवहिताश्चेति वीत्युपसर्गान्वये सति व्यैरयदिति रूपमित्यभिप्रेत्य योजनामाह **व्यैरयत् हतवानिति** । पक्षिणः पर्वता पूर्वमक्षिण्वन् भुवनत्रयम् । वज्री वज्रेण चिच्छेद पक्षान्निश्शेष-

---

१. गोशब्दवज्रपरत्वं जलपरत्वं चे युपेत्य - क ।

२. तन्न इति - क ।

भूभृताम्[1] प्रवक्षण अभिनत्पर्वतानामित्यादिप्रमाणेषु वज्रेण पर्वतहननस्य प्रसिद्धत्वादिति भावः ।

**वृष्ट्या पर्वतमिति** । गिरयो वर्षधाराभिर्हन्यमाना न विव्यथुः । अभिभूयमाना व्यसनैर्यथा अधोक्षजचेतसः इत्यादि भागवताद्युक्तप्रमाणेषु वृष्ट्या हननं प्रसिद्धमिति भावः । अद्रिशब्दो मेघवाचितयाभिधानसिद्ध इत्यभिप्रेत्य योजनामाह **मेघमिति** ।

**नियमितवानिति** । बन्धविमोचनेन प्रेरितवानित्यर्थः । 'इत्थं मघवताज्ञप्ता मेघा निर्मुक्तबन्धनाः' इति भागवतादिप्रमाणेषु[2] मेघप्रेरकत्वमिन्द्रे प्रसिद्धमिति भावः ॥ ६३ ॥

**मंत्रः – ६४**

(अ.१, सू.७, मं.४)

**इन्द्र॒ वाजे॑षु नोऽव स॒हस्र॑प्रधनेषु च ।**
**उ॒ग्र उ॒ग्राभि॑रू॒तिभि॑ः ॥**

**पदपाठः**

**इन्द्र॑ । वाजे॑षु । न॒ः । अ॒व॒ । स॒हस्र॑ऽप्रधनेषु । च॒ ।**
**उ॒ग्रः । उ॒ग्राभि॑ः । ऊ॒तिऽभि॑ः ॥**

**भाष्यम्**

**बहुभिर्युध्यमानेषु युद्धेष्वपि सदाऽव नः ।**
**दुष्टोग्रैः सदभिप्रायैः ॥ ६४ ॥**

---

१. पक्षान् चिच्छेदभूभृताम् । २. भारतादिप्रमाणेषु - क ।

## टीका

हे इन्द्र ! दुष्टानामुग्रस्त्वं वाजेषु युद्धेषु अस्मासु सहस्रप्रधनेषु सत्सु सहस्रेण प्रधनं येषां ते तथोक्ताः । तेषु बहुभिरपि युध्यमानेषु सत्स्विति यावत् । नोऽस्मानुग्राभिरूतिभिः । दुष्टानामुग्रैः स्वयं तु सद्भिरनुग्रैरेवाभिप्रायैरव सदा रक्ष ॥ ६४ ॥

## टिप्पणी

ऋच्युग्राभिरित्यत्र दुष्टानामिति शेषः पूरणीय इति प्रदर्शनाय भाष्ये दुष्टोऽग्रैरित्युक्तम् । दुष्टपदमुग्र इत्यत्रापि शेषत्वेन पूरणीयमित्यभिप्रेत्य योजनामाह **दुष्टानामुग्र इति** । सदभिप्रायैरित्यत्रेवात्रापि स्वयं त्वस्मान् प्रत्यनग्र इति द्रष्टव्यमिति भावः । उग्रशब्दप्रतिसम्बन्धितया भाष्ये सदभिप्रायैरित्यनेन पूरितं तत्पदमनूद्यार्थमाह[1] **सद्भिरनुग्रहैरिति** । सत्पद-स्वारस्यकथनार्थं स्वयं त्वित्युक्तमिति ज्ञेयम् । अव रक्षण गतिकान्ति प्रीति तृप्त्यवगमप्रवेशश्रवणस्वाम्यसामर्थ्ययाचनक्रियेच्छादीप्त्यवाप्त्यालिङ्गन-हिंसादानदहनभववृद्धिष्विति धातुगणे भावशब्दिताभिप्रायार्थकतया पठिता-दवधातोः निष्पन्नस्येतिशब्दस्याभिप्रायार्थकत्वेन प्रकृते ऊतिभिरित्यस्याभि-प्रायार्थकत्वमिति प्रदर्शनाय भाष्ये अभिप्रायैरित्युक्तमित्यभिप्रेत्य योजनामाह **ऊतिभिरभिप्रायैरिति** ॥ ६४ ॥

---

१. सदभिप्रायैरित्यनेनोतिभिरित्यत्र शेषत्वेन पूरितं सत्पदमनूद्यार्थमाह - क)

**मंत्रः – ६५**

(अ.१, सू.७, मं.५)

**इन्द्रं वयं महाधन इन्द्रमर्भे हवामहे ।**
**युजं वृत्रेषु वज्रिणम् ॥**

**पदपाठः**

इन्द्रम् । वयम् । महाऽधने । इन्द्रम् । अर्भे ।
हवामहे ॥ युजम् । वृत्रेषु । वज्रिणम् ॥

**भाष्यम्**

**महदल्प[१]धनार्थिनः ।**
**हवामहेऽरिवर्जं तं तमसां प्रतियोगिनम् ॥ ६५ ॥**

**टीका**

वृत्रेषु तमस्स्वज्ञानेषु युजं विरोधितया घटमानं तमसां प्रतियोगिनम् । प्रसिद्धेन्द्रविषये बहुवचनमाद्यर्थे । वज्रिणं वृजीवर्जन इत्यस्येदं रूपम् । भीतिवशेनारिभिर्वर्ज्यं तं इन्द्रं महाधने महाधनार्थं मोक्षार्थम् अर्भे अल्पे च धने अल्पधनार्थं सांसारिकपुरुषार्थार्थं महदल्पधनार्थिनो वयं हवामहे । आह्वयामः ॥ ६५ ॥

**टिप्पणी**

अस्य पीत्वा शतक्रतो इत्यस्यामृचि भाष्ये अवृतेरेव वृत्राणि ह्यज्ञानानीति वृत्रशब्दस्य अज्ञानवाचितया उपपादितत्वात् प्रकृतेऽपि

---

१. फलार्थिनः – पा० ।

तमसमित्यज्ञानवाचितमश्शब्दप्रयोगेण वृत्रशब्दव्याख्यानाच्च वृत्रशब्दस्याज्ञानवाचित्वमित्यभिप्रेत्य योजनामाह **वृत्रेषु तमस्स्वज्ञानेष्विति** । ननु द्वितीयाध्याये नीचा वया इत्यस्यामृचि भाष्ये वृत्र ह्यभूद्दनुजः कश्यपाच्च पापात्मासौ वैष्णवस्त्वष्ट्रजात इति वृत्रशब्दितयोर्द्वित्वकथनेनेन्द्रेण हतत्वोक्ते द्व्येकयोर्द्विवचनैकवचन इति सूत्रेण द्वित्वविवक्षायां द्विवचनं भवतीत्यभिधाने बहुषु बहुवचनमित्युक्तबहुवचनानुपपत्तेर्वृत्रेष्विति कथं बहुवचनमित्यत आह **बहुवचनमाद्यर्थ इति** ।

फणां च सप्तानां[1], वृद्भ्यः स्यसनोः[2] इत्यादिव्याकरणसूत्रेषु बहुवचनमाद्यर्थ इति वृत्तिमर्य्यादावुक्तत्वेन तत्र यथा फणामित्यस्य फणादीनामित्यर्थः, वृद्भ्य इत्यस्य वृतादिभ्य इत्यर्थः स्वीकृतः, तथा प्रकृतेऽपि वृत्रेष्वित्यस्य वृत्रादिष्वित्यर्थस्वीकारेण वृत्रादिप्रभृतिष्वसुरेषु युजं विरोधितया घटमानमित्यर्थो ज्ञेय इति भावः ।

ननु वज्री च ज्ञानानन्दो हि धातुत इति लोपे उपधाऋकारस्य रपरत्वाभावे द्वितीयैकवचने वज्रिणामिति रूपसिद्धिरिति भावः[3] । अरिवर्ज्यत्वे हेतुत्वेनापेक्षितशेषपूर्त्या योजनामाह **भीतिवशेनेति** । इन्द्रशब्दितभगवन्तं प्रसिद्धेन्द्रं[4] च दृष्ट्वा बाह्याभ्यन्तरस्थाः सर्वेऽपि शत्रवो भयेन पलायिता भवन्तीति पर्यवसितार्थो ज्ञेय इति भावः । युद्धादौ शत्रूणां

---

१. पा.सू. ६-४-१२५ । २. पा.सू. १-३-९२ ।

३. वज्री हि ज्ञानानन्दो हि धातुत इति ज्ञानानन्दवत्त्वार्थकत्वेन वज्रिशब्दस्य व्याख्यातत्वात् वर्जत्वार्थलाभः कथमित्यत आह **वृजी वर्जन इत्यस्येति** । अस्माद्धातोरौणादिके रिनि प्रत्यये कृते प्रत्ययान्तस्येकारस्योपदेशेऽजनुनासिक इति लोपे उपधा ऋकारस्याकारे रपरत्वाभावे द्वितीयैकवचने वज्रिणमिति रूपसिद्धिरिति भावः । - क) ४. इन्द्रं च - क ।

भयजननेन पलायनकरणे सामर्थ्यसद्भावोपपादनाय वर्ज्यत्वार्थकतया वज्रि-शब्दव्याख्यानं कृतमिति ज्ञेयम् ।

प्रसिद्धेन्द्रपक्षे वज्रिणामित्यस्य वज्रायुधयुक्तमित्यप्यर्थो ज्ञेयः । अस्यार्थस्य स्पष्टत्वाद्भाष्यटीकयोर्न प्रदर्शित इति ज्ञेयम् । सप्तम्यधिकरणे च इति सूत्रे निमित्तात्कर्मसंयोगे सप्तमी वक्तव्येति वार्तिकोक्तवृत्त्यादौ 'चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम् । बालेषु चमरीं हन्ति सीम्नि पुष्कलको हतः' इत्युदाहृतत्वेन तत्र यथा चर्मणीत्यादेः चर्माद्यर्थमित्यर्थः स्वीकृतः तथा प्रकृतेऽपि ऋचि महाधने अर्भे इत्यत्र निमित्तसप्तम्याविति प्रदर्शनाय भाष्ये महदल्पधनार्थिन इत्युक्तमित्यभिप्रेत्य योजनामाह **महाधने महाधनार्थमित्यादिना** ।

**महदल्पेति** । महच्चाल्पं च महदल्पे ते च ते धने च, ते एवार्थौ प्रयोजने, ते येषां स्तः इतीति मतुबर्थाश्रयणेन 'अत इनिठनौ' इति सूत्रविहितेन्प्रत्यया-न्ततया महदल्पधनार्थिन इति शब्दनिष्पत्तिप्रकारो ज्ञेयः ॥ ६५ ॥

**मंत्रः – ६६**

(अ.१, सू.७, मं.६)

**स नो वृषन्नमुं चरुं सत्रादावन्नपा वृधि ।**
**अस्मभ्यमप्रतिष्कुतः ॥**

**पदपाठः**

सः । नः । वृषन् । अमुम् । चरुम् । सत्राऽदावन् ।
अप । वृधि । अस्मभ्यम् । अप्रतिऽस्कुतः ॥

**भाष्यम्**

**अस्मदीयं चरुं भोज्यमानन्दं त(त्व)मपावृणु ।**
**मोक्षगं सर्वदाऽतस्त्वमप्रतिद्वन्द्व नो वृषन् ॥ ६६ ॥**

**टीका**

हे वृषन् ! वर्षितः श्रेष्ठवा सत्रादावन् सत्राशब्दः सर्वपर्यायः सहार्थो वा । तदुपपदाद्ददातेर्वनिप् । हे सर्वदातः ! सहार्थत्वेऽर्थतः सर्वेष्टदातृत्वमेव लभ्यते । त्वं नोऽस्मदीयममुं तं परोक्षं मोक्षगं चरुम् । चरतिर्भक्षणार्थः । ततः कर्मण्युकारः । भोज्यमनुभवनीयमानन्दमस्मभ्यं अस्मदर्थमपावृधि अविद्यावृतमपावृणु । यतस्त्वमेवाप्रतिष्कुतः । ष्कुञ् आप्रवणे । आप्रवणमागमनम् । प्रतिष्कुतः प्रत्यागतः । नैवं त्वमित्यप्रतिष्कुतः । वैरिभिर्युद्धेष्वप्रत्यागतः । अप्रतिद्वन्द्वः अप्रतिद्वन्द्वेति लुप्तविभक्तिको निर्देशः । प्रसिद्धेन्द्रं प्रति तु चरुं हविरपावृधि स्वीकारेण सफलीकुरु । यद्वा चरुं मेघम् । वज्रः चरुः वराह इति मेघनामसु पाठात् । नोऽस्मदर्थमेव जातमस्मभ्यमपावृधि उद्घाटयेति योज्यम् । ॥ ६६ ॥

**टिप्पणी**

**सत्रा शब्द इति** । अव्ययानामनेकार्थत्वात्प्रकृते सत्राशब्दः सर्वार्थकतया सर्वशब्दपर्याय इति भावः । **सहार्थो वेति** । सत्राशब्द इत्यन्वेति । 'साकं सत्रा समं सह' इत्यमरोक्तेः । सत्राशब्दः सहार्थे वर्तत इति भावः । ननु सत्राशब्दस्य सर्वपर्यायत्वपक्षे सत्रादावनित्यस्य सर्वेष्टदातृत्वलाभेऽपि प्रकृते सहार्थत्वे कथं सर्वेष्टदातृत्वार्थलाभ इत्यत आह **सहार्थत्व इति** ।

वायविन्द्रश्च सुन्वत आयातमुपनिष्कृतमित्यत्र यजमानकृतपूजाद्यनुसारेण ईश्वरः फलदातेति भाष्यटीकयोरर्थकथनवत् प्रकृतेऽपि सत्रा सह पूजनादिसाधनानुष्ठानेन सहैव तदनन्तरमेव दातेत्युक्तेः ददातेः सकर्मकत्वेन कर्मकारकतया सर्वेषां पुरुषार्थानां प्राप्तत्वात् मोक्षादिसकलपुरुषार्थस्य प्रार्थनीयत्वाद् भगवतः तादृशफलदाने सामर्थ्यसद्भावात् सङ्कोचे प्रमाणाभावाच्चोक्तोपपत्तिरूपार्थतः सर्वेष्टदातृत्वमेव लभ्यत इति भावः ।

नन्वप्रतिष्कुत इति व्याख्येयपदे सविसर्गतया निर्देशात् तद्व्याख्यानपरेऽप्यप्रतिद्वन्द्वपदे सविसर्गतया निर्देशे कर्तव्ये कथमप्रतिद्वन्द्वेति भाष्ये निर्देशः कृतः । न चाविभक्तकतया निर्दिष्टत्वेन विभक्तिनिमित्तकविसर्गस्याप्राप्तिरिति वाच्यम्, न केवला प्रकृतिः प्रयोक्तव्या नापि केवलः प्रत्यय इति शाब्दिकोक्तरीत्या केवलप्रकृतिनिर्देशस्य कर्तुमशक्यत्वात् । न चाप्रतिद्वन्द्वेति सम्बुध्यन्ततया निर्देशः कृत इति वाच्यम्, तथापि व्याख्यानव्याख्येयभावानुपपत्तिरित्यत आह **अप्रतिद्वन्द्वेति** ।

**लुप्तविभक्तिको निर्देश इति** । द्वन्द्वशब्दात्प्रथमैकवचन सुप्रत्यये तस्य ससजुषोरुरिति रुत्वे भो भगोऽधोऽपूर्वस्य योशीति रोर्यकारादेशे तस्य यकारस्य लोपः शाकल्यस्येति सूत्रादुत्तरत्र पठितेन हलि सर्वेषामिति सूत्रेण लोपे देवा नम्या इति संहिताकाले लुप्तविभक्तिकत्वेन पदकाले 'देवाः' इति सविसर्गतया निर्देशवदप्रतिद्वन्द्व नो इत्यत्रापि पदकाले सविसर्गतया अप्रतिद्वन्द्व इति निर्देशसम्भवेन शास्त्रीयसमाधानेनैव निर्देशस्योपपन्नत्वाद् उपपन्नं व्याख्यानव्याख्येयभावरूपत्वमिति भावः । लुप्तयकारस्य विभक्तिस्थानिकरुत्वादेशरूपत्वात् लुप्तविभक्तिकमिति टीकायामुक्तमिति ज्ञेयम् ।

॥ ६६ ॥

मंत्रः – ६७

(अ.१, सू.७, मं.७)

**तुञ्जेतुंञ्जे य उत्तरे स्तोमा इन्द्रस्य वज्रिणः ।**
**न विन्धे अस्य सुष्टुतिम् ॥**

पदपाठः

तुञ्जेऽतुंञ्जे । ये । उत्ऽतरे । स्तोमाः । इन्द्रस्य ।
वज्रिणः । न । विन्धे । अस्य । सुऽस्तुतिम् ॥

भाष्यम्

**त्वयैव प्रेरणे जाते तत्र तत्र च उत्तराः ।**
**तेऽपि स्तोमाः सुष्टुतित्वमस्यानन्त्यान्न चाप्नुयुः ॥६७॥**

टीका

तुञ्जतिर्गतिकर्मा दानकर्मा वा । ततश्च त्वया क्रियमाणे तुञ्जे तुञ्जे गमने दाने वा क्रियाया इति शेषः । प्रेरण इति तु तात्पर्यम् । यद्वा अनेकार्थत्वाद्धातूनां तुञ्जतिः प्रेरणे वर्तते । तुञ्जेतुञ्जे तत्र तत्र स्तोतृषु त्वयैव प्रेरणे जाते सति ये प्रवृत्ता उत्तरे उत्तरा उत्तमाः स्तोमा । स्तुतिविशेषास्तेऽप्यस्येन्द्रस्य तव सुष्टुतिं सुष्टुतित्वं निविन्धे वर्ण-व्यत्यासादिना न विन्दन्ते नाप्नुयुः आनन्त्यात् । गुणैरनन्तत्वेन सर्ववर्णकत्वाभावादिति भावः ॥ ६७ ॥

टिप्पणी

तुञ्जतिरिति । तुजिधातुर्गतिः कर्म क्रियावाच्यं यस्य स गतिकर्मेत्यर्थः । दानेति । दान कर्म क्रियावाच्यं यस्य स दानकर्मेत्यर्थः ।

**तुञ्जतिरित्यन्वेति** । तुजिधातोरिदित्वेन नुमा सह तुञ्जतिरिति टीकायां निर्देशः कृत इति ज्ञेयम् । तुजि हिंसायामिति हिंसार्थकतया भीमसेन-धातुपाठेऽपि धातूनामनेकार्थत्वमादाय 'इन्द्राया हि तूतुजान' इत्यस्यामृचि वेगवांस्तूतुजानः स्यादिति तुजि धातोर्गत्यर्थतया व्याख्यानात् प्रकृतेऽपि गत्यर्थत्वं वेदनिघण्टौ दानार्थकतया पाठाच्च दानार्थत्वं च तुजिधातोरिति भावः । दान कर्म किमित्याकाङ्क्षायामपेक्षितशेषमाह **क्रियाया इति शेष इति** । पक्षद्वयेऽपि प्रेरणार्थकतया कथं व्याख्यानं भाष्ये क्रियत इत्यत आह **प्रेरण इति तु तात्पर्यमिति** । तुञ्जे तुञ्ज इति वीप्सार्थं दर्शयति **तत्र तत्रेति** । सुष्टुतिमिति भावप्रधानो निर्देश इत्यभिप्रेत्य योजनामाह **सुष्टुतित्वमिति** । ननु विदॢ लाभ इति धातोः स्वरितत्वेन लभे विन्दत इत्युभयपदित्वोक्तेः प्रकृते लडात्मनेपदप्रथमपुरुषबहुवचने सति विन्दत इति निर्देशः स्यात्, कथं विन्ध इति ऋचि निर्देश इत्यत आह **वर्णव्यत्यासा-दिनेति** ।

विन्दन्त इत्यत्र दकारस्य धकाररूपवर्णव्यत्यये शब्विकरणस्य लोपे प्रत्ययगतस्यान्त इत्यंशस्य च लोपे विन्ध इति रूपसिद्धेः तस्य नकार-सम्बन्धेन विन्दन्त इत्यर्थपरत्वमिति भावः । **सर्ववर्णकत्वाभावादिति** । यतो वाचो निवर्तन्त इत्यादिप्रमाणैः सकलगुणवर्णने सामर्थ्याभावस्यावगतत्वेन वेदाद्युक्तस्तुतिविशेषाणां भगवद्गतसकलगुणविषयकत्वाभावादित्यर्थः ॥ ६७ ॥

**मंत्रः – ६८**

(अ.१, सू.७, मं.८)

**वृषा॑ यू॒थेव॒ वंस॑गः कृ॒ष्टीरि॑य॒र्त्योज॑सा ।**

**ईशा॑नो॒ अप्र॑तिष्कुतः ॥**

पदपाठः

वृषा । यूथाऽइंव । वंसंगः । कृष्टीः । इयर्ति ।
ओजंसा । ईशांनः । अप्रंतिऽस्कुतः ॥

भाष्यम्

**प्रतिवीरो वृषा वंसस्तद्गन्तावंसगौ विभीः ।**
**यूथान्याकर्षति यथा प्रजाः प्रेरयति प्रभुः ।**
**अल्पस्यापि प्रसिद्ध्यैव दृष्टान्तत्वं तु (च) युज्यते ॥६८॥**

टीका

एकस्य वृषस्य यः प्रतिवीरो परो वृषा स वंस उच्यते । तं वंसं प्रति यो विभीः युद्धाय गच्छति स वृषा वंसगः । स यूथेव यूथानीव यथागवां यूथान्याकर्षति एवमीशानः प्रभुरप्रतिष्कुतः अप्रतिद्वन्द्व इन्द्रः कृष्टीः प्रजाः ओजसा सामर्थ्येनेयर्ति । गतिकर्मायम् । अन्तर्णीतण्यर्थः । गमयति प्रेरयतीति यावत् । नन्वीश्वरस्याल्पो वृषा दृष्टान्तः कथमुच्यत [१]इत्याह **अल्पस्यापीति** । दृष्टान्तो हि प्रत्यायनार्थं वक्तव्यः । तच्च प्रसिद्धेनैव भवतीति भावः ॥ ६८ ॥

टिप्पणी

गतिकर्मायमिति । अयमियतीत्यत्र प्रकृतिभूतो धातुः कर्म क्रिया वाच्यं यस्य स गतिकर्मा गमनक्रियाप्रतिपादक इत्यर्थः । तथा च श्लुविकरणे पठितात् ऋ गताविति धातोः अन्तर्णीतण्यर्थात् लटि तिपि शब्विकरणे तस्य श्लौ सति श्लाविति द्विवचने सति अर्तिपिपर्त्योश्च इति सूत्रेणाभ्यासस्येकारे

१. तत्राह – पा० ।

तस्येकारस्याभ्यासस्य सवर्ण इतीयङादेशो ऋकारस्य गुणे रपरत्वे च इयतीति रूपसिद्धिरिति भावः । **प्रत्यायनार्थमिति** । श्रोतुः सम्यग्बोधनार्थमित्यर्थः । **तच्चेति** । प्रत्यायनशब्दितबोधनं च प्रसिद्धदृष्टान्तकथनेनैव भवतीत्यर्थः । उपपादितं चाल्पस्यापि दृष्टान्तत्वं भक्तिपादे 'बुध्यर्थः पादवत्' इति सूत्रे । विवृतं च तत्र भाष्ये गमनिकापूर्वमिदं सूत्रम् । तथा हि तत्रत्यभाष्यम् अप्रसिद्धस्य कथमानन्द इत्यादि व्यपदेश इत्यतो वक्ति बुध्यर्थः पादवत्, जीवेश्वरसम्बन्धज्ञापनार्थं प्रसिद्धोऽपि[1]पादो यथा पादशब्देन व्यपदिश्यते पादोऽस्य विश्वा भूतानीति तथा लौकिकोऽपि ज्ञानादिस्तच्छब्दैरेव भण्यते । ज्ञापनार्थाय लोकस्य यथा राजेव राडिति[2] इति च पाद्मे इति ॥ ६८ ॥

**मंत्रः – ६९**

(अ.१, सू.७, मं.९)

**य एकश्चर्षणीनां वसूनामिरज्यति ।**
**इन्द्रः पञ्च क्षितीनाम् ॥**

**पदपाठः**

**यः । एकः । चर्षणीनाम् । वसूनाम् । इरज्यति ।**
**इन्द्रः । पञ्च । क्षितीनाम् ॥**

**भाष्यम्**

**राजा भवति वित्तानां प्रजानां चैक एव यः ।**
**देवगन्धर्वदैतेयपितृमानुषभेदतः ।**

---

१. अप्रसिद्धोऽपि - क ।   २. देवराडिति - क ।

**प्रजानामपि पञ्चानां सामान्याच्च विशेषतः ॥ ६९ ॥**

## टीका

य इन्द्र एक एव चर्षणीनां प्रजानां वसूनां वित्तानां च पञ्चक्षितीनां देवादिभेदेन पञ्चविधानां प्रजानामपीरज्यति ऐश्वर्यकर्मायं राजा भवति। सकृष्टीरियर्ति इति पूर्वेण सम्बन्धः । चर्षणीनामित्यादि षष्ठी द्वितीयार्थे । चर्षणीनां पञ्चक्षितीनां चेति पुनरुक्तिरित्यत आह **सामान्यादिति** । चर्षणीनामिति समान्यादुक्तं पञ्चक्षितीनामिति च विशेषतः । अतो नोक्तदोषः ॥ ६९ ॥

## टिप्पणी

**ऐश्वर्यकर्मायमिति** । इरज्यतीत्यत्र प्रकृतिभूतो धातुः ऐश्वर्यं कर्म क्रियाप्रतिपाद्यं यस्य स ऐश्वर्यार्थप्रतिपादक इत्यर्थः । इरज्जति पच्यते क्षीयति राजत इति चत्वार ऐश्वर्यकर्माण इति वेदनिघण्टौ इरज्जधातोरैश्वर्यार्थतया पाठादिति भावः । तथा च इरज्ज ऐश्वर्य इति धातोः 'कण्ड्वादिभ्यो यक्' इति यक्प्रत्यये इरज्यतीति रूपसिद्धिरिति भावः ।

नन्वैश्वर्यस्य नियमनपालनादिरूपत्वेन इरज्यतीत्यस्य नियमनादिकर्मकारकसापेक्षत्वात् कर्मणि द्वितीयेति द्वितीयाप्रसक्तेः कथं चर्षणीनामित्यादि षष्ठीप्रयोग इत्यत आह **चर्षणीनामित्यादीति** । व्यत्ययो बहुलमिति सुप् तिङादीनां व्यत्ययकथनादिति भावः । न च राजा भवतीति भाष्योक्तेः स्वस्वामिभावलक्षणसम्बन्धार्थमादाय षष्ठ्युपपत्तिरिति वाच्यम् । इरज्यतीत्यस्य नियमनादिप्राप्तफलितार्थकथनपरत्वेन भाष्यात्पुनरुक्तिदोषो नेत्यर्थः ॥ ६९ ॥

**मंत्रः – ७०**

(अ.१, सू.७, मं.१०)

**इन्द्रं वो विश्वतस्परि हवामहे जनेभ्यः ।**
**अस्माकमस्तु केवलः ॥**

**पदपाठः**

इन्द्रम् । वः । विश्वतः । परि । हवामहे ।
जनेभ्यः । अस्माकम् । अस्तु । केवलः ॥

**भाष्यम्**

**सम्यग्घवामहे सर्वगतं च व्यक्तरूपतः ।**
**स्थातुमेकत्र वोऽर्थाय जना नोऽस्तु स केवलः ॥ ७० ॥**

**टीका**

जनेभ्यो व इति वचनाज्जनान्प्रतीदं वचनमिति विज्ञायते । अत उक्तं हे जनाः विश्वतः सर्वतः सर्वत्र स्थितं सर्वगतमिन्द्रं जनेभ्यो वो युष्माकमर्थाय परि सम्यक् हवामहे आह्वयामः । सर्वगतस्य कथमाह्वानमित्यतोऽभिप्रायमाह **व्यक्तरूपत एकत्र स्थातुमिति** । आहूतश्चासौ केवल इन्द्रो नः सर्वेषामस्तु इष्टद इति शेषः ॥ ७० ॥

**टिप्पणी**

ननु ऋचि सम्बुध्यन्तपदाभावाद्भाष्ये हे जना इति कस्य विवरणमिति न ज्ञायत इत्यत आह **जनेभ्यो व इति** । जनान् प्रतीति, यजमान ऋत्विगादि जनान्प्रतीत्यर्थः । अत इति । उक्तरीत्यार्थतः प्राप्तत्वादेव जना इति सम्बुद्धिपदं

भाष्ये उक्तमित्यर्थः । भाष्यपदसंयोजनपूर्वकं समग्रर्चं व्याचष्टे हे जना इत्यादिना । सर्वगतस्येति । 'यच्च किञ्चिज्जगत्सर्वं दृश्यते श्रूयतेऽपि वा', 'अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः' इत्यादिप्रमाणेषु हरेः सर्वगतत्वस्यावगतत्वेन[1] सन्निहितस्य कथमाह्वानम् ? दूरस्थस्यैवाह्वान-विषयत्वादिति शङ्काभिप्रायो ध्येयः[2] । केवल इति । असाधारण्येनास्माक-मेव सर्वाभीष्टप्रदो भवत्विति केवलशब्दतात्पर्यार्थो ज्ञेयः ॥ ७० ॥

## सूक्तम् – ८

दशार्चम् । मधुच्छन्दाः । इन्द्रः । गायत्री ।

### मंत्रः – ७१

(अ.१, सू.८, मं.१)

**एन्द्र सानसिं रयिं सजित्वानं सदासहम् ।**
**वर्षिष्ठमूतये भर ॥**

**पदपाठः**

**आ । इन्द्र । सानसिम् । रयिम् । सऽजित्वानम् ।**
**सदाऽसहम् । वर्षिष्ठम् । ऊतये । भर ॥**

**भाष्यम्**

**जयिना सहितं [3]लाभयुक्तं वित्तं सदा बलम् ।**
**वर्षिष्ठं सुमहद्रक्षानिमित्तं नित्यदा भर ॥ ७१ ॥**

---

१. सर्वगतस्यावगतत्वेन - क । २. ज्ञेय इति पाठः ।
३. लाभयुतम् ।

**टीका**

दशार्चमेतदैन्द्रं सूक्तम् ।

हे इन्द्र सानसिं सानो लाभः मतुबर्थे सिः लाभयुक्तम् । सजित्वानं जित्वना जयिना पुत्रादिना सहितं सदासहं सदाबलं सदाबलवत् । वर्षिष्ठं वृद्धतमम् । सुमहदूतये रक्षायै रक्षानिमित्तं रयिं वित्तं अस्मभ्यं नित्यदा भर आहर । देहीति यावत् ॥ ७१ ॥

**टिप्पणी**

**मतुबर्थ इति** । सा नोऽस्यास्तीति मतुबर्थे तद्धिता इति बहुवचनज्ञापितसिप्रत्यये तस्मिन् परतः यचि भमिति भसंज्ञाप्राप्त्यभावेन भसंज्ञानिमित्तकस्य यस्येति चेत्यकारलोपस्य प्राप्तेरभावेन सानसिशब्दनिष्पत्तौ द्वितीयैकवचने सानसिमिति रूपमिति भावः । असि प्रत्ययपक्षे भसंज्ञानिमित्तकाकारलोपो द्रष्टव्यः ॥ ७१ ॥

**मंत्रः – ७२**

(अ.१, सू.८, मं.२)

**नि येन॑ मुष्टिह॒त्यया॒ नि वृ॒त्रा रु॒णधा॑महै ।**
**त्वोता॑सो॒ न्यर्व॑ता ॥**

**पदपाठः**

नि । येन॑ । मु॒ष्टि॒ऽह॒त्यया॑ । नि । वृ॒त्रा ।
रु॒णधा॑महै । त्वाऽऊ॑तासः । नि । अर्व॑ता ॥

भाष्यम्

**येनारीन्मुष्टियुद्धेन तमांसि ज्ञानयुद्धतः ।**
**त्वत्प्रेरिता निरुन्धामः कांश्चिद्वा तुरगादिभिः ।**
**आवृत्त्यैवोपसर्गस्य क्रियावृत्तिर्भविष्यति ॥ ७२ ॥**

टीका

येन वित्तेन निमित्तेन त्वोतासः । छन्दसि युष्मदस्मदोः प्रत्ययोत्तरपदयोराकारादेशः । अवतिः प्रेरणार्थः । त्वत्प्रेरिता वयं मुष्टिहत्यया मुष्टिघातेन मुष्टियुद्धेनारीन्निरुणधामहै निरुन्धामः । धात्वन्तरस्यैतद्रूपम् । किं च येन वृत्रा वृत्राणि तमांसि निरुणधामहै ज्ञानयुद्धत इति शेषः । अत्र येनेति ज्ञानवित्तमुच्यते । येन चार्वता तुरगेण तुरगादिभिः कांश्चिदरीन्निरुणधामहै तादृग्वित्तमाभरेति पूर्वेण सम्बन्धः ।

ननु येन वृत्राण्यरींश्च मुष्टिहत्ययाऽर्वता च निरुणधामहै इत्येकमेव वाक्यं कस्मान्न क्रियते । तत्राह आवृत्त्यैवेति । अत्र नीत्युपसर्गस्य त्रिरावृत्त्या रुणधामहा इति क्रियाया धातोरप्यावृत्तिरङ्गीकर्तव्यैव । उपसर्गाः क्रियायोग इति क्रियायोग एवोपसर्गत्वस्मरणात् । वाक्यभेदेन सम्यगन्वयसिद्धावभ्यासकल्पनानुपपत्तेः । प्रप्रवस्त्रिष्टुभमित्यादौ वाक्यस्य भेत्तुमशक्यत्वात् तत्कल्पनम् । आपश्चभ्यः प्रयोक्तव्या उपसर्गा मनीषिभिरित्यपि विजातीयापेक्षम् ॥ ७२ ॥

टिप्पणी

ऋचि येनेति यच्छब्दस्य पूर्वस्यामृचि रयिमित्युक्तवित्तपरतायाः स्पष्टत्वाद्भाष्ये येनेतिपदमात्रमनूदितमित्यभिप्रेत्य योजनामाह येन वित्ते-

नेति । नन्वव रक्षण गति कान्तीत्याद्यनेकार्थतया पठितादवधातोः क्तप्रत्यये तस्यानित्यमागमशासनमितीडभावे 'ज्वरत्वरस्रिव्यविमवामुपधायाश्च'[१] इत्युपधावकारस्य च ऊठि ऊतशब्दनिष्पत्तौ प्रथमाबहुवचने आज्जसेरसुगित्यसुगागमे उतासशब्देन सह युष्मच्छब्दस्य त्वया ऊतास इति तृतीयासमासे प्रत्ययोत्तरपदयोश्चेति युष्मच्छब्दमपर्यन्तस्थ त्व इत्यादेशे युष्मदस्मदोरनादेश इत्यात्वस्यनादेशहलादिविभक्तिपरतो विधानेन योऽचीति यत्वस्यानादेशाजादिविभक्तिपरतो विधानेन शेष लोप इत्यस्यात्वयत्वनिमित्तेतरविभक्तिपरतो विधानेन प्रकृते विभक्तिपरत्वाभावेनात्वादेरप्राप्तेः त्वदुतास इति निर्देशः स्यात् कथं चोतास इति निर्देश इत्यत आह **छन्दसीति** । छन्दसि विषये युष्मच्छब्ददकारस्यास्मच्छब्ददकारस्य च प्रत्यये उत्तरपदे च परत आकारादेशो भवतीत्यर्थः ।

प्रत्ययग्रहणं सुता इमे त्वायव इत्यादौ प्रत्यये परतोऽप्यात्वं छान्दसमिति सूचयितुमिति ज्ञेयम् । अस्मच्छब्दग्रहणं तु प्रयोगान्तरेऽस्मच्छब्दस्य प्रत्यये उत्तरपदे च परत आत्वं छान्दसमिति सूचयितुम् । यद्वा युष्मदस्मदोरनादेशावित्यत्र युष्मदस्मदोरिति योगविभागमाश्रित्य छन्दसि विषय आकारादेशो ग्राह्य इति सूचनाय सूत्रैकदेशानुवादः कृत इति ज्ञेयम् ।

**अवतिरिति** । अव रक्षण गतिकान्तिप्रीतितृप्त्यवगमप्रवेशाश्रयणस्वाम्यर्थ्ययाचनक्रियेच्छादीप्त्यवास्त्यालिङ्गनहिंसाऽदान भाववृद्धिष्वित्यवधातोरनेकार्थतया पठितत्वेन रक्षणशब्दार्थान्तर्गततया वा सामर्थ्यशब्दार्थान्तर्गततया वा भावशब्दार्थान्तर्गततया प्रेरणरूपार्थस्य प्राप्तत्वात् । उतास इत्यस्य प्रेरणार्थकत्वमुपपन्नमिति भावः । ननु त्वा उतास इत्यत्र

---

१. ६-४-२० ।

एत्येधत्यूठ्स्विति वृद्धेः प्राप्तेः आद्गुण इति गुणेन कथं निर्देशः, गुणापवादकत्वात् वृद्धेरिति चेन्न, संज्ञापूर्वकविधेरनित्यत्वेन वा छन्दसत्वेन वा वृद्ध्यभावेन गुणस्यैव प्राप्तेरिति ।

ननु रुधिर् आवरण इत्यस्य इनम् विकरणत्वेन लट् परस्मैपदोत्तमपुरुषबहुवचने सति रुध्म इति निर्देशः स्यात्, कथं भाष्ये रुन्धाम इति निर्देश इत्यत आह **धात्वन्तरस्येति** । रुधि आवरण इति धात्वन्तरस्य इदित्वेन इदितो नुम्धातोरिति नुमागमे शब्विकरणे लडुत्तमपुरुषबहुवचने रुन्धाम इति रूपमिति भावः । ननु रुधिर आवरण इति धातोः स्वरितेत्वनिमित्तोभयपदित्वेन ऋचि रुणधामहै इति लोडन्तात्मनेपदश्रवणाद् भाष्ये लडन्तपरस्मैपदेन कथं व्याख्यानं क्रियत इति चेन्न, व्यत्ययो भेदकरणस्वातन्त्र्येषु समीरित इत्युक्तेः शत्रुनिरोधने भगवत एव स्वातन्त्र्यमिति सूचनाय लकारादिव्यत्ययेन व्याख्यानं कृतमिति ।

**वृत्राणीति** । अस्य पीत्वा शतक्रतो इत्यस्यमृचि भाष्ये आवृतेरेव वृत्राणि ह्यज्ञानानीति वृत्रशब्दस्याज्ञानार्थकतया व्याख्यातत्वादज्ञानस्य चान्तरतमोरूपत्वात्तमशब्दिताज्ञानवाचित्वं वृत्रशब्दस्योपपन्नमिति भावः । भाष्ये ज्ञानयुद्धत इति कस्य व्याख्यानमिति न ज्ञायते, ऋचि व्याख्येयपदादर्शनादित्यत आह **ज्ञानेति** ।

मुष्टियुद्धस्याज्ञाननिवर्तकत्वाभावात्तन्निवर्तकार्थप्रतिपादनाय ज्ञानयुद्ध इति शेषत्वेन भाष्ये पूरित इति भावः । ज्ञानार्थं युद्धं वादादि तस्मादित्यर्थः । **अत्रेति** । तमांसि ज्ञानयुद्धत इति व्याख्यानपक्षे ऋचि येनेति पदेन ज्ञानरूपवित्तमुच्यते, न तु प्रसिद्धवित्तमित्यर्थः । अर्वतेत्यत्राश्ववाचकार्वच्छब्दः गजादेरप्युपलक्षकः । एकवचनं बहुवचनार्थ इत्यभिप्रेत्य योजनामाह

**अर्वतेत्यादिना** । भूवादयो धातव इति सूत्रे क्रियावाचिनो भूवादयो धातुसंज्ञा भवन्तीति वृत्त्यादावुक्तत्वेन क्रियारूपवाच्यार्थस्यावृत्तेः वाचकधात्वावृत्तिमन्तरेण कर्तुमशक्यत्वात् भाष्योक्तक्रियापदेन तद्वाचकधातुर्ग्राह्य इत्यभिप्रेत्य योजनामाह **क्रियाया धातोरपीति** । अपिशब्द उपसर्गावृत्ति समुच्चायकः । ननूपसर्गस्यावृतत्वेऽपि क्रियाया आवृत्तिः कुतः कल्पनीय इत्यत आह **उपसर्गः क्रियायोग इतीति** । **स्मरणादिति** । पाणिनिसूत्रादित्यर्थः ।

ननु त्रिरावृत्तस्य नीत्युपसर्गस्याभ्यासार्थत्वेनैकक्रियान्वयसम्भवे सति क्रियावृत्तिकल्पनं किमर्थं कर्तव्यमित्यत आह **वाक्यभेदेनेति** । ननु प्रप्रवस्त्रिष्टुभं प्रपायमग्निर्भरतस्य शृण्व इत्यादि श्रुतिषु प्रेत्युपसर्गावृतोऽभ्यासार्थत्ववत् प्रकृते नीत्युपसर्गस्याप्यभ्यासार्थत्वमेव कल्प्यतामित्यत आह **प्रप्रवस्त्रिष्टुभमित्यादाविति** । **तत्कल्पनमिति** । प्रेत्यावृत्तस्याभ्यासार्थत्वकल्पनमित्यर्थः । प्रप्रवस्त्रिष्टुभमित्यस्याः श्रुतेः कर्मनिर्णयतट्टीकयोरुक्तरीत्यार्थो ज्ञेयः । मया च समग्रश्रुत्युदाहरणेन तत्रोक्तार्थ एव प्रदर्श्यते । तथापि प्रप्रवस्त्रिष्टुभमिषं मन्दद्वीरा चेन्दवे । धिया वो मेघसातये पुरन्ध्या विवासतीति ।

हे ऋत्विजः हे यजमानाः वो इन्द्र इति इन्द्रसूक्तबलाल्लभ्यत परमेश्वरः मन्दद्वीराय मन्दन् मन्दं कुर्वन् वीरः परमेश्वरो येन तस्मै, इन्दवे सोमाय सोमपानार्थमिति यावत् । वः [१]युष्मत्सम्बन्धिनां युष्माभिः दास्यमानामिति यावत् । त्रिष्टुभमिषं त्रिष्टुभाख्यमन्नं वो युष्माकं मेघसातये यज्ञसिद्ध्यर्थं पुरन्ध्या पुराणि धीयन्तेऽस्यामिति पुरन्धिः । कर्मण्यधिकरणे चेति घोः

---

१. युष्मत्सम्बन्धिनीम् ।

कि: । तया पुरन्ध्या अशेषप्राणिदेहाश्रयणाय धिया स्वबुद्ध्या प्रप्रविवासति प्रकर्षे प्रकर्षेण इच्छति व्यवहिताश्चेत्युपसर्गसम्बन्धः भवद्भिर्दास्यमानया त्रिष्टुभा नितरां प्रीतिं सोमपानाय करोतीति यावदिति श्रुत्यर्थो ज्ञेयः ।

ननु आपञ्चभ्यः प्रयोक्तव्या उपसर्गा मनीषिभिः इति वैयाकरणैरुपसर्गाणां पञ्चपर्यन्तं प्रयोगस्योक्तत्वात्प्रकृते नीत्युपसर्गत्रयस्यापि क्रियावृत्तिमन्तरेणैकवाक्यतयान्वयोपपत्तेरित्यत आह **आपञ्चभ्य इतीति** । विजातीयापेक्षमिति । विजातीयानेकोपसर्गप्रयोगपरमिदं वचनम्, न तु सजातीयानेकोपसर्गप्रयोगपरमित्यर्थः । प्रकृते नीत्युपसर्गस्य सजातीयत्वादिति भावः । [१]'जासि निप्रहणाटक्राथपिषां हिंसायाम्' इत्यादिसूत्रेषु चोरस्य निप्रहरन्ति प्रणिहन्तीत्यादि विजातीयानेकोपसर्गपूर्वकत्वेनोदाहरणानां दर्शितत्वाच्चेति ज्ञेयम् ॥ ७२ ॥

**मंत्रः – ७३**

(अ.१, सू.८, मं.३)

**इन्द्र त्वोतास आ वयं वज्रं घना ददीमहि ।**
**जयेम सं युधि स्पृधः ॥**

**पदपाठः**

**इन्द्र । त्वाऽऊतासः । आ । वयम् । वज्रम् ।**
**घना । ददीमहि । जयेम । सम् । युधि । स्पृधः ॥**

**भाष्यम्**

**त्वत्प्रेरिता ज्ञानरतिं दृढत्वेनाददीमहि ॥ ७३ ॥**

---

१. २-३-५६ पा.सू. ।

टीका

**हे इन्द्र ! त्वोतासः त्वत्प्रेरिता वयं वज्रं ज्ञानं रतिं च ज्ञानविषयां ज्ञाननिमित्तां रतिं वा घना तृतीयैकवचनान्तमेतद्भावप्रधानम्। दृढत्वेनाददीमहि त्वत्प्रेरणयैव ज्ञानरतिमन्तो भवामः। त्वत्प्रेरिता एव युधि स्पृधः स्पर्धिनो युद्धानि वा सञ्जयेम ॥ ७३ ॥**

टिप्पणी

ज्ञानं रतिं चेति । 'इन्द्रो वज्री हिरणमयः' इत्यत्र ज्ञानानन्दो हि धातुतः' इति भाष्ये वज्रशब्दस्य ज्ञानानन्दार्थकतया व्याख्यानात् । तत्र टीकायां धात्वित्यनूद्य वज्र गतौ[१] रमु क्रीडायामिति धातुभ्यां भावे डप्रत्ययनिष्पन्नत्वकथनेन[२] वज्रशब्दव्याख्यानाच्च प्रकृते भाष्यटीकयोः वज्रशब्दार्थमात्रानुवादः कृतः न तु शब्दनिष्पत्तिप्रकारः करिष्यत इति ज्ञेयम् । ऋचि वज्रमित्यत्र वज् र इत्यनयोः शब्दयोः द्वन्द्वैकवद्भावो वा । वजा सहितं रमिति मध्यमपदलोपि समासो वा ज्ञेयः । भाष्ये तु ज्ञानसहितां रतिमिति[३] मध्यमपदलोपसमासो ज्ञेयः । शाकपार्थिवादीनामुत्तरपदलोपश्च शाकप्रियः पार्थिवः शाकपार्थिव इत्यादिशाब्दिकोक्तेरिति ज्ञेयम् । अन्यथा ज्ञानरतिशब्दयोः द्वन्द्वैकवद्भावे स्वमोर्नपुंसकादिति द्वितीयैकवचनस्य लुकि ज्ञानरतीति निर्देशापत्तेः । इतरेतरयोगद्वन्द्वे तु ज्ञानरती इति निर्देशापत्तेरिति ज्ञेयम् ।

ऋचि वज्रमित्यत्र वज्रशब्दार्थज्ञानेन रशब्दार्थस्य रमणस्य विषयविषयिभावलक्षणसम्बन्धः निमित्तनैमित्तकभावलक्षणसम्बन्धश्चेत्यर्थद्वयप्रतिपादनपरं

---

१. व्रज गतौ - क ।

२. भावे डप्रत्यय इति धातुद्वयनिष्पन्नत्वकथनेन - क ।

३. ज्ञानसहिता रतिरिति - क ।

वज्रपदमिति प्रदर्शनाय भाष्ये जानातिमित्युक्तमित्यभिप्रेत्यार्थद्वयपरतया योजनान्तरमाह **ज्ञानेति** ।

**तृतीयेति** । धनशब्दोत्तरस्य तृतीयैकवचनस्य सुपां सुलुगित्यादिना डादेशे चुटू इति इकारलोपे प्रातिपदिकस्य टेरिति टिलोपे घना इति रूपमिति भावः । डुधाञ् दानयोरिति धातोः लिङात्मनेपदोत्तमपुरुषबहुवचने शब्विकरणस्य श्लौ सति द्विर्वचनादिकार्ये व्यवहिताश्च इत्याङोऽन्वये सति आददीमहीति रूपमित्यभिप्रेत्य तस्य तात्पर्यार्थमाह **त्वत्प्रेरणयैवेति** । जी जय इति धातोर्निष्पन्नस्य जयेमेत्यस्य सकर्मकत्वेन कर्माकाङ्क्षायां युधिस्पृधशब्दोक्तानां युद्धकर्तॄणां युद्धानां वा कर्मत्वेनान्वय इत्यभिप्रेत्य योजनामाह **स्पर्धिनो युद्धानिवेति** ।

आद्ये स्पर्धसंघर्षण इति धातोः कर्तरि क्विप्प्रत्ययः रेफस्य सम्प्रसारणं छान्दसम् । युधीति सप्तमी च विषयरूपाधिकरणार्थे वा निमित्तसप्तमीति वेति द्रष्टव्यम् । द्वितीयार्थे तूक्तधातोरेव क्विप्प्रत्ययः । युधीत्येतच्च युद्धे प्राप्ते सतीति सतिसप्तम्यन्तपदमिति ज्ञेयम् । छन्दसि परेऽपीति सूत्रे वृत्त्यादौ छन्दसि विषये गत्युपसर्गसंज्ञकाः परेऽपि पूर्वेऽपि प्रयोक्तव्या इत्युक्तत्वेन प्रकृते समित्यस्य जयेमेत्यनेनान्वय इत्यभिप्रेत्य योजनामाह **सञ्जयेमेति** ॥ ७३ ॥

**मंत्रः – ७४**

(अ.१, सू.८, मं.४)

**व॒यं शूरे॑भि॒रस्तृ॑भि॒रिन्द्र॒ त्वया॑ यु॒जा व॒यम् ।**
**सा॒स॒ह्याम॑ पृतन्य॒तः ॥**

पदपाठः

व॒यम् । शूरे॑भिः । अस्तृ॑ऽभिः । इन्द्र॑ । त्वया॑ ।
यु॒जा । व॒यम् । स॒स॒ह्याम॑ । पृ॒त॒न्य॒तः ॥

भाष्यम्

**त्वया पृतन्यतः [1]शत्रूनभिष्याम [2]सुयोद्धृभिः ॥ ७४ ॥**

टीका

हे इन्द्र ! त्वया युजा युनक्तीति युक् । सख्या सता त्वत्प्रसादेनैव शूरेभिः शूरैरस्तृभिरस्त्रिभिः सुयोद्धृभृत्यैः सह पृतन्यतो युद्ध्यतः शत्रून् सासह्याम अतिशयेन पुनः पुनर्वा सहामहै । अभिष्यामाभिमुखाः स्याम । उपसर्गप्रादुर्भ्यामस्तिर्यच् परः । किञ्च । वयं च त्वयैव च त्वदधीनसत्ताका इत्यर्थः ॥ ७४ ॥

टिप्पणी

युनक्तीति युगिति । ननु ऋचि ऋत्विग् धृगित्यादिसूत्रेण युजिर्योग इति धातोः क्विन्प्रत्यये कृते क्विनः सर्वापहारिलोपे युजेरसमास इति नुमागमे हलङ्याभ्य इति सुलोपे संयोगान्तस्य लोप इति जकारस्य लोपे क्विन्प्रत्ययस्य कुरिति कुत्वेन नकारस्य ङकारे युङ् इति निर्देशः कर्तव्यः, न च वाच्यं युज समाधावित्यस्य समाध्यर्थस्य युजेर्नुमिति नुम्निषेधेन चोः कुरिति कुत्वाश्रयणेन युगिति रूपसिद्धिरिति । तथापि प्रकृते सामर्थ्यस्यायोगेन योगार्थस्यैव ग्राह्यत्वेन युनक्तीति युङ् इति निर्देशस्यैव कर्तव्यत्वादिति चेन्न; युजेरसमासे इति सूत्रेऽसमास इति नञा निर्दिष्टत्वेन नञा

---

१. शत्रून्हनिष्याम – पा० । २. सुयोधिभिः – पा० ।

निर्दिष्टमनित्यमिति इदमस्थमुरिति उकारेण इकोऽचिविभक्तावित्यजग्रहणेन ज्ञापितत्वाद्वा अनित्यमागमशासनमित्यागमस्यानित्यत्वोर्वा नुमागमाभावपक्षे चोः कुरिति कुत्वेन जकारस्य गकारे वावसान इति चर्त्वेन गकारस्य ककारे युक् इति निर्देश उपपन्न इति ज्ञेयम् । तथा च युक्शब्दात्तृतीयैकवचन युजा इति रूपसिद्धेः तस्य पर्यवसितार्थमाह **सख्या सतेति** ।

सखित्वं च स्वामित्वेनैवेति भावेन स्वोक्तार्थमेव विवृणोति **त्वत्प्रसादेनैवेति** । असु क्षेपण इति धातोः ताच्छील्यार्थकतृन्प्रत्यये सत्यस्तृशब्दनिष्पत्तौ तस्य क्षेपणे कर्त्रर्थकत्वलाभात् क्षेपणशब्दितशत्रु-निरसनस्यास्त्ररूपसाधनापेक्षितत्वेन तस्यास्त्रशब्दार्थान्तर्गततया प्राप्तत्वा-दित्यभिप्रेत्य योजनामाह **अस्तृभिरस्तृभिरिति** । अस्त्रमेषां सन्तीत्यस्त्रिणः तैरित्यर्थः ।

सासह्यामेत्यत्र षह मर्षण इति धातोः यङ्लुगन्ततया निष्पन्नत्वेन यङ्प्रत्ययस्य धातोरेकाचो हलादेः क्रियासमभिहारे च इति समभिहार-शब्दितभृशार्थे पौनःपुन्यार्थे च विधानात् प्रकृते उभयार्थकत्वमित्यभिप्रेत्य योजनामाह **अतिशयेन पुनःपुनर्वेति** । अस भुवीति धातोः लिङुत्तम-पुरुषबहुवचने स्यामेति रूपसिद्धेस्तस्या भीत्युपसर्गपूर्वकत्वे अभिःस्यामेति भाष्ये निर्देशो कर्तव्ये अभिष्याम इति षत्वविशिष्टतया कथं निर्देशः कृत इत्यत आह **उपसर्गेति** ।

'उपसर्गप्रादुर्भ्यामस्तिर्यच्परः'[१] इति वृत्त्यादौ उपसर्गस्थान्निमित्ता-त्परस्य[२] प्रादुर्शब्दाच्चोत्तरस्यास्तिसकार ......कारपरस्याच्परस्य[३] च

१. पा.सू. २. उत्तरस्य इति पाठः ।

३. ण्नेरसकारस्याच्परस्य इति भाव्यमिति भाति ।

मूर्धन्यादेशो भवति, अभिष्यात् प्रादुष्यात् इत्युक्तत्वेन प्रकृते सकारस्य ऋटुरषाणां मूर्धेति मूर्धन्यशब्दितषकारादेशेन निर्देशः कृत इति भावः । वयमित्यस्य द्विः श्रवणादेकस्य क्रियान्वयेऽप्यन्यस्यान्वयादर्शनात्तद्घटनाय त्वयेत्यस्य सावधारणतयाऽवृत्तिमभिप्रेत्य तेन सकारयोजनामाह किश्चे-त्यादिना ॥ ७४ ॥

**मंत्रः – ७५**

(अ.१, सू.८, मं.५)

**महाँ इन्द्रः परश्च नु महित्वमस्तु वज्रिणे ।**
**द्यौर्न प्रथिना शवः ॥**

**पदपाठः**

महान् । इन्द्रः । परः । च । नु । महिऽत्वम् ।
अस्तु । वज्रिणे । द्यौः । न । प्रथिना । शवः ॥

**भाष्यम्**

**यस्मान्महाननादिश्च विष्णुर्जीवोऽवरस्तथा ।**
**तस्यैवास्तु महत्त्वं तन्न जीवब्रह्मतां स्मरेत् ।**
**आकाशवत्प्रथिम्नाऽसौ शवः सुखबले तथा ॥ ७५ ॥**

**टीका**

नु यस्मादसाविन्द्रो विष्णुर्महान् गुणैरनन्तः परश्चानादिः । कालतोऽप्यनन्तः । प्रथिना प्रथिम्ना द्यौर्न आकाशवत् । देशतोऽप्यनन्तश्च । तथा शवः सुखबले । उभयनामसु पाठात् । नित्याभिव्यक्तसुखबला-

**त्मकश्च । शशब्दः सुखवाची वशब्दो बलवाचीति वा । जीवस्त्ववरो गुणादिनेति शेषः । तत्तस्मान्महित्वं महत्वं ब्रह्मत्वं वज्रिणे तस्य विष्णोरेवास्तु तस्यैव जानीयात् । न पुनर्जीवस्य ब्रह्मतां स्मरेदिति तात्पर्यार्थः ॥ ७५ ॥**

### टिप्पणी

अव्ययानामेकार्थत्वात् नु इत्यस्य हेत्वर्थकत्वमिति प्रदर्शनाय भाष्ये यस्मादित्युक्तमित्यभिप्रेत्य योजनामाह यस्मादिति । महान् परः पथिना[1] इत्येतैः पदैः क्रमेण गुणतः कालतः देशतः आनन्त्यं[2] भगवतो ज्ञातव्यमित्यभिप्रेत्य भाष्यपदसंयोजनपूर्वकं योजनामाह विष्णुर्महानित्यादिना । पृथुशब्दाद्भावार्थे पृथ्वादिभ्य इमनिज्वा इति इमनिच्प्रत्यये टिलोपे 'रऋतो-र्हलादेः' इति ऋकारस्य रभावे तृतीयैकवचने अल्लोपो न इत्यकारलोपे मकारस्य छान्दसलोपे च प्रथिनेति रूपमित्यभिप्रेत्य[3] योजनामाह प्रथिना प्रथिम्नेति । व्याप्त्येत्यर्थः ।

उभयनामस्त्विति । शवशब्दसमुदायस्य सुखबलोभयार्थकतया वेद-निघण्टुपदेषु पाठादित्यर्थः । 'तद्गुणसारत्वात्तद्व्यपदेशः' इति सूत्रे जीवस्यापि सुखबलात्मकत्वोक्तेः जीवसाधारणधर्मस्य कथं भगवद्धर्मत्वमित्यत आह नित्याभिव्यक्तेति । जीवानां तु 'यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्' इत्यादिश्रुतिषु भगवत्प्रसादेन सुखज्ञानबलादेरभि-व्यक्तेरुक्तत्वादिति भावः । स्वां तनूमित्यस्य जीवस्वरूपभूतां तनूमपगता-वरणेनाविर्भावयतीत्यर्थस्य विष्णुतत्त्वनिर्णयादावुक्तेरिति ज्ञेयम् ।

---

१. पतिना - क । २. देशतश्चानन्त्यं - क ।
३. ऋचि रूपमित्यभिप्रेत्य - क ।

वरुणं च रिशादसमित्यादौ शाशब्दस्य सुखवाचितया वायवायाहि दर्शतेत्यादौ वशब्दस्य बलवाचितया भाष्ये व्याख्यानात् प्रकृते शावशब्दस्य यथाक्रमम् एकैकार्थकत्वमित्यभिप्रेत्य योजनामाह शशब्द इति । भाष्ये जीवगतावरत्वस्योपपादकानुक्तेः तत्रापेक्षितशेषं पूरयति गुणादिनेति शेष इति । आदिपदेन देशकालयोर्ग्रहः । देशकालगुणापरिच्छिन्नत्वस्य सत्यं ज्ञानमनन्तं ब्रह्मेत्यादि श्रुतिषु भगवद्धर्मतया प्रसिद्धत्वात् जीवस्य त्वल्प-ज्ञानाल्पशक्तिरित्यादिप्रमाणैः गुणादिभिरल्पत्वावगमादिति भावः ।

यस्मादित्युक्तयच्छब्दप्रतिसम्बन्धितया तदित्युक्तमित्यभिप्रेत्य योजनामाह तत्तस्मादिति । ब्रह्मत्वमिति । देशकालगुणापरिच्छिन्नत्वेन सर्वोत्तमत्वमित्यर्थः । ननु 'स्वाभाविकी ज्ञानबलक्रिया च' इत्यादिप्रमाणैः भगवद्धर्माणां स्वाभाविकत्वावगमादस्त्विति कथं प्रार्थनम्, अप्राप्तस्यैव प्रार्थनीयत्वादित्यत आह तस्यैव जानीयादिति । भगवद्विषयकभक्तकर्तृक-ज्ञानस्यैव प्रार्थनीयत्वात् । तस्य च भगवत्प्रसादसाध्यत्वादिति भावः । ॥ ७५ ॥

**मंत्रः – ७६**

(अ.१, सू.८, मं.६)

**समोहे वा य आशत नरस्तोकस्य सनितौ ।**
**विप्रासो वा धियायवः ॥**

**पदपाठः**

सम्ऽओहे । वा । ये । आशत । नरः । तोकस्य ।
सनितौ । विप्रासः । वा । धियाऽयवः ॥

**भाष्यम्**

**अन्यसंवहनेनापि[1] ये तं[2] प्राप्ता जनार्दनम् ।**
**ज्ञानलाभेन तु नरस्त एव पशवोऽपरे ।**
**विप्राश्चैव धिया युक्ता मूर्खाः शूद्रसमा मताः[3] ॥ ६ ॥**

**टीका**

ये समोहे संवहने अन्यसंवहनेन वा अपि । अन्यैः प्रेरिता अपीति यावत् । तोकस्यापत्यस्य । ज्ञानमेव हि जीवतोऽपत्यम् । सनितौ लाभे सति ज्ञानलाभेन तमिन्द्रं जनार्दनमाशत आश्नुवत प्राप्ताः । शरणमिति शेषः । त एव तु नरः पुरुषाः अपरे पशव इति शेषः । किञ्च । ये धियायवः धियायुक्ताः । युमिश्रणे । अन्येभ्योऽपि दृश्यन्त इति विच् । दृशिग्रहणाद्गुणाभावः तृतीयाया अलुक् । भगवज्ज्ञानिनः । ते वा त एव विप्रासो विप्राः मूर्खाः शूद्रसमा मता इति शेषः ॥ ७६ ॥

**टिप्पणी**

आङ्पूर्वाद्वह प्रापण इति धातोः घञर्थे कविधानम् इति वा उणादयो बहुलमिति वा भावार्थकप्रत्यये सति ककारलोपे वचिस्वपीत्यादिना वकारस्योकाररूपसम्प्रसारणे सम्प्रसारणाच्चेति पूर्वरूपत्वे आद्गुण इत्याङा सह उकारस्य गुणे ॐशब्दनिष्पत्तौ समित्युपसर्गपूर्वकत्वे च समोहशब्देन संवहनरूपप्रेरणमुच्यते । प्रेरणस्य प्रेरकसापेक्षत्वात् योग्यतया गुर्वादिप्रेरकलाभः । हेताविति सूत्रविहिततृतीयार्थे समोह इति सप्तमे सप्तम्येषा । वाशब्दोऽप्यर्थ इत्येतत्सर्वं मनसि निधाय भाष्ये अन्यसंवहनेनापीत्युक्तमित्यभिप्रेत्य योजनामाह **समोहे संवहन** इत्यादिना ।

---

१. वाऽपि – पा० । २. ये च – पा० । ३. स्मृताः – पा० ।

अन्यैः गुरुपित्रादिभिरित्यर्थः । **तोकस्येति** । आहुर्दुहितरं सर्वेऽपत्यं तोकं तयोः समः इत्यमरोक्तेस्तोकशब्दस्यापत्यपर्यायत्वमिति भावः । द्वितीयाध्याये त्वं नोऽग्ने तव देव पायुभिरित्यस्यामृचि त्राता तोकस्येत्यत्राध्यात्मं तोकशब्दस्य ज्ञानार्थकतया ज्ञानसौख्यवाचामिति भाष्ये व्याख्यानात् तत्र टीकायां पुरो हि तोकशब्दः ज्ञानं चात्मनो जायत इति । पुत्र ज्योतिर्हि पुत्रः परमे व्योमन्निति च श्रुतिरिति वक्ष्यमाणोपपादनरीत्या तोकशब्दस्य ज्ञानार्थकत्वमिति ज्ञेयम् । ज्ञानस्याप्यान्तरज्योतिष्ट्वेन ज्योतिर्हि पुत्र इति बह्वृचब्राह्मणवाक्योक्तज्योतिश्शब्दः ज्ञानपर इति ध्येयम् ।

अशू व्याप्तावित्यस्य धातोः श्नुविकरणतया पठितस्य लङात्मनेपदप्रथमपुरुषबहुवचने छान्दसत्वेन विकरणलोपेऽशतेति ऋचि रूपमित्यभिप्रेत्य योजनामाह **अशत अश्नुवतेति** । अशतेत्यस्य सकर्मकत्वेन कर्माकाङ्क्षायां पूर्वोक्तेन्द्रशब्दित भगवत एव कर्मत्वेनान्वय इति प्रदर्शनाय भाष्ये जनार्दन इत्युक्तमित्यभिप्रेत्य सर्वगतस्य हरेः कीदृशी प्राप्तिरित्यतस्तत्रापेक्षितशेषमाह **शरणमिति शेष इति** । अव्ययानामेकार्थत्वात् वाशब्द एवार्थकस्सन् य इति यच्छब्दप्रतिसम्बन्धितया प्राप्तेन त इति तच्छब्देनान्वेतीति प्रदर्शनाय भाष्ये नरस्त एवेत्युक्तमित्यभिप्रेत्य योजनामाह **त एव नर इति** । भाष्ये नर इति नृशब्दस्य प्रथमा बहुवचनम् । टीकायां तु नरशब्दस्य प्रथमा बहुवचनमिति ज्ञेयम् । **इति शेष इति** । ऋचि एवकारस्य व्यावर्तकतयापेक्षितः शेषो भाष्यकृता अपरे पशव इति पूरित इत्यर्थः । अन्येभ्योऽपीति विच्प्रकरणे 'आतो मनिन् क्वनिप् वनिपश्च' इति सूत्रे चकारेण विच्प्रत्ययस्य समुच्चितत्वेन तस्य अन्येभ्योऽपि दृश्यन्त इत्युत्तरसूत्रे अनकारान्तेभ्योऽपि धातुभ्यो

विधानेन प्रकृते यु मिश्रण[1] इति धातोः विच्प्रत्यये तस्य सर्वापहारिलोपे प्रत्ययलोपे प्रत्ययलक्षणमाश्रित्य यु मिश्रण इति धातोः[2] सार्वधातुकार्धधातुकयोरिति प्राप्तगुणेनोंकारान्तत्वप्राप्तावप्यन्येभ्योऽपीति वाच्ये[3] दृश्यन्त इति दृशिग्रहणं प्रयोगानुसारार्थमिति वृत्त्यादावुक्तत्वेन गुणाभावस्यापि सूचितत्वेन गुणनिषेधे कृत्तद्धितेति प्रातिपदिकसंज्ञायां प्रथमाबहुवचने तृतीयान्तधीशब्देन तृतीयासमासे छान्दसत्वेन वा ओजःसहोम्भस्तमसस्तृतीयाया इति योगविभागाश्रयणेन वा तत्पुरुषे कृति बहुलमिति बहुलग्रहणाद्वा तृतीयाविभक्तेः सुपो धातुप्रातिपदिकयोरिति प्राप्तस्य लुकोऽभावे धियायव इति रूपसिद्धिरिति भावः ।

विप्रासो वा इत्यत्र वाशब्द एवार्थकस्सन् ये धियायव इत्युक्तयच्छब्दप्रतिसम्बन्धितया प्राप्ततच्छब्देनान्वेतीत्यभिप्रेत्य योजनामाह ते वात एवेति । मूर्खा इति । परापरतत्त्वविषयकज्ञानशून्या इत्यर्थः । इति शेष इति । भाष्यकृता ऋचि शेषत्वेन पूरित इत्यर्थः ॥ ७६ ॥

**मंत्रः – ७७**

(अ.१, सू.८, मं.७)

**यः कुक्षिः सोमपातमः समुद्र इव पिन्वते ।**
**उर्वीरापो न काकुदः ॥**

**पदपाठः**

**यः । कुक्षिः । सोमऽपातमः । समुद्रःऽइव ।**
**पिन्वते । उर्वीः । आपः । न । काकुदः ॥**

---

१. यु मिश्रणामिश्रण - क । २. यु धातोः - क । ३. वाक्ये - क ।

## भाष्यम्

**यः कुक्षिस्तस्य[१] देवस्य समुद्र इव सोऽखिलान् ।**
**कामान् क्षरति भक्ताय महाप इव तर्पकाः ।**
**काकुदस्तस्य जिह्वास्तु[२] बह्वयो बहुमुखेषु याः ॥ ७७ ॥**

## टीका

तस्येन्द्रस्य देवस्य यः सोमपातमोऽतिशयेन सोमपाः कुक्षिः स समुद्र इव रत्नाकर इव तत्र सोमं समर्पितवते भक्तायाखिलान् कामान्पिन्वते पिविमिहि सेचने। क्षरति सततं ददाति। किञ्च। तस्य काकुदो जिह्वाश्च ककुदिति तालुनाम तत्र भवा जिह्वा काकुत्। अकारलोपात्। उर्वीः उर्व्यः आपो न आप इव महाप इव भक्तानां तर्पकाः कथं बहुवचनं बह्वयः तदेव कथं बहुमुखेषु याः ॥ ७७ ॥

## टिप्पणी

रत्नाकरज एवेति । रत्नाकरो जलनिधिरित्यमरोक्तेः समुद्रवाचकत्वं रत्नाकरपदस्य ध्येयम् । समुद्रोऽब्धिरकूपारः इत्यमरकोशे समुद्रपदस्तं निहिततया पठितेनाब्ध्यादिपदेन समुद्रपदव्याख्यानमकृत्वा रत्नाकरपदेन टीकायां कृतं व्याख्यानं तु समुद्रस्य रत्नादिसर्वाभीष्टदाने सामर्थ्यसद्भावोपपादनायेति ज्ञेयम् । तत्रेति । कुक्षावित्यर्थः । पिन्वत इत्यस्य कथं क्षरणार्थकत्वमित्यत आह पिवि मिवि सेचन इति । पिवि धातुः मिवि धातुश्च सेचनशब्दितक्षरणार्थक इति भावः । मिविधातुग्रहणं प्रयोगान्तरसूचनार्थं वा यथा मिविधातुः सेचनार्थकस्तथा पिविधातुरपीति दृष्टान्ततया वेति ज्ञेयम् ।

---

१. रस्य – पा० । २. जिह्वाः स्युः – पा० ।

ननु वर्तमाने लडिति लट्प्रत्ययस्य वर्तमानार्थकत्वेन पिन्वत इत्यनेन अभीष्टदानस्य कादाचित्कत्वप्रतीतेः प्रसिद्धसमुद्रसाधारण्यमेव स्यादित्यत आह **सततं ददातीति**। तथा च पिन्वत इति लट्प्रत्ययश्छान्दसत्वेन सार्वकालिक इति भावः । **तस्येति** । इन्द्रशब्दितभागवत इत्यर्थः ।

भाष्ये जिह्वास्त्विति तुशब्दः चशब्दार्थतया कुक्षिसमुच्चायक इति भावेन योजनामाह **जिह्वाश्चेति** । ननु ककुच्छब्दाद्भवार्थे तत्र भव इति सूत्रेण अण्प्रत्यये णकारलोपे आदिवृद्धावणन्तत्वेन टिड्ढाणञित्यादिना ङीपि प्रथमाबहुवचने काकुद्यः इति निर्देशः स्यात् कथं काकुद इति निर्देश इत्यत आह **अकारलोपादिति** । अण्प्रत्ययाकारस्य छान्दसलोपेन दकारान्तत्वस्यैव प्राप्तत्वेन तस्मात्प्रथमाबहुवचने काकुद इति रूपमिति भावः । अकारलोपेन दकारान्तत्वसूचनायैव टीकायां काकुदित्येकवचनान्ततानुवाद कृत इति ज्ञेयम् । यद्वा एकैकस्मिन्मुखे जिह्वायाः एकत्वात्तदभिप्रायेणैकवचनान्ततयानुवादः कृत इति ज्ञेयम् ।

ब्रह्मो बहुमुखेषु याः भाष्योक्तांशस्य काकुद इति बहुवचनान्ताक्षिप्ततया प्राप्तत्वेन तदेव वाक्यत्वमिति सूचनाय शङ्कामुत्थाप्य योजनामाह **कथं बहुवचनमित्यदिना** । द्व्येकयोर्द्विवचनैकवचन इति द्वित्वैकार्थयोर्द्विवचनैकवचनयोर्विधानेन बहुषु बहुवचनमिति बहुवचनार्थ एव बहुवचनस्य विधानेन काकुद इति बहुवचनं कथमित्याकाङ्क्षायां जिह्वानां बहुत्वाद्बहुवचनोपपत्तिरिति प्रतिपादनाय बह्वचमित्युक्तमित्यर्थः । तदेव कथमिति जिह्वानां बहुत्वमेव कथमित्याकाङ्क्षायां मुखानां बहुत्वेन तद्गतजिह्वानामपि बहुत्वाद्बहुवचनं युक्तमिति प्रदर्शनाय बहुमुखेषु याः इत्युक्तमित्यर्थः । 'सहस्रशीर्षा पुरुषः, इन्द्रो मायाभिः पुरुरूप ईयते, पूर्णमदः पूर्णमिदम्'

इत्यादि श्रुतिषु 'जगृहे पौरुषं रूपम्' इत्युपक्रम्य 'पश्यन्त्वशेषरूपमदभ्रचक्षुषः सहस्रपादोरुभुजाननाद्भुतम्' इत्यादि भागवतपुराणेषु 'दर्शयामास पार्थाय परमं रूपमैश्वरम् । अनेकवक्त्रनयनमनेकाद्भुतदर्शनम् ।', 'रूपं महत्ते बहुवक्त्रनेत्रं महाबाहो बहुबाहूरुपादम्' इत्यादि भगवद्गीतादौ, बृहदारण्यकभाष्ये चतुर्थाध्याये पञ्चमब्राह्मणे उदाहृतेषु 'इन्द्रो मायाभिः' इत्येतच्छ्रुतिव्याख्यानरूपेषु स एव दशधा प्रोक्तो विष्णुमत्स्यादिरूपकः । शतं नारायणाद्यात्मा विश्वाद्यात्मा सहस्रकः । परादिरूपो बहुधा सोऽनन्तात्मा जितादिकः ।' इत्यादि प्रमाणेषु, 'तस्योपसङ्ग्रहादपि नानाभावादतिरेकाच्च' इत्यादि ब्रह्मसूत्रेषु च भगवदवताराणां बहुत्वावगमेन बहुमुखत्वावगमात् जिह्वानामपि बहुत्वावगमेन बहुवचनोपपत्तिरिति भावः । प्रसिद्धेन्द्रपक्षेऽपि तस्य नानाप्रजाप्रेरकत्वेन नानारूपत्वाद्बहुवचनोपपत्तिरिति ज्ञेयम् । बहुमुखेषु या इति यच्छब्दस्य प्रतिसम्बन्धितया प्राप्त यैच्छब्देन ता बह्वय इति वा तास्तर्पका इति वान्वयो बोध्यः ॥ ७७ ॥

**मंत्रः – ७८**

(अ.१, सू.८, मं.८)

**एवा ह्यस्य सूनृता विरप्शी गोमती मही ।**
**पक्वा शाखा न दाशुषे ॥**

**पदपाठः**

एव । हि । अस्य । सूनृता । विऽरप्शी ।
गोऽमंती । मही । पक्वा । शाखा । न । दाशुषे ॥

### भाष्यम्

**एवमेवास्य वाणी च वेदेता महती तथा ।**
**पक्वा शाखेव [1]यजते [2]वरदात्री विरप्शिनः ।**
**बलिष्ठस्य हिते ॥ ७८ ॥**

### टीका

यस्त्वं विरप्शी विशिष्टबलवांस्तस्य विरप्शिनो बलिष्ठस्यास्य ते तव सम्बन्धिनी गोमती वाग्युता वेदेता वेदैः स्तुत्या मही महती या सूनृता साध्वी वाणी साप्येवाहि एवमेव हि कुक्ष्यादिवदेव दाशुषे यजते । पक्वफलवती कल्पतरुशाखेव वरदात्री भवतीति शेषः । यद्वा विरप्शिनो बलिष्ठस्यास्य ते तव सम्बन्धिनी हि यस्मात्तस्माद्विरप्शीति प्रत्ययान्तर्भावेन सूनृताया विशेषणमुक्तम् । यद्यपि विरप्सीति महन्नामसु पठितम् । तथापि महीत्यनेन गतार्थत्वादन्यथाव्याख्यातम् ॥ ७८ ॥

### टिप्पणी

एवाह्यस्य भाष्ये विरप्सिनं त इति पदद्वयाध्याहारेण विरपिसन् शब्दार्थस्य[3] अस्येति षष्ठ्यन्तान्वितत्वेन व्याख्यानात्तद्घटनार्थं यस्त्वमितिपदद्वयाध्याहारेण योजनामाह यस्त्वं विरप्सीति । विपूर्वाद् परव्यक्तायां वाचीति धातोरौणादिकइप्रत्ययान्तस्य[4] य इत्युक्त ऱयच्छब्दस्य प्रतिसम्बन्धितया

---

१. यजतो – पा० । २. फलदात्री – पा० । ३. विरप्सिंछब्दार्थस्य - क ।

४. धातोरौणादिक-इप्रत्ययान्ततया निष्पन्नस्य विरप्सशब्दस्य धातूनामनेकार्थत्वमादाय बलार्थकत्वेन विरप्समस्यास्तीति मत्वर्थे अत इनिठनाविति इन्प्रत्ययान्ततया निष्पन्नस्य विरप्सिन् शब्दस्य बलवत्वमित्यर्थ इत्यभिप्रेत्य योजनामाह **विशिष्टबलवानिति** ।)

प्राप्तस्य तस्येति पदस्य भाष्यपदेनान्वयमाह **तस्य विरप्सिन इति** । बलिष्ठस्य हीति भाष्यप्रयुक्त हिशब्दः 'स्वाभाविकी ज्ञानबलक्रिया च, अप्रक्षितं वसु बिभर्षि हस्तयोरषाळ्हं सहस्तन्विश्रुतो धृषे, स वै बलं बलिनां चापरेषाम्' इत्यादिप्रमाणेषु भगवतो बलिष्ठत्वप्रसिद्धिद्योतक इति ज्ञेयम् ।

ऋचि एवाह्यस्थेत्यत्र संहितायामेव शब्दस्य निपातस्य चेति एव दीर्घः[1] । एवशब्दस्यावृत्याद्यस्य एवं शब्दार्थत्वं द्वितीयस्यावधारणार्थत्वमिति[2] प्रदर्शनाय भाष्ये एवमेवेत्युक्तमित्यभिप्रेत्य योजनामाह **एवाहि एवमेव हीति** । अस्यामृच्युत्तरत्र ऋग्द्वये च प्रयुक्त हि शब्दः प्रमाणप्रसिद्धिद्योतक इति ज्ञेयम् । तानि प्रमाणान्युपनिषद्भाष्यादावुदाहृतानि द्रष्टव्यानि ।

कुक्ष्यादिवदिति । आदिपदेन जिह्वाग्रहणम् । यथा कुक्षिः समुद्र इव सर्वाभीष्टसाधकः, यथा जिह्वाप इव सर्वाभीष्टसाधिका, तथा वाण्यपि कल्पतरुशाखेव सर्वाभीष्टसाधिकेति पूर्वोक्तकुक्ष्यादेरत्रोक्तवाण्याश्च दृष्टान्तदार्ष्टान्तिकभावो ज्ञेय इति भावः ।

ऋचि भाष्ये च पक्वशब्दः पक्वफलावसर इत्यभिप्रेत्यार्थमाह **पक्वफलवतीति** । वरदात्रीत्युक्तत्वात् कल्पतर्वित्युक्तमिति ज्ञेयम् । पक्वा शाखेवेत्युपमार्थतया भाष्ये प्रयुक्तस्य वरदात्रीत्यनन्तरमपेक्षितशेषमाह **भवतीति शेष इति** । भाष्ये विरप्सिन इति षष्ठ्यन्तं विरप्सीति पदस्य सूनृताविशेषणत्वोपपादनार्थं प्रयुंक्तम् । बलिष्ठस्य हीति हिशब्दश्च हेत्वर्थकतया प्रयुक्त इत्यभिप्रेत्य योजनान्तरमाह **यद्वेति** ।

---

१. निपातस्य चेति दीर्घः - रा. ।

२. अवधारणार्थकत्वमिति - क, रा. ।

ननु विरप्सिन सम्बन्ध्यर्थे विरप्सिन् शब्दात् तस्येदमित्यणप्रत्यये आदिवृद्धौ नस्तद्धित इति प्राप्त टिलोपस्य इनण्यनपत्य इति निषेधे टिड्ढाणञित्यादिना ङीपि वैरपिसिनीति निर्देशः स्यात्, कथं विरप्सीति निर्देश इत्यत आह **प्रत्ययान्तर्भावेनेति** । सम्बन्धार्थकणप्रत्ययस्य छान्दसलोपाश्रयणेनेत्यर्थः । तथा च प्रत्ययस्य लुप्तत्वेन प्रत्ययाश्रित-कार्याणामप्यभाव इति भावः । नन्वेवमपि विरप्सिन्शब्दात् ऋन्नेभ्यो ङीबिति ङीप्प्रत्यये विरप्सिनीति निर्देशः स्यादिति चेन्न, ङीप्प्रत्यये परतः इन्प्रत्ययस्य छान्दसलोपाश्रयणेन गौरित्यादिशब्दवत् ईकारान्त-त्वोपपत्तिरिति, अत एव प्रत्ययान्तर्भावेनेति सामान्यत उक्तमिति ज्ञेयम् ।

**यद्यपीति** । वेदनिघण्टौ महद्ब्रध्न इत्यादिषु महन्नामसु विरप्सीति पदं पठितमित्यर्थः । **अन्यथेति** । बलवत्वार्थकतया व्याख्यानमित्यर्थः । ॥ ७८ ॥

**मंत्रः – ७९**

(अ.१, सू.८, मं.९)

**एवा हि ते विभूतय ऊतयं इन्द्र मावंते ।**
**सद्यश्चित्सन्तिं दाशुषें ॥**

**पदपाठः**

एव । हि । ते । विऽभूतयः । ऊतयः । इन्द्र ।
माऽवंते । सद्यः । चित् । सन्तिं । दाशुषें ॥

**भाष्यम्**

**सन्ति सद्योऽपि यजते [1]हि ते ।**
**मावते ज्ञानिने नित्यमूतयश्च विभूतयः ॥ ७९ ॥**

**टीका**

**हे इन्द्र ! ते दाशुषे त्वां यजते मावते ज्ञानिने दातुं ते तव विभूतयः ऐश्वर्याण्यूतयो रक्षाश्च सद्यश्चित्सद्योऽपि नित्यमिति यावत् । सन्त्येव हि ॥ ७९ ॥**

**टिप्पणी**

मा मान इति धातोः क्विप्प्रत्ययान्ततया निष्पन्नस्य माशब्दस्य 'मानं ज्ञानं लयश्चैव मर्यादा चैव कथ्यते । उत्पादनं च संख्यानं बलं च क्वचिदुच्यत ।' इति शब्दनिर्णय इति बृहदारण्यकभाष्ये अश्वमेधब्राह्मणोक्त-वचनानुसारेण माशब्दस्य ज्ञानार्थकत्वलाभात् । तस्मान्मतुप्प्रत्यये मस्य वत्वे चतुर्थ्येकवचनमावत इत्यस्य ज्ञानिन इत्यर्थपरत्वमित्यभिप्रायेण[2] तत्रापेक्षितशेषं पूरयति **दातुमिति** ।

त्वं सुतस्यापीतये सद्यो वृद्धोऽजायथाः । इत्यस्यामृचि भाष्ये सदा पूर्ण इति सद्यःशब्दस्य सदाशब्दार्थतया व्याख्यानात् । तत्र टीकायां समने अहनीत्यादिना विवृतत्वाच्च प्रकृते तत्रोक्तरीत्या सद्यश्शब्दस्य सदाशब्दार्थकत्वमिति[3] प्रदर्शनाय भाष्ये[4] नित्यमित्युक्तमित्यभिप्रेत्य

---

१. ऽस्य ते – पा० । २. इत्यभिप्रेत्य इति पा० ।
३. सदार्थकत्वमिति - क, रा. । ४. भाष्ये ऋचि विद्यमान चिच्छब्द-स्याप्यर्थकतया नित्यमित्युक्तमित्यभिप्रेत्य योजनामाह - क ।

योजनामाह सद्योपि नित्यमिति यावदिति । यद्वा विभूतिशब्दितैश्वर्याणा-मूतिशब्दितरक्षाणां च सार्वकालिकत्वप्रदर्शनाय ऋचिविद्यमानचिच्छब्द अप्यर्थकतया व्याख्यातं इति ज्ञेयम् । न केवलं पूर्वोत्तरकालयोः किन्तु सद्योऽपीत्यर्थलाभात् तद्विवरणपरतया नित्यमिति पदं प्रयुक्तमिति ज्ञेयम् । अत्राप्येवशब्दस्य पूर्ववद्दीर्घ इत्यभिप्रेत्य तस्यावधारणार्थकतया पदेन[1] योजनमाह सन्त्येव हीति ॥ ७९ ॥

मंत्रः – ८०

(अ.१, सू.८, मं.१०)

**एवा ह्यस्य काम्या स्तोम उक्थं च शंस्या ।**
**इन्द्राय सोमपीतये ॥**

पदपाठः

एव । हि अस्य । काम्या । स्तोमः । उक्थम् ।
च । शंस्या । इन्द्राय । सोमऽपीतये ॥

भाष्यम्

**स्तोमा उक्थानि चैवास्य तस्मै काम्यानि सर्वदा ।**
**गेयाः शंस्यानि सोमस्य पीतये नान्यथा पिबेत् ॥ ८० ॥**

टीका

अस्य परमेश्वरस्य काम्या काम्यानि प्रियाणि । उक्थमुक्थानि । सोमपीतये सोमपानार्थम् । तस्मै इन्द्राय । शंस्या शंस्यान्येव हि ।

१. क्रियापदेन - क ।

**स्तोमः स्तोमाश्च इन्द्राय सोमपीतये गेया इति शेषः । सोमपीतय इत्युपपादयति नान्यथेति । स्तुत्या प्रसन्न एव हि । पिबति न तु अभिलाषेणेति ॥ ८० ॥**

## टिप्पणी

ऋचि स्तोम उक्थमित्येकवचनं बहुवचनार्थे तथा च तद्विशेषण-भूतानां काम्येत्यादिपदानामपि बहुवचनार्थत्वमिति प्रदर्शनाय भाष्ये स्तोमा इत्यादि बहुवचनान्ततया निर्देशः कृत इत्यभिप्रेत्य योजनामाह **काम्येत्यादिना** । **काम्यानीति** । ऋचि काम्या शंस्येति पदद्वये सुपां सुलुगित्यादिनाकारादेश इति भावः । **उक्थानीति** । उक्थशब्दितस्तोत्र-साधनशास्त्राणीत्यर्थः । काम्यशब्दितप्रीतिविषयत्वमुक्थानां न कादाचि-त्कम् । किन्तु सर्वे वेदाः सर्वे घोषा एकैव व्याहृतिः प्राण एव, नामानि सर्वाणि यमाविशन्ति, गुणोत्कर्षे देवदेवस्य विष्णोर्महातात्पर्यं नैव चान्यत्र सत्यम्' इत्यादिप्रमाणैः सर्ववेदानां भगवदेकपरत्वस्य निर्णीतत्वेन सर्वदा भगवत्प्रीतिविषयत्वमिति प्रदर्शनाय भाष्ये काम्यशब्दान्वितत्वेन सर्वदे-त्युक्तमिति ज्ञेयम् । सर्वदेत्यस्यावृत्त्या गेया शंस्यानीत्युत्तरत्र पदद्वयेना-प्यन्वयो बोध्यः । तात्पर्यं पूर्ववदेवेति ज्ञेयम् । उभयत्राप्यन्वयस्य स्फुट-त्वादेव टीकायां सर्वदेतिपदानुवादो न कृत इति ज्ञेयम् ।

अत्राप्येवशब्दस्यावधारणार्थत्वं हिशब्दस्य प्रसिद्ध्यर्थकत्वमित्यभि-प्रेत्य योजनामाह **शंस्यान्येव हीति** । ऋचि भाष्ये च उक्थशब्दपरत्वेन सुतशब्दो भिन्नक्रमतया स्तोमशब्देनान्वेतीत्यभिप्रेत्य योजनामाह **स्तोम-स्तोमाश्चेति** । तथा च काम्यत्वविशेषणमत्र चशब्देन समुच्चीयत इति भावः ।

गेया इति शेष इति । ऋच्यध्यूढं साम गायतीत्युक्तेः प्रकृते स्तोमशब्देन गायत्ररथन्तरबृहत्भद्रराजनादिशब्दवाच्यानां साम्नां विवक्षितत्वप्रदर्शनाय भाष्ये ज्ञेया इति शेषत्वेन पूरित इत्यर्थः । अत एव शस्त्रशब्दस्यान्वयो न कृतः । तस्य गानपरतया प्रयोगाभावादिति ज्ञेयम् ।

उक्तं च द्वितीयाध्यायप्रथमपादे 'स्तुतशस्त्रयोस्तु संस्कारो याज्यावद्देवताभिधायित्वात्' इत्यधिकरणे शास्त्रदीपिकादौ 'आज्यैः स्तुवत' इत्यादि प्रगीतमन्त्रसाध्यं गुणेन गुणिनः सम्बन्धाभिधानं स्तवनं स्तोत्रमप्रगीतमन्त्रसाध्यं स्तवनमेव शस्त्रम् । प्र उगं शंसतीत्यादीति । गेया इत्यत्राप्येव हिशब्दयोः गेया एव हीत्यन्वयो बोध्यः । सोमाश्चेति चशब्देन तयोरप्यनुवृत्तिसूचनादिति ज्ञेयः । न त्वभिलाषेणेति । तृषितवत् पिपासारूपाभिलाषेण न पिबतीत्यर्थः । 'आप्तकामस्य का स्पृहा' इत्यादेरिति भावः ॥ ८० ॥

## सूक्तम् – ९

दशार्चम् । मधुच्छन्दाः । इन्द्रः । गायत्री ।

**मंत्रः – ८१**

(अ.१, सू.९, मं.१)

**इन्द्रेहि मथ्स्यन्धसो विश्वेभिः सोमपर्वभिः ।**
**महाँ अभिष्टिरोजसा ॥**

पदपाठः

**इन्द्र । आ । इहि । मत्सि । अन्धसः । विश्वेभिः । सोमपर्वऽभिः । महान् । अभिष्टिः । ओजसा ॥**

भाष्यम्

**सोमपाः सोमपर्वाणः सर्वं यस्मात्तदिच्छया ।**
**अभिष्टिरोजसा नित्यं मदं सुरव्मवाप्स्यसि ।। ८१ ।।**

टीका

एतदपि दशर्चमैन्द्रं सूक्तम् ।

सोमपर्वशब्दार्थमाह **सोमपा इति** । सोमशब्दोपपदात्पिबतेरर्वन्-प्रत्यये कृते सोमपाः सोमपर्वाण इत्युच्यन्त इत्यर्थः । यद्वा सोमस्य यानि पर्वाणि अवदानानि तानि येषां ते सोमपर्वाणः । यो हि यस्याहारः स तस्य भवतीति सोमपा इत्यर्थः । अभिष्टिपदं व्याख्याति **सर्वमिति** । सर्वं जगद्यस्मात्तदिच्छया वर्ततेऽतोऽसावभिष्टिः अभितः सर्वविषये इष्टिरिच्छा यस्येति शकन्ध्वादित्वाद्दीर्घाभावः । ओजसेत्यस्याभिष्टित्वोपपादकत्वं सूचयितुं स्वरूपेण ग्रहणम् । मत्सीति व्याख्याति **मदमिति** । विकरणादिव्यत्यासेनेत्यर्थः । अवाप्स्यसीत्युक्त्या प्राप्तामनित्यत्वशङ्कां निवारयति **नित्यमिति** । हे इन्द्र ! महानोजसा सामर्थ्येनाभिष्टिश्च त्वं विश्वेभिर्विश्वैः सोमपर्वभिर्देवैः सह एहि । एत्य चान्धसोऽन्धसा हविरादिनाऽस्मद्दत्तेन मत्सि मदं प्राप्स्यसि ।। ८१ ।।

टिप्पणी

सोमपर्वशब्दस्य सोमपानकर्तृत्वार्थकत्वं कथमित्यतस्तत्र व्युत्पत्तिं दर्शयति सोमशब्देति । उणादयो बहुलमिति सूत्रे वृत्त्यादौ संज्ञासु धातु-रूपाणि प्रत्ययाश्च ततः परे कार्याद् विद्यादनुबन्धमेतच्छास्त्रमुणादिषु, इति प्रत्ययादेरूह्यत्वोक्तेः प्रकृते सोमशब्दोपपदात् पा पान इति धातोरर्वतिप्रत्यये

गेया इति शेष इति । ऋच्यध्यूढं साम गायतीत्युक्तेः प्रकृते स्तोमशब्देन गायत्ररथन्तरबृहत्भद्रराजनादिशब्दवाच्यानां साम्नां विवक्षितत्वप्रदर्शनाय भाष्ये ज्ञेया इति शेषत्वेन पूरित इत्यर्थः । अत एव शस्त्रशब्दस्यान्वयो न कृतः । तस्य गानपरतया प्रयोगाभावादिति ज्ञेयम् ।

उक्तं च द्वितीयाध्यायप्रथमपादे 'स्तुतशस्त्रयोस्तु संस्कारो याज्यावद्देवताभिधायित्वात्' इत्यधिकरणे शास्त्रदीपिकादौ 'आज्यैः स्तुवत' इत्यादि प्रगीतमन्त्रसाध्यं गुणेन गुणिनः सम्बन्धाभिधानं स्तवनं स्तोत्रमप्रगीतमन्त्रसाध्यं स्तवनमेव शस्त्रम् । प्र उगं शंसतीत्यादीति । गेया इत्यत्राप्येव हिशब्दयोः गेया एव हीत्यन्वयो बोध्यः । सोमाश्चेति चशब्देन तयोरप्यनुवृत्तिसूचनादिति ज्ञेयः । न त्वभिलाषेणेति । तृषितवत् पिपासारूपाभिलाषेण न पिबतीत्यर्थः । 'आप्तकामस्य का स्पृहा' इत्यादेरिति भावः ॥ ८० ॥

## सूक्तम् – ९

**दशार्चम् । मधुच्छन्दाः । इन्द्रः । गायत्री ।**

**मंत्रः – ८१**

(अ.१, सू.९, मं.१)

**इन्द्रेहि मत्स्यन्धसो विश्वेभिः सोमपर्वभिः ।**
**महाँ अभिष्टिरोजसा ॥**

**पदपाठः**

**इन्द्र । आ । इहि । मत्सि । अन्धसः । विश्वेभिः । सोमपर्वऽभिः । महान् । अभिष्टिः । ओजसा ॥**

भाष्यम्

**सोमपाः सोमपर्वाणः सर्वं यस्मात्तदिच्छया ।**
**अभिष्टिरोजसा नित्यं मदं सुखमवाप्स्यसि।। ८१ ।।**

टीका

एतदपि दशार्चमैन्द्रं सूक्तम् ।

सोमपर्वशब्दार्थमाह **सोमपा इति** । सोमशब्दोपपदात्पिबतेरर्वन्-प्रत्यये कृते सोमपाः सोमपर्वाण इत्युच्यन्त इत्यर्थः । यद्वा सोमस्य यानि पर्वाणि अवदानानि तानि येषां ते सोमपर्वाणः । यो हि यस्याहारः स तस्य भवतीति सोमपा इत्यर्थः । अभिष्टिपदं व्याख्याति **सर्वमिति** । सर्वं जगद्यस्मात्तदिच्छया वर्ततेऽतोऽसावभिष्टिः अभितः सर्वविषये इष्टिरिच्छा यस्येति शकन्ध्वादित्वाद्दीर्घाभावः । ओजसेत्यस्याभिष्टित्वोपपादकत्वं सूचयितुं स्वरूपेण ग्रहणम् । मत्सीति व्याख्याति **मदमिति** । विकरणादिव्यत्यासेनेत्यर्थः । अवाप्स्यसीत्युक्त्या प्राप्तामनित्यत्वशङ्कां निवारयति **नित्यमिति** । हे इन्द्र ! महानोजसा सामर्थ्येनाभिष्टिश्च त्वं विश्वेभिर्विश्वैः सोमपर्वभिर्देवैः सह एहि । एत्य चान्धसोऽन्धसा हविरादिनाऽस्मद्दत्तेन मत्सि मदं प्राप्स्यसि ।। ८१ ।।

टिप्पणी

सोमपर्वशब्दस्य सोमपानकर्तृत्वार्थकत्वं कथमित्यतस्तत्र व्युत्पत्तिं दर्शयति **सोमशब्देति** । उणादयो बहुलमिति सूत्रे वृत्त्यादौ संज्ञासु धातु-रूपाणि प्रत्ययाश्च ततः परे कार्याद् विद्यादनुबन्धमेतच्छास्त्रमुणादिषु, इति प्रत्ययादेरूह्यत्वोक्तेः प्रकृते सोमशब्दोपपदात् पा पान इति धातोरर्वतिप्रत्यये

उपदेशोऽजनुनासिक इदिति इकारलोपे प्रत्ययस्य किद्वद्भावेन वा ककारानुबन्धकरणेन वा कर्वतिप्रत्ययमाश्रित्य ककारस्य लशकतद्धिते इति लोपे सति कत्वाश्रयणेन वा मुक्तानुबन्धक अर्वन्प्रत्यये परतः आतो लोप इटि चेत्यकारलोपे प्रथमाबहुवचने सोमपर्वाण इति निर्देशेन सोमपाः सोमपर्वाण इति भाष्योक्तव्याख्यानव्याख्येयभावोपपत्त्या सोमपर्वभिरित्यनेन सोमापानकर्तृभिरित्यर्थनिर्देश इति भावः ।

भाष्ये तु सोमशब्दोपपदात् पा पान इति धातोः विच्प्रत्यये तस्य सर्वापहारिलोपे प्रथमाबहुवचने सोमपा इति निर्देश इति ज्ञेयम् । उणादिचतुर्थपादे स्नामदिपद्यर्तिपृशकिभ्यो वनिप् इति सूत्रे पृ पालन पूरणयोरिति धातोर्वनिप्प्रत्ययान्ततया पर्वशब्दनिष्पन्नत्वोक्तेस्तदनुसारेण पक्षान्तरमाह **यद्वेति** । **अवदानानीति** । सोमरसस्य भागविशेषादित्यर्थः[१] । चतुरवत्तं जुहोति चतुरवत्तस्यास्यै एकादशावदानान्यवद्यग्रन्थिः शिक्यानाववदानशब्दस्यैकदेशार्थपरतायाः स्पष्टत्वेन प्रकृतेऽप्यवेत्युपसर्गपूर्वस्य दो अवखण्डन इति धातोर्निष्पन्नस्य अवदानशब्दस्यैकदेशशब्दितभागविशेषार्थकत्वमिति ज्ञेयम् ।

यद्यप्युणादिवृत्तौ पर्वा पुण्यतिथिश्चेति पर्वशब्दवाच्यतया ग्रन्थिपुण्यतिथिरूपार्थद्वयस्यैवोक्तेः कथं पर्वशब्दस्यावदानार्थकतया व्याख्यानं क्रियत इति चेत् उच्यते 'पठेयुराख्यानमिदं सदा बुधाः शृण्वन्त्यथो पर्वणि पर्वणीन्द्रियम्' इत्यादि भागवतषष्ठस्कन्धत्रयोदशाध्यायादौ पौर्णमास्यमावास्यादिपुण्यतिथिप्रयोगवत् 'यान्सन्धीनधिदैवतमवोचाम पर्वाणि तान्यध्यात्मम्[२] इत्यैतरेयोपनिषदादौ सन्धिशब्दितैकदेशार्थकत्वेनापि प्रयोग-

---

१. भागविशिष्टादित्यर्थः । २. तृतीयाप्रपट्ठके द्वितीयाध्यायः ।

दर्शनेन प्रकृते उणादिवृत्त्युक्तग्रन्थिशब्दस्यैकदेशार्थकत्वमादाय वा धातूनामनेकार्थकत्वमादाय वा पर्वशब्दस्यावदानशब्दितैकदेशार्थकत्वेन व्याख्यानोपपत्तिरिति । उणादीनां व्युत्पत्तिप्रदर्शनमात्रपरत्वेन प्रयोगविशेषेऽर्थविशेषपरतायाः ग्राह्यत्वादिति[1] शाब्दिकैरेवोक्तत्वादिति भावः ।

[2]नन्वस्मिन् पक्षे पर्वशब्दस्य भोक्तृभोज्यलक्षणसम्बन्धरूपत्वात् सोमपर्वशब्देन सोमपानकृतत्वार्थलाभादिति भावः । नन्वनेकमन्यपदार्थ इति बहुव्रीहिसमासविधायकसूत्रे समानाधिकरणानां बहुव्रीहिरिष्यत इति वृत्त्यादावुक्तत्वेन सोमपर्वशब्दे कथं व्यधिकरणबहुव्रीह्याश्रयणमिति चेदुच्यते सप्तमी विशेषणे बहुव्रीहाविति सूत्रे बहुव्रीहौ सप्तम्यन्तस्य पूर्वनिपातत्वोक्त्या व्यधिकरणबहुव्रीहेरप्याश्रयणस्य वृत्त्यादौ ज्ञापितत्वोक्तेः प्रकृते व्यधिकरणबहुव्रीह्याश्रयणं युक्तमिति ।

प्रथमपक्षे तु सोमं पिबतीति सोमपर्वण इत्युपपदसमासो ज्ञेयः । भाष्ये तदिच्छयेत्यस्यानन्तरमपेक्षितशेषमाह **वर्तत इति** । सर्वं जगदित्युक्तार्थः कथमभिष्टिपदेन प्राप्त इत्यत आह **अभित इति** । इच्छा यस्येत्यसावभिष्टिरिति पूर्वेण वा बहुव्रीहिसमासप्राप्त्यर्थविवरणमेव भाष्ये कृतमिति भावः । नन्वभिशब्दस्येष्टिपदेन समासे अकःसवर्णे दीर्घ दीर्घेऽभीष्टिरिति ऋचि निर्देशस्स्यात् कथमभिष्टिरिति निर्देश इत्यत आह **शकन्ध्वादित्वादिति** ।

---

१. अग्राह्यत्वादिति - क ।

२. नन्वस्मिन् पक्षे पर्वशब्दस्य धात्वन्तरनिष्पन्नत्वेन पा पान इति धातोर्निष्पन्नत्वाभावात् सोमपा इत्युक्त सोमपातृत्वार्थलाभः कथमित्यत आह एहीति । सोमस्य पर्वणि एषामिति बहुव्रीहिसमासान्तर्गतषष्ठ्यर्थस्य भोज्यभोक्तृभावसम्बन्धरूपत्वात् सोमपर्वशब्देन सोमपानकर्तृत्वार्थलाभ इति भावः । - क ।

शकन्ध्वादिषु पररूपं वाच्यमिति दीर्घापवादकतया पररूपविधानात्प्रकृते ह्रस्वैकदेशेन अभिष्टिरिति निर्देश उपपन्न इति भावः । ऋक्पदानुवादरूपत्वाद्भाष्येऽपि तथैव निर्देशः कृत इति ज्ञेयम् ।

ननु ऋक्पदे विवरणे भाष्ये[1] ओजसेत्यस्य सामर्थ्येनेति प्रतिपदे निर्देष्टव्ये कथमोजसेति स्वरूपेण ग्रहणं कृतमित्यत आह **ओजसेत्यस्येति** । यथा 'अथातो ब्रह्मजिज्ञासा' इति सूत्रे अथ कस्मादुच्यते ब्रह्मेति बृहन्तो ह्यस्मिन् गुणा इति श्रुत्या ब्रह्मशब्दार्थतयोक्तस्य सकलगुणपूर्णत्वस्योपपादकतया 'जन्माद्यस्य यतः' इति सूत्रे जगज्जन्मादिकर्तृत्वमुच्यते तथा प्रकृतेऽपि सर्वजगन्नियामकतेच्छावत्वरूपाभिष्टित्वोपपादनाय 'परास्य शक्तिर्विविधैव श्रूयते, विष्णोर्नु कं वीर्याणि प्रवोचम्, प्रेरकः सर्वदेहानां प्राणधी चोदिता च सः' इत्यादिप्रमाणेषु प्रसिद्धस्य सर्वसामर्थ्ययुक्तस्य प्रतिपादकमभिष्टिपदसन्निहिततया पठितमोजसेति पदं प्रवृत्तमित्युपपाद्योपपादकत्वस्य स्फुटतया स्वरूपेण ग्रहणं कृतमिति भावः ।

ननु मदी हर्षे इति दैवादिषु पठिताद्धातोः दिवादिभ्यः श्यनिति श्यन् विकरणे शमामष्टानां दीर्घः श्यनीत्युपधा दीर्घे माद्यसीति निर्देशः स्यात् । कथं मात्सीति निर्देशः, किञ्चावाप्स्यसीति भाष्ये भविष्यदर्थकलृडन्तपदेन व्याख्यानात् व्याख्येयपदेऽपि भविष्यदर्थकस्यैव ग्राह्यत्वेन लृडन्तप्रयोगस्यैव कर्तव्यत्वात् कथं मत्सीति वर्तमानार्थकलडन्तप्रयोगश्चेत्यत आह **विकरणादीति** । श्यन्विकरणस्य लुग्विकरणव्यत्यासेनादिपदेन लृट्प्रत्ययस्य लट्प्रत्ययव्यत्यासेन चेत्यर्थः । तथा च मदी हर्षे इति धातोः उपदेशेऽजनुनासिक इदितीकारलोपे लटि सिपि मत्सीति रूपमिति भावः ।

---

१. ऋक्पदविवरणपरे भाष्ये - क ।

अवाप्स्यसीत्युक्तेति। लृटो भविष्यदर्थकत्वेन मत्सीति प्रकृत्यर्थभूत-मदशब्दितसुखस्य भविष्यत्कालसम्बन्धित्वस्यैव प्रतीतेरिदानीं नास्तीत्यनित्यत्वशङ्का स्यात् तां वारयितुं नित्यमिति भाष्ये प्रयुक्तमित्यर्थः। लृट्प्रयोगस्त्वभिव्यक्त्यपेक्षयेति भावः।

समग्रऋक्पदानि योजयति हे इन्द्रेत्यादिना। महानिति। गुणैरनन्त इत्यर्थः। महान् इन्द्रः परश्चनु इत्यत्रैवमेवार्थोक्तेरिति ज्ञेयम्। सहेहीति। आ इहीति स्थिते आद्गुण इति गुणे एहीति रूपसिद्धौ सहेत्यस्य ओमाङोश्चेति पररूपत्वे सहेहीति रूपमिति ज्ञेयम्। एवमेव इन्द्रेहीत्यत्रापि इन्द्र आ इहि इन्द्रेहीति निर्देशो ज्ञेयः।

अन्धस इति। षष्ठी व्यत्ययेन तृतीयार्थे वर्तत इत्यभिप्रेत्य योजनामाह अन्धसः अन्धसेति। 'भिस्सा स्त्री भक्तमन्धोऽन्नम्' इत्यमरोक्तेः प्रकृतेऽन्धशब्दस्य हविरादिरूपान्नविशेषपरत्वमित्यभिप्रेत्य योजनामाह हविरादिनान्वेतीति[1] ॥ ८१ ॥

**मंत्रः – ८२**

(अ.१, सू.९, मं.२)

**एमेनं सृजता सुते मन्दिमिन्द्राय मन्दिने।**
**चक्रिं विश्वानि चक्रये ॥**

**पदपाठः**

**आ। ईम्। एनम्। सृजत। सुते। मन्दिम्।**
**इन्द्राऽय। मन्दिने। चक्रिम्। विश्वानि। चक्रये ॥**

---

१. हविरादिनेति - क।

**भाष्यम्**

**एनमासृजतेन्दौ च विष्णुं तं मदकारि[1]णम् ।**
**मन्दिने विष्णवे सम्यक्कर्मिणं सर्वकर्मिणे ॥ ८२ ॥**

**टीका**

हे ऋत्विजः ! **तमेनं मन्दिं मदकारिणम्** । करणे इकारः । चक्रिं आदृगमेति करणे किः । आ इत्युपसर्गस्य चक्रिमित्यनेनापि सम्बन्धः । सम्यक्कर्मिणं विष्णुम् । **मन्दिने** मदशीलाय । विश्वानि चक्रये विश्वानि कार्याणि कृतवते सर्वकर्मिणे । इन्द्राय विष्णवे तस्य पानार्थम् । सुते इन्दौ सोमे आसृजत । सन्निहितं कुरुतैव । स्वसन्निधानपवित्रितमेव सोमं देवः पिबतीति ॥ ८२ ॥

**टिप्पणी**

सृजतेति मध्यमपुरुषप्रयोगात् तदपेक्षितकर्तृपदमध्याहृत्य योजयति **हे ऋत्विज इति** । ऋच्येमेनमित्यत्र आ ईम् एनमिति पदविभागः । तत्र एनमित्यस्यान्वादेशत्वस्फोरणाय भाष्ये तमित्युक्तमित्यभिप्रेत्य योजनामाह **तमेनमिति** । **करण इकार इति** । मदि स्तुतमोदमदस्वप्नकान्तिगतिष्विति शब्विकरणे पठितात् मदिधातोः करणकारकेऽर्थे इप्रत्यये इदितो नुम् धातोरिति नुमागमे मन्दिमिति रूपसिद्धिरिति भावः । मदकारणमित्युक्त-कारणशब्दस्तु करणापरनामकसाधनपर इति ज्ञेयम् ।

चक्रिशब्दनिष्पत्तिप्रकारं दर्शयति **आदृगमेतीति** । तृतीयाध्याय-द्वितीयपादे 'आदृगमहनजनः किकिनौ लिट् च' इति सूत्रे वृत्यादावाकारा-

---

१. मदकारणम् ।

न्तेभ्यो धातुभ्य ऋवर्णान्तेभ्यो धातुभ्यः गमहनजनेत्येतेभ्यो छन्दसि विषये ताच्छील्याद्यर्थेषु किकिनौ प्रत्ययौ भवतः, लिड्वच्च तौ भवतः इत्यर्थोक्तेः प्रकृते डुकृञ् करणेति धातोः क्रियत अनेनेति करणकारकेऽर्थे ऋकारान्तत्वनिमित्तककिप्रत्यये आदिर्ञिटुडव इति डु इत्यस्य लोपे हलन्त्यमिति ञकारलोपे लशक्वतद्धित इति प्रत्ययककारलोपे लिड्वद्भावनिमित्तकद्विर्वचनादिकार्ये धातुऋकारस्य यणादेशे चक्रिशब्दनिष्पत्तौ तस्य आ इत्युपसर्गसम्बन्धे आचक्रमित्यस्य सम्यक्कर्मसाधनमित्यर्थपरत्वोपपत्तेरिति भावः । **चक्रमित्यनेनापीति** ।

अपिशब्देन आ इत्युपसर्गस्यावृत्त्या आसृजतेति क्रियासम्बन्धं समुच्चिनोति । उपसर्गान्वितचक्रिशब्दव्युत्पत्तिलब्धार्थं भाष्यपदारूढतया दर्शयति **सम्यक्कर्मणमिति**[१] । करणं कारणं कर्तेत्यादिसहस्रनामादिप्रमाणैर्भगवतः सर्वप्रमाणसम्बन्धिकर्माणि प्रति करणशब्दितसाधनत्वावगमेन प्रकृते सम्यक्कर्माण्यस्य सन्तीति मतुबर्थसम्बन्धस्य साध्यसाधनरूपस्य विवक्षितत्वात् आ चक्रिमित्यनेनैकार्थकत्वमिति भावः ।

**मन्दिनेति** । पूर्वोक्त मदिधातोः शीलार्थे औणादिक इनिप्रत्यये धात्विकारस्य प्रत्ययान्त्येकारस्य च उपदेशेऽजनुनासिक इदिति लोपे धातोर्नुमागमे चतुर्थ्येकवचने मन्दिन इति रूपसिद्धेस्तस्य मदशीलायेत्यर्थपरत्वमिति भावः । 'नित्यं ज्ञानमानन्दं ब्रह्म, आनन्दो ब्रह्मेति व्यजानात्, आनन्दमयोऽभ्यासात्, तद्धेतुव्यपदेशाच्च' इत्यादिश्रुतिसूत्रेषु भगवतः मदशब्दितानन्दरूपत्वावगमेन सोमपानेन प्राप्तव्यसुखाभावात् तत्प्रीत्यैव सोमं पिबति न त्वभिलाषेणेत्यर्थसूचनाय शीलार्थकतया व्याख्यातमिति ज्ञेयम् ।

---

१. सम्यक्कर्मकरणमिति - क ।

आ इत्युपसर्गस्य उपसर्गा क्रियायोगे इति सृजतेत्यनेनान्वयस्य स्पष्टत्वात्तदनुवादपूर्वकं ईमित्यस्य एवार्थकतया सृजतेत्यनेनान्वय इत्युपेत्य विशिष्टपदलब्धार्थं दर्शयति आसृजत सन्निहितं कुरुतैवेति ।

भाष्ये इन्दौ चेति चशब्द एवार्थकतया ईमित्यस्य व्याख्यानपरो वा, मर्दि[१] चक्रिमिति विशेषणयोः परस्परसमुच्चायको वा । इन्द्रेहीति । पूर्वोक्तयज्ञशालासन्निधानप्रार्थनेन सह सोमरससन्निधानप्रार्थनासमुच्चायको वेति द्रष्टव्यम् । विष्णोः सोमपानार्थं सोमे विष्णुसन्निधानप्रार्थनं किमर्थं कर्तव्यमित्यत आह स्वसन्निधानपवित्रमेवेति । देवः पिबतीति देवशब्द-प्रयोगेण 'देवस्यैष स्वभावोऽयमाप्तकामस्य का [२]स्पृहे'त्यादिप्रमाणं सूचय-तीति ज्ञेयम् ॥ ८२ ॥

**मंत्रः – ८३**

(अ.१, सू.९, मं.३)

**मत्स्वा सुशिप्र मन्दिभिः स्तोमेभिर्विश्वचर्षणे ।**
**सचैषु सवनेष्वा ॥**

**पदपाठः**

**मत्स्व । सुऽशिप्र । मन्दिऽभिः । स्तोमेभिः ।**
**विश्वऽचर्षणे । सचा । एषु । सवनेषु । आ ॥**

**भाष्यम्**

**स्वानन्दविश्वजीवेशामत्स्वास्मद्रक्षया सह ॥ ८३ ॥**

---

१. मन्दिं - क. रा. ।  २. स्पृहेति प्रमाणम् - क ।

## टीका

**हे सुशिप्र ! स्वानन्द शोभनानन्द । विश्वाश्चर्षणयः प्रजा यस्यासौ विश्वचर्षणिः । विश्वचर्षणे विश्वजीवेश एषु त्रिषु सवनेषु सचा सह अस्मद्रक्षयेति शेषः । अस्मद्रक्षां कुर्वन् । मन्दिभिर्मद-हेतुभिः स्तोमेभिरस्माभिः क्रियमाणैः स्तोमैरामत्स्व सम्यक् मदमवाप्नुहि ॥ ८३ ॥**

## टिप्पणी

ऋचि सुशिप्रेति पदं शोभनं शिप्रं सुखं[१] यस्येति बहुव्रीह्यर्थकमिति प्रदर्शनाय भाष्ये स्वानन्देत्युक्तमित्यभिप्रेत्य भाष्यपदं विवृणोति शोभना-नन्देति । सु शोभन आनन्दमयो यस्य स स्वानन्द इति बहुव्रीहिसमासे सम्बुद्ध्यैकवचने एङ्ह्रस्वादिति सम्बुद्धिलोपे स्वानन्द इति रूपसिद्धिरिति भावः । विश्वचर्षणिशब्दान्तर्गतषष्ठ्यर्थसम्बन्धश्च स्वामिभृत्यभावरूप इति प्रदर्शनाय भाष्ये विश्वजीवेश इतीशपदं प्रयुक्तमित्यभिप्रेत्य योजनामाह विश्वचर्षणे इति व्यत्ययेनैव लोडात्मनेपदमध्यमपुरुषैकवचने मत्स्वेति रूपमिति ज्ञेयम् ॥ ८३ ॥

**मंत्रः – ८४**

(अ.१, सू.९, मं.४)

**असृग्रमिन्द्र ते गिरः प्रति त्वामुदहासत ।**
**अजोषा वृषभं पतिम् ।**

---

१. सुखमिति नास्ति ख पुस्तके ।

पदपाठः

असृंग्रम् । इन्द्र । ते । गिरः । प्रति । त्वाम् ।
उत् । अहासत । अजोषाः । वृषभम् । पतिम् ॥

भाष्यम्

**त्वन्निस्सृता वेदवाचस्त्वां प्रत्येवाप्यनारतम् ।**
**उच्चैर्मुख्यतया सम्यग्विसृष्टाः स्वपतिं प्रति ।**
**अजोषाः स्तुत्यरूपेण त्वत्सेव्यास्त्वदृते क्वचित् ॥ ८४ ॥**

टीका

हे इन्द्र ! अजोषास्त्वदृतेऽन्ये न स्तुत्यरूपेण क्वचिदप्यसेव्यास्ते त्वदीयास्त्वन्निःसृता गिरो वेदवाचोऽसृग्रमनारतं वृषभं श्रेष्ठं पतिं स्वपतिं त्वां प्रत्येव उत् उच्चैः सम्यक् मुख्यतयैवेति यावत् अहासत अगमन् । ओहाङ्गतौ । विसृष्टाः । त्वामेव मुख्यया वृत्त्या प्रतिपादयितुमस्माभिरुच्चारिता इति तात्पर्यम् ॥ ८४ ॥

टिप्पणी

जुषी प्रीतिसेवनयोरित्यस्माद्धातोः कर्मणि घञन्ततया निष्पन्नस्य जोषशब्दस्य नञ्समासेऽजोष शब्देनासेव्यत्वमुच्यत इत्यभिप्रेत्य तद्घटनाय स्तुत्यरूपेणेत्यादिभाष्यं प्रवृत्तमिति भावेन योजनामाह अजोषास्त्वदृतेऽन्येनेत्यादिना ।

ननु 'स्वाध्यायोऽध्येतव्यः वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मना इत्यादिप्रमाणैर्वेदानां मध्ये त्रिभिः सेव्यत्वावगमात् कथमसेव्यत्वमित्यत आह स्तुत्यरूपेणेति ।

ननु 'वेदैश्च सर्वैरहमेव वेद्यः, वेदे रामायणे चैव, सर्वे वेदा यत्पदमामनन्ति, नामानि सर्वाणि यमाविशन्ति इत्यादिप्रमाणैः स्तुत्यरूपेण भगवतः सेव्यत्वावगमात् कथं स्तुत्यरूपेणासेव्यत्वमित्यत आह त्वद्दतेऽन्येनेति । 'तत्तु समन्वयात्, गतिसामान्यात्' इत्यादिसूत्रेषु भगवदेकपरत्वस्य निर्णीतत्वेन सर्ववेदस्तुत्यत्वं मुख्यतः भगवत एव नान्यस्येत्येवं वाक्यैकवाक्यतया[1] भाष्यपदानामन्वयो बोध्य इति भावः । भाष्ये स्तुत्यरूपेण त्वसेव्या इत्यत्र तु असेव्या ति पदविभागेन श्रुत तुशब्द अध्येतॄणामध्ययनकर्तृत्वेन सेव्यत्वेऽपि स्तुत्यरूपेणासेव्यत्वमिति विशेषसूचक इति ज्ञेयम् ।

त्वां प्रत्येवापीत्यत्र श्रुत अपिशब्दः क्वचिदित्यनेनान्वेतीत्यभिप्रेत्य योजनामाह क्वचिदपीति ।

देशे काले चेत्यर्थः । त्वन्निस्मृता इति । मुनिस्तु 'सर्वविद्यानां भगवान् पुरुषोत्तमः । विशेषतश्च वेदानाम्' इत्यादिनानेकप्रमाणोदाहरणपूर्वकं सर्ववेदानां भगवन्निसृतत्वस्य पूर्वमुपादानादिति भावः । अनारतमिति । नित्यमित्यर्थः । गम्लृगताविति धातोर्लङ्परस्मैपदप्रथमपुरुषबहुवचने लृदित्वात् गमधातोरङागमेऽगमन्निति रूपमिति ज्ञेयम् । कथमहासतेत्यस्यागमन्नित्युक्तप्राप्त्यर्थपरत्वमित्यतस्तत्प्रकृतिभूतधातुं पठति ओ हाङ्गताविति । उपदेशेऽजनुनासिक इदित्योकारलोपे हलन्त्यमिति ङकारलोपे लुङात्मनेपदप्रथमपुरुषबहुवचने च्लिप्रत्यये, तस्य सिचि, धातोरङागमे उदित्युपसर्गपूर्वकत्वे चोदहासेति रूपस्य निष्पन्नत्वेन तस्य प्राप्त्यर्थपरत्वमिति भावः ।

---

१. भगवत एव नान्यस्यैकवाक्यतया - क ।

ननु विपूर्वात् सृज विसर्ग इति धातोर्निष्पन्नस्य विसृष्टशब्दस्य विसर्गापरनामकत्यागार्थकत्वादहासतेत्यस्य विसृष्टा इति कथं भाष्ये व्याख्यानं क्रियत इत्यतस्तात्पर्यकथनपरं विसृष्टपदम्, न तु व्याख्यान-परमित्यभिप्रेत्य विसृष्टपदानुवादपूर्वकं तात्पर्यं विवृणोति विसृष्टास्त्वा-मेवेत्यादिना। भागवतप्रथमस्कन्धे पञ्चमाध्याये द्वादशस्कन्धद्वादशाध्याये च 'स वाग्विसर्गो जनताघविप्लवो यस्मिन् प्रतिश्लोकमबद्धवत्यपि। नामा-न्यनन्तस्य यशोङ्कितानि यच्छृण्वन्ति गायन्ति गृणन्ति साधवः इत्यादिना भगवदेकपरत्वेन सर्ववेदोच्चारणादीनामेव विसर्गशब्दार्थतया निर्णीतत्वात्। उक्तं च तत्र टीकायां साधवः परमभागवताः शुकादयः शृण्वन्ति, गायन्ति गृणन्तीति यत् स जनताघविप्लवः जनतायाः सज्जनसमूहस्याघं पापं विप्लावयति नाशयतीति जनताघविप्लवः। वाग्विसर्गः वाचां विसर्गः विशिष्टवचनविशेषः। तथा च जनतापापविनाशहेतुत्वात् सज्जनपरि-गृहीतत्वाच्च वासुदेवमाहात्म्यप्रतिपादकमेव शास्त्रं नान्यदिति।

तथा च प्रकृतेऽपि सर्ववेदानां परममुख्यया वृत्त्या भगवदेकपरत्वेन प्रवचनादिकं कर्तव्यमित्यर्थसूचनाय विसृष्ट इति पदं भाष्ये प्रयुक्तमिति भावः॥ ८४॥

मंत्रः – ८५

(अ.१, सू.९, मं.५)

**सं चौदय चित्रमर्वाग्राधं इन्द्र वरेण्यम्।**

**असदित्ते विभु प्रभु॥**

पदपाठः

सम् । चोदय । चित्रम् । अर्वाक् । राधः । इन्द्र ।
वरेण्यम् । असत् । इत् । ते । विऽभु । प्रऽभु ॥

भाष्यम्

**अर्वाङ् नीचान् प्रति त्वस्मान् भद्रं राधः प्रचोदय ।**
**अस्त्येव ते विशेषेण प्रकृष्टं शुभमच्युतम् ॥ ८५ ॥**

टीका

हे इन्द्र ! [1]अर्वागधस्तात्स्थितान्नीचानस्मान्प्रति चित्रं भद्रं वरेण्यं वरणीयं राध ऐश्वर्यं सञ्चोदय अस्मभ्यं देहीति यावत् । दातुं च ते तव विशिष्टं भवतीति विभु प्रकृष्टं भवतीति प्रभु विशेषेण प्रकृष्टमिति यावत् । शुभमिति शेषः । 'विप्रसम्भ्योड्वसंज्ञायाम्' । असदित् । लडर्थे पञ्चमो लकारः । अस्त्येव । प्रभु प्रभूतमक्षयमिति प्रभुशब्दस्यार्थान्तरमाह **अच्युतमिति** ॥ ८५ ॥

टिप्पणी

भाष्ये नीचानित्येतद् अर्वागित्यव्ययस्य पर्यवसितार्थकथनपरमित्यभिप्रेत्यार्वाक्शब्दार्थं तत्पदानुवादपूर्वकं दर्शयति अर्वागधस्तात् स्थितानिति । पूर्वोत्तरार्धयोरेकवाक्यताघटनायापेक्षितशेषमाह **दातुं चेति** । अस्यास्त्येवेति क्रियापदेनान्वयः । विभुप्रभुशब्दद्वयलब्धार्थं[2] दर्शयति विशेषेण प्रकृष्टमिति यावदिति । यद्यपि काशिकावृत्तौ विभुः सर्वेशः प्रभुः स्वामीति विभुशब्दवाच्यतया सर्वगतत्वस्वामित्वरूपार्थावुक्तौ तथापि भगवद्धर्माणां भगवता

१. अर्वागधस्थितान्नीचानस्मान् २. विभुप्रभुशब्दद्वयशब्दार्थं - क ।

सहैक्येन सर्वगतत्वसर्वस्वामित्वादिरूपः प्रकर्षः भगवत्सम्बन्ध्यैश्वर्यादिरूपशुभे उपपद्यत इति भावः ।

शुभमिति शेष इति । विशेषणीभूतविभुप्रभुशब्दार्थस्य विशेष्यसमर्पकतया शुभमिति शेषत्वेन भाष्ये पूरित इत्यर्थः । यद्यपि राध इत्यस्यानुवृत्त्या विशेष्यसमर्पकत्वं सम्भवति तथापि भगवत्सम्बन्ध्यैश्वर्यस्य निरवधिकत्वं सूचयितुं शेषपूरणं कृतमिति ज्ञेयम् ।

विभुप्रभुशब्दनिष्पत्तिप्रकारं दर्शयति **विप्रसम्भ्य इति** । 'विप्रसम्भ्यो ड्वसंज्ञायाम्'[1] इति सूत्रे भुवः संज्ञान्तरयोरिति पूर्वसूत्रात् भुव इति वर्तते विप्रसमित्येवंपूर्वात् भू सत्तायामिति धातोरसंज्ञायां विषये डु प्रत्ययो भवतीति वृत्त्यादावुक्तत्वेन प्रकृते वि प्र इत्युपसर्गद्वयपूर्वाद् भू धातो डु-प्रत्यये चुटू इति डकारलोपे डित्यभस्यापीति टिलोपे शुभविशेषणत्वे[2] नपुंसकतायां स्वमोर्नपुंसकादिति सुप्रत्ययस्य लुकि विभुप्रभुरितिरूपसिद्धिरिति भावः ।

ननु सदित्यस्यास्तीत्यर्थपरत्वं कथमित्यत आह **लडर्थे पञ्चमो लकार इति** । वर्तमाने लडित्युक्तत्वेन लट्प्रत्ययवाच्ये वर्तमानकालार्थे अस भुवीति धातोः पञ्चमलकारशब्दित लेट्प्रत्यय इत्यर्थः । यद्यपि लिङर्थे लेडिति सूत्रेण लिङ्प्रत्ययवाच्ये विध्याद्यर्थे लेट्प्रत्ययो विहितः, तथापि व्यत्ययो बहुलमित्युक्ते छान्दसव्यत्ययेन लडर्थे लेट्प्रत्यये तस्य तिबादेशे इतश्च लोपः परस्मैपदेषु इति तिप इकारलोपे लेटोऽडाटाविति लेडादेशातिपः अडागमेऽस्तेर्लुग्विकरणत्वेनादिप्रभृतिभ्यः शप इति शपो लुकि च सत्यसदिति रूपमिति भावः ।

---

१. पा.सू. ३-२-१८० । २. शुभविषयत्वेन - क ।

असदित् इत्यत्र इत्शब्द एवार्थक इत्यभिप्रेत्य योजनामाह अस्त्वेवेति । भाष्येऽच्युतमित्यस्य नाशरहितमित्यर्थपरस्य व्याख्यानपरत्वात् तेनैकार्थकत्वलाभाय तद्व्याख्येयपदविवरणपूर्वकं योजनामाह प्रभुप्रभूतमक्षयमिति । प्रभुशब्दस्य पूर्वोक्तप्रकर्षरूपार्थापेक्षयार्थान्तरपरत्वमच्युतपदेन विवृतमिति भावः ॥ ८५ ॥

**मंत्रः – ८६**

(अ.१, सू.९, मं.६)

**अस्मान्त्सु तत्र चोदयेन्द्र राये रभस्वतः ।**
**तुविद्युम्न यशस्वतः ॥**

**पदपाठः**

अस्मान् । सु । तत्र । चोदय । इन्द्र । राये । रभस्वतः । तुविऽद्युम्न । यशस्वतः ॥

**भाष्यम्**

**रभस्वतः शब्दवतः स्तोतॄनस्मान् यशस्वतः ।**
**तत्र त्वयि महाराये महाकीर्ते सुचोदय ॥ ८६ ॥**

**टीका**

हे तुविद्युम्न ! महाकीर्ते इन्द्र रभस्वतः शब्दवतः स्तोतॄनिति यावत् । रेभतीति तत्कर्मसु पाठात् । यशस्वतो यशस्विनोऽस्मान् राये सप्तम्येषा । महाराये महैश्वर्यरूपे तत्र त्वयि सुचोदय । त्वद्विषयबुद्ध्यादियुक्तान् कुरु ॥ ८६ ॥

**टिप्पणी**

वेदनिघण्टौ उरु तुविपुरु भूरीत्यादिना तुविशब्दस्य बहुनामसु पठितत्वेन बहुशब्दपर्यायत्वात् बहुषु बहुवचनमित्यादौ बहुशब्दस्य बहुत्वसङ्ख्यावाचित्वेऽपि बह्वन्नमित्यादौ वैपुल्येऽपि प्रयोगदर्शनेन प्रकृते वैपुल्यरूपबहुत्वस्य विवक्षितत्वेन वैपुल्यापरनामकमहत्वार्थकत्वम् । तुविशब्दस्य दिवि मीयते प्रमीयत इति व्युत्पत्त्या दिवशब्दोपपदात् माङ् मान इति धातोरौणादिक नक्प्रत्यये हलन्त्यमिति प्रत्ययककारलोपे धातोर्ङकारलोपे आतो लोप इति चेत्यकारलोपे दिवशब्दवकारस्य उत्वे इकारस्य यणादेशे द्युम्नशब्दनिष्पत्तौ तस्य कीर्तिवाचित्वम् । तथा च तुविः महती द्युम्ना कीर्तिर्यस्येति बहुव्रीह्याश्रयणेन तुविद्युम्नपदस्य महाकीर्ते इति भाष्योक्तव्याख्यानमुपपन्नमित्यभिप्रेत्य योजनामाह **हे तुविद्युम्न महाकीर्त इति** । सम्बुद्धिद्योतनाय हेशब्दप्रयुक्त इति ज्ञेयम् । पूर्वत्र कवानो मित्रावरुणावित्यस्यामृचि, तथा द्वितीयाध्याये अनुप्रत्नस्यैक स इत्यस्यामृचि टीकायां बहुशब्दस्य वैपुल्यार्थकत्वमादायैव तुवीति बहुनामेत्युक्तमिति ज्ञेयम् । उक्तं च बहुशब्दस्य वैपुल्यार्थकत्वं चन्द्रिकायाम् 'भूमा सम्प्रसादादध्युपदेशात्' इत्यधिकरणे बहुशब्दस्य बहुषु बहुवचनमित्यादौ सङ्ख्यायामिव बह्वन्नमित्यादौ वैपुल्येऽपि प्रयोगात् गुणादिना च वैपुल्यस्य ब्रह्मण्यपि सम्भवादिति ।

रभस्वत इत्यस्य शब्दवदित्यर्थपरत्वं कथमित्यत आह **रेभतीति तत्कर्मस्विति** । अर्चति गायति रेभति स्तोभतीत्यादिना स्तुतिरूपशब्दक्रियार्थकेषु धातुषु रभधातोः वेदनिघण्टौ पाठादित्यर्थः । यद्यपि निघण्टौ रेभतीति पाठस्तथापि ऋचि रभस्वत इत्यकारस्योपधात्वेन निर्देशात् टीकायामपि रभतीति निर्देशः कृत इति ज्ञेयम् । तथा च रेभ स्तुताविति

धातोरौणादिकेऽसुप्रत्यये एकारस्य छान्दस अकारे रभशब्दनिष्पत्तौ 'अस्मायमेधास्रजो रिनिः'[1] इति सूत्रे मतुप् च समुच्चीयत इति वृत्त्यादावुक्तत्वेन रभस्‌शब्दात् मतुप्प्रत्यये मस्य वत्वे द्वितीयाबहुवचने च रभस्वत इति रूपसिद्धेस्तस्य शब्दवत इत्यर्थपरत्वमिति भावः ।

**यशस्वत इति** । यशस्‌शब्दात् पूर्वोक्तरीत्या मतुबित्युपेत्य योजनामाह **यशस्विन इति** । ननु रैशब्दस्यैकारान्तत्वेन चतुर्थ्येकवचने राय इति रूपस्य निष्पन्नत्वेन चतुर्थ्यन्तत्वात् चतुर्थ्यन्तस्य सप्तम्यास्त्रलिति विहित-त्रल्प्रत्ययान्तेन तत्रेति सप्तम्यन्तेन तत्र त्वयि महाराय इति सामानाधिकरण्येन भाष्ये कथं योजना क्रियत इत्यत आह **सप्तम्येवेति** । रैशब्दात्परस्य सप्तम्येकवचनस्य सुपां सुलुगित्यादिना श इत्यादेशे लशक्वतद्धित इति शकारलोपे ऐकारस्यायादेशे राय इति रूपस्य निष्पन्नत्वेन तत्रेत्यनेन सामानाधिकरण्योपपत्तेरिति भावः ।

ननु राये वित्ताद्यैश्वर्यार्थमिति तादर्थ्यचतुर्थ्याश्रयणेन चोदयेत्यनेनान्वयसम्भवे किमर्थं सप्तम्यन्तताश्रयणेन योजना क्रियत इति चेन्न, 'सम्पत्तेरिति जैमिनिस्तथा हि दर्शयति' इति सूत्रोक्तप्रकारेण तं यथा यथोपासते तथैव भवतीति तद्गतैश्वर्यप्राप्तेरपि भगवद्गतधर्मोपासनानुसारित्वावगमेन भगवति निरवधिकमहैश्वर्योपेतत्वप्रदर्शनाय सप्तम्यन्तताश्रयणेन व्याख्यानं कृतमिति ज्ञेयम् । अत एव ऋचि रायीति सप्तम्यन्तपदे निर्देष्टव्येऽप्येकमात्रायुक्तत्वेन ह्रस्वस्य ङिति सप्तम्यैकवचनस्य एच् ह्रस्वो नास्तीति शब्दिकैरुक्तत्वेन द्विमात्रायुक्ततया दीर्घभूतेनाधिकाक्षरेणादेशरूपेण राय इति निर्देशेनाधिक्येऽधिकमित्यधिकार्थलाभात् । तद्विवरणाय भाष्ये

---

१. पा.सू. ५-२-१२१ ।

महाराय इति महच्छब्दप्रयोगः कृत इति ज्ञेयम् । चोदयेति मध्यमपुरुष-प्रयोगेण त्वमिति प्राप्तस्य युष्मच्छब्दस्यैव त्वयीति विशेष्यसमर्पकतया तत्रेत्यनेनान्वय इति प्रदर्शनाय भाष्ये तत्र त्वयीत्युक्तमित्यभिप्रेत्य योजनामाह तत्र त्वयीति । 'आधारोऽधिकरणम्' इति सूत्रे औपश्लेषिकः सामीपको विषयो व्याप्तिश्चेत्याधारश्चतुर्धेति वृत्त्यादावुक्तत्वेन प्रकृते विषय-सप्तमीति ज्ञेयम् । अत एव वक्ष्यति त्वद्विषयबुद्ध्यादीति । सु इत्यस्य क्रियापदेनान्वय इत्युपेत्य योजनामाह सु चोदयेति । चुद प्रेरण इति धातोश्चुरादित्वेन स्वार्थिकणिचि लोण्मध्यमपुरुषैकवचने चोदयेति रूपमि-त्यभिप्रेत्य तस्य पर्यवसितार्थं दर्शयति त्वद्विषयेति । बुद्ध्यादीत्यादिपदेन इच्छाप्रयत्नभक्त्यादेर्ग्रहः ॥ ८६ ॥

**मंत्रः – ८७**

(अ.१, सू.९, मं.७)

**सं गोम॑दिन्द्र॒ वाज॑वद॒स्मे पृ॒थु श्रवो॑ बृ॒हत् ।**
**वि॒श्वायु॑र्धे॒ह्यक्षि॑तम् ॥**

**पदपाठः**

**सम् । गोऽमं॑त् । इ॒न्द्र॒ । वाज॑ऽवत् । अ॒स्मे इति॑ ।**
**पृ॒थु । श्रवः॑ । बृ॒हत् । वि॒श्वऽआ॑युः । धे॒हि॒ ।**
**अक्षि॑तम् ॥**

**भाष्यम्**

**अस्मास्वतिबृहज्ज्ञानं नित्यं सन्धेहि चाक्षयम् ॥ ८७ ॥**

## टीका

**हे इन्द्र ! विश्वं सम्पूर्णमायुर्यस्यासौ विश्वायुः नित्य(:) त्वमस्मे अस्मासु गोमत् गोयुक्तं वाजवदन्नेनापि सहितं अक्षितमक्षयं पृथु बृहत् अतिबृहत् । श्रवसा श्रवणेन जायत इति श्रवो ज्ञानं सन्धेहि सम्यक् देहि ॥ ८७ ॥**

## टिप्पणी

भाष्ये नित्येतिपदं विश्वायुरित्यस्य पर्यवसितार्थकथनपरमित्यभिप्रेत्य योजनामाह **विश्वमिति** ।

अस्मच्छब्दात्परस्य सप्तमीबहुवचनस्य सुपां सुलुगित्यादिना श इत्यादेशे शकारलोपे योचीति यत्वस्यानादेशेऽजादिविभक्तौ परतो विधानेन प्रकृते आदेशाजादित्वेन यत्वस्याप्राप्तेः शेषे लोप इति सूत्रे टिलोपस्याप्याश्रयणेनास्मदष्टिलोपे अस्मे इति रूपसिद्धिरित्यभिप्रेत्य योजनामाह **अस्म अस्मास्विति** ।

ऋचि पृथु बृहच्छब्दयोरेकार्थत्वेन पुनरुक्तिरित्याशङ्क्य तत्परिहाराय भाष्येऽतिबृहदित्युक्तमित्यभिप्रेत्य योजनामाह **पृथ्विति** । पूर्वत्र मित्रं हुवे पूतदक्षमित्यस्यामृचि अनूनसुखभोक्तृत्वाद् रिशादा इति कीर्तितः इति भाष्यव्याख्यावसरे टीकायाम् ननु रमणमपि सुखम्, अतः पुनरुक्तिरित्यतोऽभिप्रायमाह अनूनेति । रमेर्भवि डिः रिशमनूनसुखमत्ति अनुभवतीति रिशादश इत्यर्थः इत्युक्तम्, तथा द्वितीयाध्याये यश्चिद्धित इत्थाभग शशमान इत्यस्यामृचि शशमानः सुखाधिक इति भाष्यव्याख्यावसरे टीकायां शशब्दः सुखवाची द्विर्वचनमतिशयार्थेऽधिकं सुखं तन्मन्यतेऽनुभवतीति शशमान इत्युक्तम् । तत्र शब्दतोऽर्थतश्च द्विरुक्तिः । अत्र

शब्दभेद इत्यर्थतः द्विरुक्तिरिति । तथा चैकार्थयोस्समावेशोऽतिशयार्थलाभ इति भावः ।

ननु श्रु श्रवण इति धातोः श्रूयतेऽनेनेति करणार्थेऽसुन्प्रत्ययान्ततया निष्पन्नस्य श्रवःशब्दस्य श्रवणेन्द्रियपरत्वाद्भाष्ये ज्ञानमिति ज्ञानार्थकतया कथं व्याख्यानं क्रियत इत्यत आह **श्रवसेति**। गोभिः श्रीणीत मत्सरमित्यादौ गोजन्यपयसि गोशब्दप्रयोगेन कार्यकारणशब्दानां साङ्कर्यव्यवहारवत् प्रकृतेऽपि श्रवणेन्द्रियजन्यज्ञाने श्रवःशब्दप्रयोग उपपद्यत इति भावः ॥ ८७ ॥

**मंत्रः – ८८**

(अ.१, सू.९, मं.८)

**अ॒स्मे धे॑हि॒ श्रवो॑ बृ॒हद्द्यु॒म्नं स॑हस्र॒सात॑मम् ।**
**इन्द्र॒ ता र॒थिनी॒रिषः॑ ॥**

**पदपाठः**

अ॒स्मे इति॑ । धे॒हि॒ । श्रवः॑ । बृ॒हत् । द्यु॒म्नम् ।
स॒ह॒स्र॒ऽसात॑मम् ॥ इन्द्र॑ । ताः । र॒थिनीः॑ । इषः॑ ॥

**भाष्यम्**

**विद्यां कीर्तिं सदेहान्नं बहुलाभयुतं बृहत् ।**
**प्रार्थने पौनरुक्त्यं न चोदयेति ततः पुनः ॥ ८८ ॥**

**टीका**

**हे इन्द्र ! अस्मे अस्मासु बृहच्छ्रवो महतीं विद्यां सहस्रसातममतिशयेन सहस्रलाभसहितं बहुलाभयुतं द्युम्नं कीर्तिं च ताः प्रसिद्धाः**

**रथिनीरिषः रथो देहस्तद्वतीः । सदेहान्नमिति यावत् । अविकलेन देहेन युक्तमन्नं च धेहि । ननु सश्चोदय चित्रमित्यादिनोक्तमेवोच्यत इत्यतः पुनरुक्तिदोषस्तत्राह प्रार्थन इति । पौनरुक्त्यं न दोषो यत इति शेषः । ततश्चोदयेत्युक्त्वा पुनः सन्धेहीत्यादिवचनं युज्यत इति योज्यम् ॥ ८८ ॥**

## टिप्पणी

**रथो देह इति** । अत देवरथः, आ तेन यात निमिषज्जवीयसेत्यादि-प्रमाणेषु रथशब्दस्य देहवाचकतया प्रसिद्धत्वादिति भावः । **तद्वतीरिति** । रथशब्दितदेहवतीरित्यर्थः । तथा च रथः आसामिषामिहशब्दितान्नाना-मस्तीति मत्वर्थे अत इनि ठनाविति इन्प्रत्यये स्त्रियां ऋन्नेभ्यो ङीबिति ङीपि द्वितीयाबहुवचने रथिनीरिति रूपसिद्धिरिति भावः । तस्य पर्यवसितार्थ-कथनपरं भाष्यपदमित्यभिप्रेत्य योजनामाह **सदेहान्नमिति** ।

**यावदिति** । नन्वन्नप्रार्थनेनैव देहप्राप्तेः सिद्धत्वात् पुनर्देहयुक्तत्वप्रार्थनं किमर्थं क्रियत इत्यतस्तस्य तात्पर्यमाह **अविकलेनेति** । व्याध्याद्युपद्रव-रहितेनेत्यर्थः । भोजनाद्यर्थानुकूलतया शरीरदार्ढ्यस्यावश्यकत्वात् तत्प्रार्थन-मुपपन्नमिति भावः । **उक्तमेवोच्यत इति** । राधसं चोदयेति राधःशब्दितै-श्वर्यप्रार्थनमेव ।

अस्मान् सु तत्र चोदयेति, सङ्गोमदिति अस्मे धेहीति ऋक्त्रये उच्यत इत्यन्वयः । ननु पौनरुक्तेर्विद्यमानत्वात् पौनरुक्त्यं तेनैवेति स्वरूपेण[1] निषेधः क्रियत इत्यतः तत्रापेक्षितशेषपदं शेषत्वेन पूरयन् भाष्ये तत इति प्रयोगात् यत इति लभ्यत इत्यभिप्रेत्य योजनामाह **शेषो यत इति** । यत् प्रार्थने

१. कथं पुनरुक्तिर्नास्तीति स्वरूपतो - क ।

पौनरुक्त्यं शेषो न ततश्चोदयेति पुनः इति । तत इत्यस्य भिन्नक्रमतया अन्वयं दर्शयन् चोदयतीत्यस्यानन्तरमपेक्षितशेषं पुनरित्यस्यानन्तरमपेक्षितशेषं च पूरयन् योजनामाह[१] ततश्चोदयेत्युक्त्येत्यादिना ॥ ८८ ॥

**मंत्रः – ८९**

(अ.१, सू.९, मं.९)

**वसोरिन्द्रं वसुपतिं गीर्भिर्गृणन्त ऋग्मियम् ।**
**होम गन्तारमूतये ॥**

**पदपाठः**

वसोः । इन्द्रम् । वसुऽपतिम् । गीःऽभिः ।
गृणन्तः । ऋग्मियम् । होम । गन्तारम् । ऊतये ॥

**भाष्यम्**

**वसोर्वसूनां च पतिं देवदेवेश्वरं प्रभुम् ।**
**ऋङ्ज्ञेयमाह्वयामोऽत्र गृणन्तोऽभीष्टसिद्धये ॥ ८९ ॥**

**टीका**

वसुशब्दो देवपर्यायः जातावेकवचनं वसूनां ये वसवस्तेषां पतिं देवदेवेश्वरम् ऋग्मियं ऋङ्ज्ञेयं ऋग्भिर्ज्ञेयं इन्द्रं प्रभुं भक्तान्प्रति गन्तारं गीर्भिर्गृणन्तः स्तुवन्तो वयमूतयेऽभीष्टसिद्धयेऽत्र होम आह्वयामः ॥ ८९ ॥

१. अन्वयमाह - क ।

## टिप्पणी

वसो इत्याद्यम् ऋक्प्रतीकं द्वितीयं भाष्यप्रतीकमतो द्विर्वचनमुपपन्नमिति ज्ञेयम् । **वसुशब्दो देवपर्याय इति** । वसोरिन्द्रं वसुपतिमित्युभयत्र[१] श्रुतवसुशब्द इत्यर्थः ।

यद्यप्यष्टौ वसव एकादश रुद्रा द्वादशादित्या इत्यादिप्रमाणेष्वष्टसङ्ख्यायुक्तदेववाचकतया वसुशब्दः प्रसिद्धः, तथापि छन्दोगोपनिषदि तृतीयाध्याये षोडशखण्डे गायत्रं प्रातस्सवनं तदस्य वसवोऽन्वायत्ताः प्राणा वाव वसवः, एते हीदं सर्वं वासयन्तीति योगविभक्तेरुक्तत्वेन प्रकृतेऽपि वासयन्ति सर्वं जगदिति योगव्युत्पत्त्याश्रयणेन वस निवास इति धातोरन्तर्भावितण्यर्थात् उन्प्रत्यये नकारलोपे वसुशब्दनिष्पत्तौ तस्य सर्वदेवपरत्वेन देवपदपर्यायित्वमिति भावः ।

**जातावेकवचनमिति** । वसोरिति षष्ठ्येकवचनं वसुत्वरूपधर्मैकत्वपरमित्यर्थः । तथा च वसुत्वधर्माक्रान्तसर्वदेवपरतया बहुत्वार्थकत्वेन वसूनामिति षष्ठीबहुवचनार्थत्वं ग्राह्यमिति भावः । वसुपतिमित्यत्र वसूनां पतिं वसुपतिमिति षष्ठीसमासाश्रयणेन पतिशब्दान्वितस्यापि वसुशब्दस्य [२]समासान्तर्गतस्याप्यजग्रहणस्य बुद्ध्या पृथक्कृत्याङ्गस्येनुवर्तमानाङ्ग-पदेन अजन्तस्याङ्गस्येत्यन्वयवत् वसोरिति पूर्वत्रश्रुतषष्ठ्यन्तपदेनान्वय इत्यभिप्रेत्य योजनामाह **वसूनां ये वसवः तेषां पतिमिति** । भाष्ये वसूनां चेति चशब्द अप्यर्थकतया न केवलं देवानां पतिः किन्तु देवदेवानामपीत्यर्थविशेषसूचक इति ज्ञेयम् । माङ् मान इति धातोर्निष्पन्नस्य मेयशब्दस्य

१. वसुपतिमित्युभयत्रापि - क । २. अत्र 'क्रतगमां सनीत्यादौ' इत्यधिकपाठः क्वचिद्दृश्यते । सम्बन्धस्तु चिन्तनीयः ।)

ऋग्भिर्मेयमिति सामास एकारस्य छान्दस इकारे यरोऽनुनासिकेऽनुनासिको वेत्यनुनासिकस्य विकल्पितत्वेन गकारस्यानुनासिकाभावपक्षे ऋङ्मियमिति रूपमित्यभिप्रेत्य तदनूद्य भाष्यपदेन योजनामाह **ऋङ्मियं ऋङ्मेयमिति** । तस्य पर्यवसितार्थकथनम् **ऋग्भिर्गेयमिति** ।

**अत्रेति** । यज्ञशालायामित्यर्थः । ह्वेञ शब्द इति धातोः लडुत्तमपुरुषबहुवचने वकारस्य सम्प्रसारणे शब्विकरणस्य प्रत्ययसकारस्य लोपे च होमेति ऋचि रूपमित्यभिप्रेत्य योजनामाह **होम आह्वयाम इति** ॥ ८९ ॥

**मंत्रः – ९०**

(अ.१, सू.९, मं.१०)

**सुतेसुते न्योकसे बृहद्बृहत एदरिः ।**
**इन्द्राय शूषमर्चति ॥**

**पदपाठः**

सुतेऽसुते । निऽओकसे । बृहत् । बृहते ।
आ । इत् । अरिः । इन्द्राय । शूषम् । अर्चति ॥

**भाष्यम्**

**अविनाश्यरिरुद्दिष्टो बृहच्छूषं सुखं प्रति ।**
**सुते सुते सद्गृहाय देवाय बृहतेऽर्चति ॥ ९० ॥**

**टीका**

**अरिशब्दं व्याख्याति अविनाशीति** । यद्यप्यरिशब्द ईश्वरनामसु पठितस्तथाप्यत्रानन्वयादन्यथा व्याख्यातः । न रिष्यति न रीयते

**वेत्यरिः । योऽरिरविनाशी आत्मनोऽविनाशेच्छुरदुष्टो वा पुरुषः स बृहच्छूषं महासुखं प्रति तच्चोद्दिश्य सुते सुते प्रतिसोमसवनं ओकसे गृहाय सदिति योग्यतया सम्बन्धः । सतामाश्रयाय बृहते पूर्णायेन्द्राय देवाय न्यर्चति । द्वितीयार्थे चतुर्थी । इष्टानिष्टप्राप्तिपरिहारकामः परमेश्वरमेवार्चेदिति ॥ ९० ॥**

## टिप्पणी

**अनन्वयादिति** । ईश्वरत्वेन स्वस्यैव पूज्यत्वेनार्चतीत्युक्तपूजनकर्तृत्वायोगादित्यर्थः । **अन्यथेति** । नाशराहित्यदोषराहित्यरूपार्थद्वयपरतया व्याख्यान इत्यर्थः । अरिशब्दस्याविनाशित्वार्थकत्वं कथमित्यतः तत्र व्युत्पत्तिं दर्शयति **न रिष्यते न रीयत वेति** । रुष हिंसायामिति भुवादिषु शब्विकरणतया पठिताद्धातोः कर्मणि लट्प्रत्यये भावकर्मणोरित्यात्मनेपदे तस्मिन् परतः सार्वधातुके यगिति यक्प्रत्यये ककारलोपे रिष्यत इति रूपसिद्धेस्तस्य नञ्सम्बन्धे न रिष्यत इत्यस्य न हिंस्यते संसारबन्धनिमित्तक्लेशैः न पीड्यते इत्यर्थपरत्वमिति भावः । न रिष्यतीति क्वचित्पाठः । तस्मिन्पाठे सखा वीरो न रिष्यतीत्यादौ व्यत्ययेन परस्मैपदप्रयोगात् तदनुवादरूपत्वेन प्रकृतेऽपि परस्मैपदनिर्देश इति ज्ञेयम् । वक्ष्यति च टीकायां सखा वीर इत्यस्यामृचि न रिष्यति न हिंस्यत इति ।

**न रीयते वेति** । दिवादिषु रीङ् प्रकरण इति श्यन्विकरणतया पठिताद्धातोः कर्मणि पूर्वोक्तरीत्या आत्मनेपदादौ सति रीयत इति रूपस्य निष्पन्नत्वेन तस्य नञा सम्बन्धे न रीयते न हिंस्यत इत्यर्थपरत्वमिति भावः । तथा च पूर्वोक्तात् रुषधातोर्वा रीङ्धातोर्वा औणादिकडिप्रत्यये चुटू इति उकारलोपे डित्यभस्यापीति टिलोपे शब्दनिष्पत्तौ तस्य नञा समासे

अरिरिति रूपसिद्धेस्तस्याविनाशित्वार्थकत्वमिति भावः । अरिशब्दस्य धातुद्वयजत्वोक्तिस्तु वैदिकपदेषु वैचित्र्यसूचनायेति ज्ञेयम् ।

नन्वरिशब्दस्याविनाशित्वार्थकत्वेऽविनाशिनो भावपदार्थस्यानादित्वनियमादनादिनित्यचेतनस्य स्वातन्त्र्यापत्त्या पूजकत्वानुपपत्तिरूपान्वयानुपपत्तिस्तदवस्थैवेत्यतः प्रकृते विवक्षितमर्थं दर्शयति **अविनाशेच्छुरिति** । यद्वा भाष्ये बृहच्छूषं सुखं प्रतीति श्रूषशब्दार्थसुखस्य पूजाफलत्वेनोक्तत्वात् अरिशब्दार्थस्याप्यनाशित्वस्यार्चतीत्युक्तपूजासाध्यफलत्वं विवक्षितमित्यभिप्रेत्य तदुपपादनाय विवक्षितमर्थं दर्शयति **आत्मनोऽविनाशेच्छुरिति** ।

नन्वेवमरिशब्दस्येश्वरनामत्वेऽपि अरि ऐश्वर्येच्छुरर्चतीत्यन्वयसम्भवेन अन्वयादित्युक्तदोषो नास्तीति चेन्न, ऐश्वर्यस्य सुखादिप्राप्तिरूपत्वेन शूषं सुखमुद्दिश्येत्यनेन पुनरुक्तिदोषापत्तेरन्वयानुपपत्तिस्तदवस्थैवेति । 'यस्य प्रसादात्परमार्तिरूपादस्माद् संसारात् मुच्यते नापरेण । बन्धको भवपाशेन भवपाशाच्च मोचकः । यथा दृष्ट्या प्रसन्नः सन् राजा बन्धापनोदकृत्' इत्यादिप्रमाणैरविनाशित्वस्य भगवदधीनतावगमेन तत्प्रसादसाध्यत्वात् तत्प्रसादसम्पादनाय उपासकस्य प्राकृतभौतिकशरीरवत बन्धरूपनाशशब्दितक्लेशपरिहारार्थं पूजकत्वमुपपद्यत इति भावः ।

**अदुष्टो वेति** । 'नष्टात्मानोऽल्पबुद्धय इत्यादौ दुष्टेषु नष्टशब्दप्रयोगदर्शिनाविनाशीत्यस्यादुष्ट इत्यर्थपरत्वे सम्भवेन तद्व्याख्येयारिशब्दस्याप्यदुष्ट इत्यर्थपरत्वमिति भावः । अत्र पक्षे दुष्टेषु हिंस्यत्वस्यापि सम्भवेन पूर्वोक्तधातुद्वयार्थानुगमश्चारिशब्दस्यास्तीति ज्ञेयम् । अस्मिन्पक्षेऽप्यरिशब्दस्य दोषराहित्येच्छुरित्यर्थो ज्ञेयः । **तच्चोद्दिश्येति** । महासुखमुद्दिश्येत्यर्थः ।

चशब्द अरिशब्दितनाशराहित्यदोषराहित्ययोः समुच्चायक इति ज्ञेयम् । न केवलं नाशराहित्यं दोषराहित्यमुद्दिश्य किं तु महासुखमुद्दिश्येति । नीत्युपसर्गस्य क्रियापदेनान्वय इत्युपेत्य योजनामाह **न्यर्चतीति** । एदरि-रित्यत्र आ इत अरिः इति पदविभागेन इदित्यस्य एवार्थकतया इन्द्राये-त्यनेनान्वयस्य इन्द्रमेवार्चेदित्युक्त्या स्पष्टमनवगमात्[1] । आ इत्यस्य नि आ अर्चति न्यार्चतीति क्रियापदेन वा आ बृहते निरवधिकपुण्यायेत्यर्थपरतया बृहत इत्यनेन वा अन्वयो बोध्यः । नन्वर्चतीत्यस्य सकर्मकत्वेन कर्म-सापेक्षत्वादिन्द्रस्य कर्मकारकत्वेनान्वये इन्द्रमिति निर्देशः स्यात् कथ-मिन्द्रायेति चतुर्थीनिर्देश इत्यत आह **द्वितीयार्थे चतुर्थीति** । व्यत्ययो बहुलमिति सुप्तिङादीनां व्यत्ययकथनादिति भावः ।

पूर्वोक्तरीत्याविनाशित्वादेरुद्देश्यत्वे उद्देश्यस्य विधेयसापेक्षत्वात् विधेयस्य ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यादौ यागादेरिव विध्यर्थकलिङा-द्यन्तपदवाच्यत्वस्यावश्यकत्वात्प्रकृते अर्चतीत्यस्य व्यत्ययेन लिङर्थ-कत्वमित्यभिप्रेत्य एवार्थकस्येदिति पदस्य कर्मकारकवाचीन्द्रपदेनान्वयं दर्शयन् उद्देश्यविधेयभावापत्तिलब्धपर्यवसितार्थं दर्शयति **इष्टेति** । इष्ट-प्राप्तिकामः, अरिष्टपरिहारकाम इत्यन्वयो बोध्यः । इन्द्रमेवार्चेदित्यत्र इन्द्रमेव आ अर्चेदिति पदविभागेन आ सम्यगित्यर्थपरतया आ इत्य-स्यार्चतीत्यनेनान्वयो दर्शित इति ज्ञेयम् ॥ ९० ॥

* * *

---

१. स्फुटमनवगमात् - क ।

# सूक्तम् – १०

द्वादशार्चम् । मधुच्छन्दाः । इन्द्रः । अनुष्टुप् ।

मंत्रः – ९१

(अ.१, सू.१०, मं.१)

**गायन्ति त्वा गायत्रिणोऽर्चन्त्यर्कमर्किणः ।**
**ब्रह्माणस्त्वा शतक्रत उद्वंशमिव येमिरे ॥**

**पदपाठः**

गायन्ति । त्वा । गायत्रिणः । अर्चन्ति । अर्कम् ।
अर्किणः । ब्रह्माणः । त्वा । शतक्रतो इति
शतऽक्रतो । उत् । वंशम्ऽइव । येमिरे ॥

**भाष्यम्**

**गायन्ति सामगास्त्वृग्भिः शंसंत्यृग्वेदिनोऽन्तिकम् ।**
**विरिञ्चास्त्वां वहुज्ञान शक्रकेतुमिवोच्छ्रितम् ।**
**व्यजानन् ॥ ९१ ॥**

**टीका**

द्वादशार्चमेतदैन्द्रं सूक्तम् ।

हे शतक्रतो ! वहुज्ञान ! अर्कं अरं कं अतिकं अतिशयेन सुखरूपं त्वां गायत्रिणः गायत्रं सामविशेषः । तद्वन्तः सामगाः गायन्ति । अर्किणः अर्का ऋचस्तद्वन्तः ऋग्वेदिनस्त्वामर्चन्ति । ऋचस्तुतौ । ऋग्भिः शंसन्ति । किञ्च । ब्रह्माणो विरिञ्चा उद्वंशमिव उच्चं वंशमिव

**शक्रकेतुमिवोच्छ्रितमिति यावत् । त्वां येमिरे व्यजानन् । यद्यपि यमिर्न ज्ञाने पठ्यते तथाप्युद्येमिरे उदयच्छन् उच्छ्रयन्तीति व्याख्यानस्य पूर्वोक्तन्यायेन दुष्टत्वाज्ज्ञानार्थो व्याख्यातः । यद्वा उद्येमिरे उच्छ्रितमकुर्वन् करणं तु न सम्भवतीत्युच्छ्रितं व्यजानन्निति ॥ ९१ ॥**

## टिप्पणी

ऋचि त्वा इत्येतत् त्वामिति द्वितीयैकवचनस्य त्वामौ द्वितीयाया इत्यादेशरूपमित्यभिप्रेत्य योजनामाह **त्वामिति** । भाष्ये शंसु स्तुताविति धातोर्निष्पन्नत्वेन शंसतीति पदेन व्याख्यानात् तद्व्याख्येयपदस्यार्चन्तीत्यस्य तदेकार्थकत्वप्रदर्शनाय तत्र प्रकृतिभूतधातुं पठति **ऋच स्तुताविति** । यद्यप्यस्य धातोः शविकरणे पठितत्वेन गुणस्याप्राप्तिः तथापि व्यत्ययेन शब्विकरणता वा, शविकरणत्वेऽपि क्ङिति चेति निषेधस्य नञा निर्दिष्टत्वेन नञा निर्दिष्टमनित्यमित्यनित्यत्वाद्वा छान्दसत्वाद्वा गुणो ज्ञेयः । भाष्ये शक्रकेतुमिवेति शिष्येन्द्रकेतोरुक्त्या तस्येतरकेत्वपेक्षया उच्चत्वसूचनेनोदित्यस्य वंशपदेनान्वयो दर्शित इत्यभिप्रेत्य योजनामाह **उच्चं वंशमिवेति** । उपमालब्धपर्यवसितार्थप्रदर्शनाय भाष्ये उच्छ्रितमित्युक्तमित्यभिप्रेत्य योजनामाह **उच्छ्रितमिति यावदिति** ।

ननु धातुगणे यम उपरम इत्युपरमार्थतया पठितस्य यमिधातोर्ज्ञानार्थकतया व्याख्याने किं बीजमित्यत अन्यथानुपपत्तिरेव बीजमिति वक्तुं शङ्कामुत्थाप्यान्यथानुपपत्तिं दर्शयति **यद्यपीत्यादिना** । यमिः इक्श्तिपौ धातुनिर्देशे वक्तव्यावित्युक्तेः पूर्वोक्तयमिधातुः ज्ञाने विषयसप्तमी ज्ञानार्थकतया न पठ्यत इत्यर्थः । ते प्राग्धातोरित्युक्तेरुदित्युपसर्गान्वितितयानूदितस्य उद्येमिर इत्यस्य प्रतिपदम् उदयच्छन्निति ।

## सूक्तम् – १०

द्वादशार्चम् । मधुच्छन्दाः । इन्द्रः । अनुष्टुप् ।

मंत्रः – ९१

(अ.१, सू.१०, मं.१)

**गायंन्ति त्वा गायत्रिणोऽर्चंन्त्यर्कमर्किणंः ।**
**ब्रह्माणंस्त्वा शतक्रत उद्वंशमिंव येमिरे ॥**

**पदपाठः**

गायंन्ति । त्वा । गायत्रिणंः । अर्चंन्ति । अर्कम् ।
अर्किणंः । ब्रह्माणंः । त्वा । शतक्रतो इतिं
शतऽक्रतो । उत् । वंशम्ऽइंव । येमिरे ॥

**भाष्यम्**

**गायन्ति सामगास्त्वृग्भिः शंसंत्यृग्वेदिनोऽन्तिकम् ।**
**विरिञ्चास्त्वां बहुज्ञान शक्रकेतुमिवोच्छ्रितम् ।**
**व्यजानन् ॥ ९१ ॥**

**टीका**

द्वादशार्चमेतदैन्द्रं सूक्तम् ।

हे शतक्रतो ! बहुज्ञान ! अर्कं अरं कं अतिकं अतिशयेन सुखरूपं त्वां गायत्रिणः गायत्रं सामविशेषः । तद्वन्तः सामगाः गायन्ति । अर्किणः अर्का ऋचस्तद्वन्तः ऋग्वेदिनस्त्वामर्चन्ति । ऋचस्तुतौ । ऋग्भिः शंसन्ति । किञ्च । ब्रह्माणो विरिञ्चा उद्वंशमिव उच्चं वंशमिव

**शक्रकेतुमिवोच्छ्रितमिति यावत् । त्वां येमिरे व्यजानन् । यद्यपि यमिर्न ज्ञाने पठ्यते तथाप्युद्येमिरे उदयच्छन् उच्छ्रयन्तीति व्याख्यानस्य पूर्वोक्तन्यायेन दुष्टत्वाज्ज्ञानार्थो व्याख्यातः । यद्वा उद्येमिरे उच्छ्रितमकुर्वन् करणं तु न सम्भवतीत्युच्छ्रितं व्यजानन्निति ॥ ९१ ॥**

## टिप्पणी

ऋचि त्वा इत्येतत् त्वामिति द्वितीयैकवचनस्य त्वामौ द्वितीयाया इत्यादेशरूपमित्यभिप्रेत्य योजनामाह **त्वामिति** । भाष्ये शंसु स्तुताविति धातोर्निष्पन्नत्वेन शंसतीति पदेन व्याख्यानात् तद्व्याख्येयपदस्यार्चन्तीत्यस्य तदेकार्थकत्वप्रदर्शनाय तत्र प्रकृतिभूतधातुं पठति **ऋच स्तुताविति** । यद्यप्यस्य धातोः शविकरणे पठितत्वेन गुणस्याप्राप्तिः तथापि व्यत्ययेन शब्विकरणता वा, शविकरणत्वेऽपि क्ङिति चेति निषेधस्य नञा निर्दिष्टत्वेन नञा निर्दिष्टमनित्यमित्यनित्यत्वाद्वा छान्दसत्वाद्वा गुणो ज्ञेयः । भाष्ये शक्रकेतुमिवेति शिष्येन्द्रकेतोरुक्त्या तस्येतरकेत्वपेक्षया उच्चत्वसूचनेनोदित्यस्य वंशपदेनान्वयो दर्शित इत्यभिप्रेत्य योजनामाह **उच्चं वंशमिवेति** । उपमालब्धपर्यवसितार्थप्रदर्शनाय भाष्ये उच्छ्रितमित्युक्तमित्यभिप्रेत्य योजनामाह **उच्छ्रितमिति यावदिति** ।

ननु धातुगणे यम उपरम इत्युपरमार्थतया पठितस्य यमिधातोर्ज्ञानार्थकतया व्याख्याने किं बीजमित्यत अन्यथानुपपत्तिरेव बीजमिति वक्तुं शङ्कामुत्थाप्यान्यथानुपपत्तिं दर्शयति **यद्यपीत्यादिना** । यमिः इक्श्तिपौ धातुनिर्देशे वक्तव्यावित्युक्तेः पूर्वोक्तयमिधातुः ज्ञाने विषयसप्तमी ज्ञानार्थकतया न पठ्यत इत्यर्थः । ते प्राग्धातोरित्युक्तेरुदित्युपसर्गान्विततयानूदितस्य उद्येमिर इत्यस्य प्रतिपदम् उदयच्छन्निति ।

ऋचि येमिर इति लिट्प्रयोगेऽप्यर्थमात्रविवक्षया लङन्तपदं प्रयुक्तमिति ज्ञेयम् । अत एव भाष्येऽपि व्यजानन्निति लङन्तपदप्रयोगः कृत इति ज्ञेयम् । गायन्त्यर्चन्तीति 'वर्तमानार्थकलडन्तप्रायपाठात् येमिर इत्येतदपि छन्दसि लुङ लङ लिटिति सार्वकालिकत्वोक्तेर्लडर्थकमिति प्रदर्शनाय उच्छ्रयन्तीति लडन्तपदेनार्थविवरणं कृतमिति ज्ञेयम् । उच्छ्रयन्त्युत्कृष्टतया कुर्वन्तीत्यर्थः । उपसर्गवशाद्धातुरर्थान्तरविशालकृदित्युपसर्गवशेन धातूना-मनेकार्थत्वस्य शाब्दिकैरुक्तत्वादिति ज्ञेयम् ।

पूर्वोक्तन्यायेनेति । त्वां स्तोमा अवावृधन् इत्यस्यामृचि न वर्धते नो कनीयानिति ह्येनं श्रुतिर्जगौ । महातात्पर्यरोधाच्च श्रुत्यर्थो नापरो भवेत् । यद्यन्यापेक्षया बुद्धिरीशत्वं स्यात्कुतोऽस्य च इति भाष्ये तट्टीकायां च यदि विष्णोस्तोमाद्यधीना वृद्धिः स्यात् तर्हीश्वरत्वं न स्यात् । पराधीनश्चेश्वरश्चेति विप्रतिषेधादित्युक्तन्यायेन प्रकृतेऽपीन्द्रशब्दितेश्वरस्य गानादिना उत्कृष्टत्वकरणस्यायोग्यत्वेनान्वयाभावरूपदोषदुष्टत्वादित्यर्थः । ईश्वरस्य सर्वस्वातन्त्र्योपपादनायैव यमि धातोः परस्मैपदत्वेऽपि ऋचि येमिर इत्यात्मनेपदनिर्देशः कृतः । व्यत्ययो भेदकरणस्वातन्त्र्येषु समीरितः इत्युक्तेः । तथा च स्तोतॄणां भगवद्विषयकज्ञानादावेव स्वातन्त्र्यं न किमु भगवद्गतोत्कृष्टकरणे सामर्थ्यं चेति कैमुत्यसूचनेन भगवतोऽन्याधीनत्वस्य सूचनादिति द्रष्टव्यम् । ज्ञानार्थ इति प्रयोगतोऽवगन्तव्यः । अनेकार्था हि धातव इति धातूनामनेकार्थत्वोक्तेरिति भावः ।

पूर्वमुदित्युपसर्गस्य वंश इत्यनेनान्वयमुपेत्य उच्छ्रितमित्येतत्पद-मुपमालब्धार्थोपपादकत्वेन संयोज्यम् । यमिधातोर्ज्ञानार्थकत्वेन व्याख्याने अन्यथानुपपत्तिरूपबीजं भाष्याभिप्रेततयोक्तमिदानीं तूदित्युपसर्गस्य येमिर

इति क्रियापदेनान्वयमुपेत्य तदन्वयलब्धार्थप्रतिपादकं सदुच्छ्रितमित्येतत्पदं यमिधातोर्ज्ञानार्थकतया व्याख्याने उच्छ्रितत्वेन करणरूपमुख्यार्थान्वयानुपपत्तिरूपबीजसूचकमित्यभिप्रेत्य पक्षान्तरमाह यद्वेति ।

**करणं त्विति** । उत्कृष्टत्वेन करणं तु पूर्वोक्तन्यायेन दुष्टत्वादित्युक्तरीत्या न सम्भवतीत्यर्थः । अस्मिन् पक्षे वंशस्योच्चत्वावगमस्तु दार्ष्टान्तिके उच्छ्रितत्वकथनाद्वा, उदित्यस्यावृत्त्या वंशपदेनान्वयाद्वेति ज्ञेयम् ॥ ९१ ॥

**मंत्रः – ९२**

(अ.१, सू.१०, मं.२)

**यत्सानोः सानुमारुहद्भूर्यस्पष्ट कर्त्वम् ।**
**तदिन्द्रो अथं चेतति यूथेन वृष्णिरेजति ॥**

**पदपाठः**

**यत् । सानोः । सानुम् । आ । अरुहत् । भूरि । अस्पष्ट । कर्त्वम् । तत् । इन्द्रः । अर्थम् । चेतति । यूथेन । वृष्णिः । एजति ॥**

**भाष्यम्**

**उच्चतोऽप्युच्चं सामर्थ्यं करणे तव ।**
**ततोऽपि भूरि यत्तेन चेतत्यर्थमतो भवान् ।**
**मुक्तामुक्तसमूहेन शोभते गूढशक्तिमान् ।**
**उच्चादुच्चं विरिञ्चादिगतं कर्तृत्वमेव यत् ।**
**भूरि स्पष्टमभूत्तेन परेशस्य ततश्च सः ।**
**चेतत्यर्थानशेषांश्च महायूथेन चेष्टते ॥ ९२ ॥**

टीका

अस्पष्टो गूढशक्तिमांस्तत्सम्बुद्धिः हे अस्पष्ट ! यद्यस्मात्तव कर्त्वं कर्तृत्वं करणे सामर्थ्यम् । सानोः सानुमारुहत् । सानुशब्दो गिरिशिखरवाची । उपचारेणोच्चतोऽप्युच्चमभवत् । भूरि ततोऽप्यधिकं चाभवत् । तत्तेन कारणेन वृष्णिः वर्षिता इन्द्रो भवान् अर्थं सर्वपदार्थांश्चेतति जानाति । अत एव च यूथेन मुक्तामुक्तसमूहेन एजति । एजृदीप्त्यर्थः । शोभते । न हि पूर्णशक्तित्वमन्तरेण सार्वज्ञं सर्वसेव्यत्वं च युज्यते । ऋचं प्रकारान्तरेण व्याचष्टे उच्चादिति । यद्यस्मात्कारणादिन्द्रस्य परमेश्वरस्य कर्त्वं कर्तृत्वं सानोः सानुमारुहत् उच्चादुच्चं विरिञ्चादिदेवताजातं गतं प्राप्तम् । परमेश्वरो हि तेषु स्थित्वा करोति । तेनैव कारणेन । तत्कर्तृत्वं भूर्यस्पष्ट अतिशयेन स्पष्टमभूत् । स्पश अज्ञातदृशाविति वक्ष्यति । न ह्यन्यान्तर्गततया विना साक्षादीश्वरगतं कर्तृत्वं मन्दैर्ज्ञायते । ततश्च सर्वकर्मकर्तृत्वादेव स इन्द्रोऽर्थमशेषार्थांश्चेतति । यूथेन स्वरूपाणां महायूथेनैजति कम्पते चेष्टते । यद्यपि कृत्यार्थे त्वन्विहितस्तथापि कृत्यल्युटो बहुलमिति तृजर्थे भवति । स च भावप्रधान इति कर्त्वं कर्तृत्वम् । यद्वा तृचो लोपोऽत्र द्रष्टव्यः । अथवा कर्तव्यमेव कर्त्वं लक्षणया कर्तृत्वमित्युक्तम् ॥ ९२ ॥

टिप्पणी

कर्तृशब्दस्य वक्ष्यमाणव्युत्पत्तिप्रकारेण कर्तृत्वार्थकत्वमित्यभिप्रेत्य योजनामाह कर्त्वं कर्तृत्वमिति । कर्तृत्ववाचकत्वपदेन[१] लक्षणया सामर्थ्य

१. कर्तृत्ववाचिकत्वपदेन - क ।

ग्राह्यमिति प्रदर्शनाय भाष्ये सामर्थ्यकरणमित्युक्तमित्यभिप्रेत्य योजनामाह **करणे सामर्थ्यमिति**। करणे सकलकर्मकरण इत्यर्थः।

ननु सानुशब्दस्य गिरिशिखरवाचित्वे उच्चतोऽप्युच्चमित्युच्चज्ञानार्थकतया भाष्ये कथं व्याख्यानं क्रियत इत्यत आह **उपचारेणेति**।

**ततोऽपीति**। उच्चतोऽप्युच्चादपीत्यर्थः। अभवदित्युक्त्या आरुहदित्यस्याङ्पूर्वाद् रुह बीज जन्मनि प्रादुर्भावे च इति शब्विकरणे पठिताद्धातोर्लङि[1] शपि संज्ञापूर्वकविधेरनित्यत्वेन वा व्यत्ययेन शविकरणताश्रयणेन वा गुणाभावे धातोरडागमे तस्याङा सह सवर्णदीर्घे आरुहदिति रूपमिति दर्शितमिति ज्ञेयम्। छन्दसि लुङ लङ लिट इति लटः सार्वकालिकत्वोक्तेः प्रकृते आरुहदिति लट सार्वकालिकत्वं ध्येयम्। 'ज्ञानं नित्यं क्रिया नित्या बलं शक्तिः परात्मनः। नित्यानन्दोऽव्ययः पूर्णो भगवान् विष्णुरच्युतः। परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' इत्यनुव्याख्यानश्रीब्रह्मसूत्रव्याख्याद्युक्तप्रमाणेषु भगवद्गतसामर्थ्यस्य सार्वकालिकत्वावगमादिति ज्ञेयम्।

**यत्सानोरिति**। यच्छब्दप्रतिसम्बन्धितया प्राप्तं तदिन्द्र इत्युत्तरार्धगतं तत्पदमित्यभिप्रेत्य तदनूद्यार्थमाह **तत तेन कारणेनेति**। सामर्थ्यस्य निरवधिकत्वकारणेनेत्यर्थः। ऋचि भाष्ये चार्थमित्येकवचनं बहुवचनार्थे वर्तत इत्यभिप्रेत्य योजनामाह **सर्वपदार्थानिति**। चिति संज्ञान इति धातोः शब्विकरणे चेततीति रूपमित्यभिप्रेत्य योजनामाह **चेतति जानातीति**।

**अत एव चेति**। सामर्थ्यस्य निरवधिकत्वादेवेत्यर्थः। चशब्दस्तु हेत्वर्थकस्य चेतति एजतीति क्रियाद्वयसम्बन्धसमुच्चायक इति ज्ञेयम्।

---

१. लिङि - क।

**मुक्तामुक्तसमूहेनेति** । तान् परिवारीकृत्येत्यर्थः । चेतत इति भाष्योक्तार्थपरत्वप्रदर्शनाय[1] तत्र प्रकृतिभूतधातुमनूद्य तदर्थं दर्शयति **एजृ दीप्त्यर्थ इति** । भीमसेनधातुगणे शब्विकरणे एजृ भ्रेजृ[2] भ्राजृ दीप्ताविति दीप्त्यर्थकतयात्मनेपदिषु पठितात् एजृ धातो उपदेशोऽजनुनासिक इदिति ऋकारलोपे लटि तस्य व्यत्ययेन परस्मैपदे शब्विकरणे सत्येजतीति रूपसिद्धेस्तस्य शोभत इत्यर्थपरत्वमुपपन्नमिति भावः । यद्यपि इक्श्तिपौ धातुनिर्देशे वक्तव्यावित्युक्तेः एजिरिति वा एजतिरिति वा धातुपाठानुसारेण एजृ इति वा निर्देशः कर्तव्यः । तथापि एजतीत्यत्र एज इति निष्पन्नस्वरूपमनूद्य वा सुखमुखोच्चारणार्थमकारानुबन्धकरणेन वा एजतीत्यर्थत इत्युक्तमिति ज्ञेयम् ।

पूर्वार्धोक्तस्य निरवधिकसामर्थ्यस्योत्तरार्धोक्तयोः सर्वसेव्यत्वयोर्यत्तच्छब्दोक्तहेतुहेतुमद्भावं व्यतिरेकमुखेन दर्शयति **न हीति** ।

पूर्वमस्पष्टेति पदस्य सम्बुध्यन्ततामाश्रित्य भूरित्यस्यारुहदित्यनेनान्वयो दर्शितः । इदानीं त्वस्पष्टेत्यस्य क्रियापदत्वमाश्रित्य तेन सह भूरित्यस्यान्वयमुपेत्य तदन्वयलब्धार्थं दर्शयति **अतिशयेन स्पष्टमभूदिति** । अयमर्थः कथं लब्ध इत्यत तत्र प्रकृतिभूतधातुं भाष्योक्त्या दर्शयति **स्पृश अज्ञात दृशाविति वक्ष्यतीति** । द्वितीयाध्याये विष्णोः कर्माणि पश्यत इत्यस्यामृचि भाष्ये स्पृशाज्ञातदृशौ यस्मादिति वक्ष्यतीत्यर्थः । विवृतं च तत्र टीकायामज्ञातदृशौ प्रत्यक्षायोग्यस्यार्थस्य दर्शने ततश्च स्पृश इति लिङन्तस्य प्राकृतैरदृश्य एव योगिभिर्दृष्टो बभूवेत्यर्थ इति ।

तथा चाज्ञातदृग्वाचकात् स्पृशधातोः कर्मणि लुङात्मनेपदप्रथमपुरुषैकवचनतप्रत्यये छान्दसत्वेन च्लिप्रत्ययाभावे च्लिप्रत्ययादेशतया

---

१. एजतीत्यस्य शोभत इति भाष्योक्तार्थप्रदर्शनाय - क ।

२. येजृ भ्रेजृ - क ।

प्राप्तस्य चिणः प्राप्त्यभावे चिण्प्रत्ययनिमित्तिकस्य तत्प्रत्ययादर्शनरूप-लुकोऽप्यभावे धातोरडागमे व्रश्चादिसूत्रेण शकारस्य षत्वे प्रत्ययतकारस्य ष्टुत्वेऽस्पष्टेति रूपसिद्धिरिति भावः । नन्वीश्वरगतकर्तृत्वं साक्षादेवाभि-व्यज्यतां किमन्यान्तर्गततयेत्यत आह **न हीति** । कर्तृत्वं करणसामर्थ्य-मित्यर्थः ।

**स्वरूपाणामिति** । जगृहे पौरुषं रूपमित्याद्युक्तप्रकारेण स्वस्वरूप-भूतावताराणामित्यर्थः । 'पूर्णमदः पूर्णमिदम्, न स्थानतोऽपि परस्योभय-लिङ्गं सर्वत्र हि' इत्यादिश्रुतिसूत्रेषु भगवदवताराणां निरवधिकपूर्णत्वस्य निर्णीतत्वेन सर्वरूपेषु सामर्थ्यमिति प्रदर्शनाय भाष्ये महायूथेनेति महच्छब्दः प्रयुक्त इत्यभिप्रेत्य योजनामाह **महायूथेनेति** । तेन यूथेनेति सहयोगे तृतीययावताररूपाणामप्राधान्यप्रसङ्गचोद्यनवकाश इति सूचितमिति भावः ।

**कम्पत इति** । एजृ कम्पन इति धातोरिति भावः । अत्र पक्षे स्वाभाविकत्वमेव परस्मैपदित्वं न व्यत्ययेन, कम्पनार्थकस्य एजृ धातोः परस्मैपदिषु पाठादिति ज्ञेयम् । तदेजति तन्नेजतीतीशावास्योपनिषदि ततो बिभेति हरिः स्वयमिति भाष्ये कम्पनस्य भयरूपतया व्याख्यानेऽपि प्रकृते तस्यार्थस्यायोगेन सर्वजगन्नियमनरूपचेष्टार्थकत्वं ग्राह्यमिति प्रदर्शनाय चेष्टत इत्युक्तमित्यभिप्रेत्य योजनामाह **चेष्टत इति** । सर्वं जगत् प्रवर्तयतीत्यर्थः ।

कर्त्वशब्दस्य कर्तृत्वार्थकत्वमाक्षेपसमाधानाभ्यां समर्थयते **यद्यपी-त्यादिना** । **कृत्यार्थ इति** । 'कृत्यार्थे तवैकेन्केन्यत्वन'[१] इति सूत्रे वृत्त्यादौ कृत्यानामर्थो भावकर्मणी तस्मिन् कृत्यार्थे छन्दसि विषये तवैकेन् केन्य त्वन इत्यत एते प्रत्यया भवन्ति ।

---

१. पा.सू. ३-४-१४ ।

ततो बिभेति सर्वोऽपि न बिभेति हरिः स्वयमिति भाष्ये कर्त्वं हविः कर्तव्यमित्यर्थ इत्युक्तत्वेन प्रकृतेऽपि डुकृञ् करण इति धातोः 'कृत्याः प्राङ् ण्वुल्' इति कृत्यसंज्ञकप्रत्ययानां तयोरेव कृत्यर्थखलर्था इति भाव-कर्मरूपार्थविहितत्वेन तस्मिन्नर्थे त्वन्प्रत्यये हलन्त्यमिति प्रत्ययनकारलोपे धातोर्गुणे आदिर्ञिटुडुव इति डुप्रत्ययस्य लोपे कर्त्वमिति रूपस्य निष्पन्नत्वेन तस्य कर्तव्यमित्यर्थपरत्वात् कथं कर्तृत्वमित्यर्थपरत्वमिति शङ्काभिप्रायः ।

कृत्यल्युटो बहुलमिति । तस्मिन् सूत्रे वृत्त्यादौ कृत्यप्रत्यया ल्युट् च बहुलमित्यर्थेषु भवन्ति, भावकर्मणो कृत्या उक्ताः कारकान्तरेऽपि भवन्ति । बहुलग्रहणादन्येऽपि कृत्प्रयया यथाप्राप्तमर्थं व्यभिचरन्तीत्युक्तत्वेन प्रकृते ण्वुल्तृचाविति सूत्रे विहिततृच्प्रत्ययस्य कर्तरि कृदिति कर्त्रर्थकत्वेन तस्मिन् तृजर्थे कर्तरि कृदिति कर्त्रर्थकत्वेन तस्मिन् तृजर्थे कर्तरि त्वन्प्रत्यय इत्यर्थः । यद्यपि त्वन्प्रत्ययस्य कृत्यसंज्ञा नास्ति तथापि कृत्यर्थे विहितत्वेन कृत्यव्यवहारमाश्रित्य वा, कृत्संज्ञकत्वेऽपि बहुलग्रहणादन्येऽपि भवन्तीत्युक्तत्वेन वा, कृत्यल्युटो बहुलमिति सूत्रेण त्वन्प्रत्ययस्य प्राप्ति-रस्तीति ज्ञेयम् ।

नन्वेवमपि कर्त्वशब्दस्य कर्तृरूपधर्मपरत्वं स्यात्, न तु कृत्यत्व-रूपधर्मपरत्वमित्यत आह स चेति । कर्त्वशब्द इत्यर्थः । यद्वेति । ण्वुल्-तृचाविति विहित तृच्प्रत्ययान्ततया निष्पन्नात्, कर्तृशब्दात् कर्तृभाव इति कर्तृशब्दप्रवृत्तिनिमित्तकर्तृत्वरूपभावार्थे तस्य भावस्त्वतलाविति सूत्रेण त्वप्रत्यये छान्दसत्वेन तृच्प्रत्ययस्य लोपे सति कर्तृशब्दस्य निष्पन्नत्वेन तस्य कर्तृत्वार्थकत्वं मुख्यतयैवोपपन्नमिति भावः । कर्त्वशब्दस्य कृत्यार्थक त्वन्प्रत्ययान्ततामाश्रित्यैव पक्षान्तरमाह अथवेति ।

लक्षणयेति । कर्त्वपदवाच्यकर्तव्यस्य कर्तृसापेक्षत्वात्कर्तृगतकर्तृत्वं लक्षणया कर्त्वपदेन गृह्यत इत्युक्तं भवतीत्यर्थः ॥ ९२ ॥

**मंत्रः – ९३**

(अ.१, सू.१०, मं.३)

**युक्ष्वा हि केशिना हरी वृषणा कक्ष्यप्रा ।**
**अथा न इन्द्र सोमपा गिरामुपश्रुतिं चर ॥**

**पदपाठः**

युक्ष्व । हि । केशिना । हरी इति । वृषणा ।
कक्ष्यऽप्रा । अथ । नः । इन्द्र । सोमऽपाः ।
गिराम् । उपऽश्रुतिम् । चर ॥

**भाष्यम्**

**कक्ष्याभिपूरकौ पुष्टया युंक्ष्व त्वं केशिनौ हरी ।**
**अथोपगम्य शृणु नो गिरः ॥ ९३ ॥**

**टीका**

हे सोमपा इन्द्र ! केशिना केशिनौ प्रलम्बकेशवन्तौ वृषणौ सेचकौ युवानौ कक्ष्यप्रा कक्ष्यप्रौ । कक्ष्येति यया रज्ज्वाऽश्व उरसि बध्यते सोच्यते । प्रापूरणे पुष्ट्याकारणेन कक्ष्याभिपूरकौ । हरी अश्वौ युक्ष्व युंक्ष्व रथे योजय । अथ तदनन्तरमिहोपगम्य नो गिरामुपश्रुतिमुपश्रवणं च कुरु । स्तुतिरूपा नो गिरः शृणु ॥ ९३ ॥

## टिप्पणी

तदस्यस्त्यस्मिन्निति मतुबिति सूत्रे 'भूमनिन्दाप्रशंसासु नित्ययोगेऽपिशायने । सम्बन्धेऽस्ति विवक्षायां भवन्ति मतुबादयः' इति वृत्त्यादावुक्तत्वेन प्रकृते केशा अतिशयेन अनयोस्सन्तीत्यतिशयार्थे वा, प्रशंसार्थे वा केशशब्दात् अत इनि ठनाविति इनि प्रत्यय इकारलोपे यस्येति चेत्यकारलोपे केशिन्शब्दनिष्पत्तौ द्वितीया द्विवचने तस्य सुपां सुलुगित्यादिनाकारादेशे केशिना इति रूपसिद्धिरित्यभिप्रेत्य तद्विवरणपूर्वकमतिशयत्वं दर्शयति **केशिना केशिनौ प्रलम्बकेशवन्ताविति** । अश्वानां स्कन्धादुपरिभागे लम्बमानबहुकेशयुतत्वमतिशयित्वापादकमिति भावः । उक्तं च स्कन्धगतकेशैरतिशयितत्वमश्वानां भागवते दशमस्कन्धे पञ्चविंशाध्याये ।

केशीतकं सम्प्रहितस्सुरैर्मही महाहयो निर्दरयन् महाजवः[१] सटावधूताभ्रविमानसङ्कुलं[२] कुर्वन्नतो हेषिताखिल इति विवृतञ्च तत्र टीकायाम् अभ्राणि च विमानानि सटाभिः स्कन्धदीर्घरोमभिः अवधूतान्यभ्रविमानानि तैः सङ्कुलमिति । वृष सेचन इति धातोः कनिन्प्रत्ययान्ततया निष्पन्नस्य वृषन्शब्दस्य सेचकत्वमर्थ इत्यभिप्रेत्य योजनामाह **वृषणौ सेचकाविति**।

ऋचि द्वितीयाद्विवचनस्य पूर्ववदाकाशदेशेन वृषणेति निर्देश इति भावः । सेचकत्वं च यौवनावस्थायामेवेत्यभिप्रेत्य योजनामाह **युवानाविति** । कक्ष्यप्रेत्यत्र प्रेत्यस्य [३]कक्ष्यति पूरकाविति भाष्योक्तपूरणार्थकत्व-

---

१. महामायो निर्दळयन् मनोजवः - क ।
२. नभोहेषित भीषिताखिळ - क ।
३. कक्ष्याभिपूरकाविति - क ।
४. प्रकृतिभूतधातुं - क ।

प्रदर्शनाय तत्र [४]प्रकृतिधातुं पठति प्रा पूरण इति । लुग्विकरणे पठितात् प्रा पूरण इति धातोः कक्ष्यां प्रातः पूरयति इत्यर्थः । आतोऽनुपसर्गे कः इति प्रत्ययककारलोपे आतो लोप इटि चेत्याकारलोपे कर्मकारकवाचि-कक्ष्यापदस्य 'उपपदमतिङि'त्युपपदसमासे कक्ष्याशब्दस्य छान्दसे ह्रस्वत्वे कक्ष्यप्रशब्दनिष्पत्तौ द्वितीयाद्विवचनस्याकारादेशे कक्ष्यप्रेत्यस्य कक्ष्याभि-पूरकावित्यर्थपरत्वमुपपन्नमिति भावः ।

कक्ष्याभिपूरणे पुष्टत्वं हेतुरिति प्रदर्शनाय भाष्ये पुष्ट्येति शेषत्वेनोक्त-मित्यभिप्रेत्य योजनामाह पुष्ट्या कारणेनेति । युजिर योग इति श्नविकरणे स्वरितत्वेन पठिताद्धातोर्लोडात्मनेपदमध्यमपुरुषैकवचने श्नमो नकारस्य छान्दसलोपे युंक्ष्वेति ऋचि रूपमित्यभिप्रेत्य तदनूद्य भाष्यपदेन योजनामाह युक्ष्व युंक्ष्वेति ॥ ९३ ॥

**मंत्रः – ९४**

(अ.१, सू.१०, मं.४)

**एहि स्तोमाँ अभि स्वराऽभि गृणीह्या रुव ।**
**ब्रह्म च नो वसो सचेन्द्र यज्ञं च वर्धय ॥**

**पदपाठः**

आ । इहि । स्तोमान् । अभि । स्वर । अभि ।
गृणीहि । आ । रुव । ब्रह्म । च । नः । वसो
इति । सचा । इन्द्र । यज्ञम् । च । वर्धय ॥

भाष्यम्

**अभिस्वर[१] वस्तुतिम् ।**
**प्रशंसां कुरु शब्दं च पुनर्हर्षान्महत्तरम् ।**
**ब्रह्म यज्ञं च नोऽन्तस्थो [२]बहिष्ठश्चैव वर्धय ॥ ९४ ॥**

टीका

हे इन्द्र ! एहि स्तोमान् स्तुतिमभिस्वरच स्वीकारानुसारिणं स्वरं कुरु। अभिगृणीहि प्रशंसां कुरु। अस्मदीयामिति शेषः। हे स्तोतारः साधुकृतमिति। आरुव पुनर्हर्षान्महत्तरं शब्दं च कुरु। सर्वत्र वसति सर्वस्यान्तस्थो बहिष्ठश्च वर्तते इति वसुः। हे वसो नोऽस्मदीयं ब्रह्म वेदं स्तुतिं च यज्ञं च सचा सहैव सुखेनैव वा वर्धय प्रवर्तय ॥ ९४ ॥

टिप्पणी

किं विषयिणी प्रशंसेत्यतस्तत्रापेक्षितशेषं पूरयति अस्मदीयमिति। शेषेति। प्रशंसाप्रकारं दर्शयति हे स्तोतारः साधुकृतमितीति। युष्माभिः स्तोत्रं साधुकृतमित्येवंरूपप्रशंसां कुर्वन्नित्यन्वयो बोध्यः।

आरुवेति। आङ्पूर्वात् रु शब्द इति धातोः लोण्मध्यमपुरुषैकवचने व्यत्ययेन शविकरणे अतो हेरिति लुकि शविकरणस्य ङित्वेन गुणाभावे उवङादेश आरुवेति रूपसिद्धेस्तस्य पर्यवसितार्थकथनपरं भाष्यमित्यभिप्रेत्य योजनामाह पुनर्हर्षादिति। अभिस्वरेत्युक्तत्वात्पुनरित्युक्तं ज्ञेयम्। अन्तस्थो बहिष्ठश्चेति भाष्योक्तार्थस्य व्याख्येयपदं व्युत्पत्तिप्रदर्शनपूर्वकं दर्शयति सर्वत्र वसतीति।

---

१. स्वर च स्तुतिम् – पा०। २. बहिस्थ – पा०।

'यच्च किञ्चिज्जगत्सर्वं दृश्यते श्रूयतेऽपि वा । अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः' इत्यादि श्रुतेः । सर्वत्रेति योग्यतयान्वेतीति भावः । उक्तश्रुतिसूचनायैव भाष्य अन्तस्य इत्याद्युक्तमिति ज्ञेयम् । ब्रह्म यज्ञं चेति भाष्ये प्रयुक्तब्रह्मशब्दः ब्रह्म चेति चकारशब्दान्वित ऋक्पदानुवादरूप इत्युपेत्य योजनामाह ब्रह्म वेद स्तुतिं चेति । ब्रह्मपदवाच्यवेदरूपस्तुतिं चेत्यर्थः ।

स चेत्यस्यार्थद्वयपरत्वमुपेत्य योजनामाह स च सहैव सुखेनैवेति । सहार्थकेषु षच समवाय इत्यस्माद्धातोर्भवि क्विपि तस्य सर्वापहारिलोपे धात्वादेः षः स इति धातुषकारस्य सत्वे सचिति प्रातिपदिकनिष्पत्तौ तृतीयैकवचने स चेति रूपसिद्धेस्तस्य समवायशब्दितसहार्थकत्वमुपपन्नमिति भावः ।

सुखार्थकत्वे तु ष च सेचन इति धातोः कर्मणि क्विबिति ज्ञेयम् । प्रक्रिया तु पूर्ववदेव । तथा च सुखमेव मे स्यात् दुःखं मनागपि मा भूदिति सुखस्य सर्वापेक्षितत्वेन सर्वसेव्यत्वात् स चेत्यस्य सुखेनेत्यर्थपरत्वमुपपन्नमिति भावः । एहि, अभिस्वर, अभिगृणीहि, आरुवेति सर्वत्र क्रियापदेषूपसर्गश्रवणाद् वर्धयेति क्रियापदेऽप्याधिक्यार्थलाभाय प्रेत्युपसर्गोऽध्याहार्य इत्यभिप्रेत्य योजनामाह वर्धयेति । वृधु वृद्धाविति धातोर्णिचि लोण्मध्यमपुरुषैकवचने वर्धयेति रूपमिति ज्ञेयम् ।

क्वचिद् व्यवर्धय प्रवर्तयेति पाठो दृश्यते तत्र प्रवर्तयेत्यस्यार्थकथनपरत्वेऽपि व्यवर्धयेति टीकापाठो लेखकदोषमूलः । तथा हि वीत्युपसर्गपूर्वकत्वे विवर्धयेति निर्देशः स्यात् । यदि वि+अव इत्युपसर्गद्वयपूर्वकत्वं तदा व्यवर्धयेति निर्देशः स्यात् । तस्माद् व्यवर्धयेति पाठो-

ऽनुपपन्न इति भाति । यद्वा ऋधु वृद्धावित्यस्य श्यन्विकरणे पठिताद्धातोः क्तप्रत्ययान्ततया निष्पन्नात् ऋद्धशब्दात् ऋद्धं करोतीत्यर्थे तत्करोति तदाचष्ट इति णिचि लोण्मध्यमपुरुषैकवचने वि अवेत्युपसर्गद्वयपूर्वकत्वे व्यव ऋद्धय इति स्थिते आद्गुण इति गुणे व्यवर्द्धयेति रूपमिति ज्ञेयम् । ॥ ९४ ॥

**मंत्रः – ९५**

(अ.१, सू.१०, मं.५)

**उक्थमिन्द्राय शंस्यं वर्धनं पुरुनिःषिधे ।**
**शक्रो यथा सुतेषु णो रारणत्सख्येषु च ॥**

**पदपाठः**

**उक्थम् । इन्द्राय । शंस्यम् । वर्धनम् ।**
**पुरुनिःऽसिधे । शक्रः । यथा । सुतेषु । नः ।**
**ररणत् । सख्येषु । च ॥**

**भाष्यम्**

**नित्यवृद्धत्वतो विष्णोर्वर्धनं तु [1]प्रकाशनम् ।**
**बहुशत्रून्निष्पिदसौ हरिर्दनुजघातकः ।**
**अस्मत्सख्याय शब्दं च चकारास्मासु संस्थितः ।**
**यथा सुतेषु सोमेषु करोत्यृत्विक्षु च [2]स्थितः ॥ ९५ ॥**

---

१. प्रकाशतः – पा० । २. संस्थितः – पा० ।

## टीका

इन्द्राय परमेश्वराय तस्यैव वर्धनम्। उक्थं शंस्यं शंसनीयम्। अत्रोक्थस्येन्द्रवर्धनत्वं प्रतीयते तत्कीदृशमित्यत आह नित्येनेति। ततश्च वर्धनं प्रकाशकम्। पुरुनिष्षिध इतीन्द्रविशेषणम्। तद्व्याचष्टे बह्विति। निषेधतीति निष्षित्। पुरुशब्दस्य बह्विति व्याख्यानम्। शत्रूनिति तस्य विशेष्यम्। उपपदं द्वितीयान्तमिति दर्शयितुं शत्रूनित्युक्तम्। अथवा विभक्तिव्यत्ययेन शत्रूणामित्यर्थः। तात्पर्यार्थमाह दनुजघातक इति। स शक्रो यथा सोमेषु सुतेषु सत्सु रारणत् शब्दं करोति। ऋत्विक्षु स्थितः स्तुतीः प्रवर्तयति एवं नः सख्येषु अस्मत्सख्याय च रारणत् अस्मासु संस्थितः शब्दं चकार सखाहमस्मीति। रारणदिति रणतेर्यङ्लुगन्ताल्लेट्। स च लडाद्यर्थे॥ ९५॥

## टिप्पणी

अत्रेन्द्रायेति चतुर्थी षष्ठ्यर्थे वर्तत इत्यभिप्रेत्य योजनामाह तस्यैवेति। इन्द्रशब्दितपरमेश्वरस्यैवेत्यर्थः। 'नामानि सर्वाणि यमाविशन्ति, यो देवानां नामधा एक एव' इति। सर्वे वेदाः सर्वे घोषा एकैव व्याहृतिः प्राण एवेति, वेदैश्च सर्वैरहमेव वेद्यो इत्यादिप्रमाणैरुक्तनाम ऋग्जातस्य परममुख्यवृत्त्या भगवदेकपरत्वमिति दर्शनाय तस्यैवेति सावधारणत्वेनोक्तमिति ज्ञेयम्। निषेधतीति निष्षिदिति। निरित्युपसर्गपूर्वकात् षिधु गत्यामिति धातोः क्विब्वेति सूत्रेण कर्तरि कृदिति कर्त्रर्थे क्विप्प्रत्यये तस्य सर्वापहारिलोपे धात्वादेः षः स इति धातुषकारस्य सकार उपसर्गे रेफस्य खरवसानयोर्विसर्जनीय इति विसर्गे तस्य विसर्गस्य ईदुदुपधस्य चाप्रत्ययस्येति कुप्वोः परतो विहितस्यापि षकारस्याकुप्वोरपि परत-

श्छान्दसत्वेन प्राप्तौ तेन षकारेण योगे सति धातुसकारस्य ष्टुना ष्टुरिति ष्टुत्वेन षकारे क्विपः कित्वेन धातोर्गुणाभावे धकारस्य जश्त्वे वावसान इति चर्त्वे निष्षिदिति रूपसिद्धेरुपसर्गवशाद्धातूनामनेकार्थत्वेन निष्षिदित्यस्य निषेधार्थकत्वेन निष्षध इति चतुर्थैकवचनस्य निषेधकायेत्यर्थपरत्वमुपपन्नमिति भावः ।

निरित्यस्य निदर्शनार्थकत्वप्रदर्शनायैव टीकायां निषेधतीति निषेधार्थकेन नीत्युपसर्गेण विग्रहप्रदर्शनं कृतमिति ज्ञेयम् । निषेधतीत्यत्र उपसर्गात्सुनोतीत्यादिना धातुसकारस्य षत्वमिति ज्ञेयम् । बह्विति व्याख्यानमिति । वेदनिघण्टौ 'उरु तुवि भूरि' इत्यादिना पुरुशब्दस्य बहुनामसु पठितत्वेन बहुशब्दपर्यायत्वाद्भाष्ये बहुशब्देन पुरुशब्दविवरणं कृतमिति भावः । ननु बहुशब्दस्य पुरुशब्दव्याख्यानरूपत्वेऽपि शत्रूनित्यर्थः कथं लब्ध इत्यत आह शत्रूनिति तस्य विशेष्यमिति ।

यथा दण्डी कुण्डलीत्यादौ दण्डादि कर्तृकर्मणोः कृतीति षष्ठी प्राप्तेः शत्रूणां निष्षदसाविति निर्देशे कर्तव्ये कथं भाष्ये शत्रूनिति द्वितीयान्ततया निर्देशः कृत इत्यत आह उपपदमिति । पुरु निषेध इत्यत्र पुरु इत्युपपदं द्वितीयान्तमिति दर्शयितुमित्यर्थः । तथा क्विब्वेति सूत्रेण सोपपदेभ्यो निरुपपदेभ्यश्च धातुभ्यः क्विप्प्रत्ययस्य विहितत्वेन प्रकृते पुरु निष्षद इत्यत्र बहुत्वसङ्ख्योपेतान् शत्रून् निषेधतीति कर्मकारकवाचि पुरुशब्दोपपदे क्विप्प्रत्यय उपपदमतिङित्युपपदसमासे सति पुरुनिष्षच्छब्दनिष्पत्तेस्तत्र समासान्तर्गतविग्रहवाक्यार्थप्रदर्शनाय भाष्ये शत्रूनित्युक्तमिति भावः ।

अन्यथेति । निरुपपदात् क्विप्प्रत्ययपक्षे द्वितीयान्तपुरुशब्दस्योपपदत्वाभावेन शत्रूनित्यस्योपपदसमासप्रदर्शकत्वाभावात् कृद्योगे पुरुशब्दस्य

षष्ठ्यन्तत्वस्याश्रयणीयत्वेन तद्व्याख्यानपरस्यापि शत्रूनितिपदस्य विभक्ति-व्यत्ययेन शत्रूणामित्यर्थपरत्वमाश्रयणीयमिति भावः ।

नन्वस्मिन्पक्षे शत्रूणामित्येव निर्देशस्य भाष्ये कर्तव्यत्वात् षष्ठ्यर्थे शत्रूनिति द्वितीयाविभक्तिव्यत्ययाश्रयणं किमर्थं कृतमिति चेन्न, पुरु निषध इत्यत्र निषच्छब्दस्य कर्तरि कृदन्तत्वेन तद्योगे पुरुशब्दस्य कर्मण्यर्थे षष्ठीति प्रदर्शनाय कर्मकारकवाचि द्वितीयाविभक्त्यन्तेन निर्देशः कृत इति । नन्वेवं कर्मणि चेति षष्ठीसमासनिषेधात् पुरुशब्दस्य निषच्छब्देन कथं षष्ठीसमास इति चेन्न, कर्मणि चेति सूत्रे कर्मणीत्युच्चार्यविहितषष्ठ्या एव समासनिषेधस्य वृत्त्यादावुक्तत्वेनोभयप्राप्तौ कर्मणीति सूत्रप्राप्तषष्ठ्या एव कर्मणि चेति सूत्रेण समासनिषेधात् ।

प्रकृते कर्तुरनुपादानेनोभयप्राप्तेरभावेनोभयप्राप्तौ कर्मणीति षष्ठ्याः प्राप्त्यभावेन कर्तृकर्मणोः कृतीति प्राप्तषष्ठ्या समासनिषेधाभावेन पुरुशब्दस्य षष्ठीसमासोपपत्तिरिति ।

तात्पर्यार्थमाहेति । पुरुनिष्षच्छब्दस्येति शेषः । दनुजेन्द्रारि दानवा इत्यमरोक्तेर्दनुजादिशब्दितदानवानामिन्द्रशत्रुत्वेन तेषामेव निषेध्यतया प्राप्ते-रिति भावेनेन्द्रायेति चतुर्थ्यास्तस्यैवेति षष्ठ्यर्थतया व्याख्यानात् तद्विशेषण-भूतेऽपि पुरुनिष्षध इति शब्दे चतुर्थ्याः षष्ठ्यर्थकत्वं ज्ञेयम् ।

ऋचि न इति षष्ठ्यन्तस्य सख्येषु चेति सप्तम्यन्तेनान्वयः । तत्रस्थ सप्तमी च तादर्थ्ये वर्तत इति दर्शनाय भाष्य अस्मात्सख्यायेत्युक्त-मित्यभिप्रेत्य योजनामाह नः सख्येष्वस्मत्सख्याय चेति । ननु पूरण गुणेति सूत्रे गुणवाचिनः षष्ठीसमासस्य निषिद्धत्वात्प्रकृते सख्युर्भाव इति

श्छान्दसत्वेन प्राप्तौ तेन षकारेण योगे सति धातुसकारस्य ष्टुना ष्टुरिति ष्टुत्वेन षकारे क्विपः कित्वेन धातोर्गुणाभावे धकारस्य जश्त्वे वावसान इति चर्त्वे निष्षिदिति रूपसिद्धेरुपसर्गवशाद्धातूनामनेकार्थत्वेन निष्षिदित्यस्य निषेधार्थकत्वेन निष्षध इति चतुर्थैकवचनस्य निषेधकायेत्यर्थपरत्वमुपपन्नमिति भावः ।

निरित्यस्य निदर्शनार्थकत्वप्रदर्शनायैव टीकायां निषेधतीति निषेधार्थकेन नीत्युपसर्गेण विग्रहप्रदर्शनं कृतमिति ज्ञेयम् । निषेधतीत्यत्र उपसर्गात्सुनोतीत्यादिना धातुसकारस्य षत्वमिति ज्ञेयम् । बह्विति व्याख्यानमिति । वेदनिघण्टौ 'उरु तुवि भूरि' इत्यादिना पुरुशब्दस्य बहुनामसु पठितत्वेन बहुशब्दपर्यायत्वाद्भाष्ये बहुशब्देन पुरुशब्दविवरणं कृतमिति भावः । ननु बहुशब्दस्य पुरुशब्दव्याख्यानरूपत्वेऽपि शत्रूनित्यर्थः कथं लब्ध इत्यत आह शत्रूनिति तस्य विशेष्यमिति ।

यथा दण्डी कुण्डलीत्यादौ दण्डादि कर्तृकर्मणोः कृतीति षष्ठी प्राप्तेः शत्रूणां निष्षदसाविति निर्देशे कर्तव्ये कथं भाष्ये शत्रूनिति द्वितीयान्ततया निर्देशः कृत इत्यत आह उपपदमिति। पुरु निषेध इत्यत्र पुरु इत्युपपदं द्वितीयान्तमिति दर्शयितुमित्यर्थः । तथा क्विब्वेति सूत्रेण सोपपदेभ्यो निरुपपदेभ्यश्च धातुभ्यः क्विप्प्रत्ययस्य विहितत्वेन प्रकृते पुरु निष्षद इत्यत्र बहुत्वसङ्ख्योपेतान् शत्रून् निषेधतीति कर्मकारकवाचि पुरुशब्दोपपदे क्विप्प्रत्यय उपपदमतिङित्युपपदसमासे सति पुरुनिष्षच्छब्दनिष्पत्तेस्तत्र समासान्तर्गतविग्रहवाक्यार्थप्रदर्शनाय भाष्ये शत्रूनित्युक्तमिति भावः ।

अन्यथेति । निरुपपदात् क्विप्प्रत्ययपक्षे द्वितीयान्तपुरुशब्दस्योपपदत्वाभावेन शत्रूनित्यस्योपपदसमासप्रदर्शकत्वाभावात् कृद्योगे पुरुशब्दस्य

षष्ठ्यन्तत्वस्याश्रयणीयत्वेन तद्व्याख्यानपरस्यापि शत्रूनितिपदस्य विभक्ति-व्यत्ययेन शत्रूणामित्यर्थपरत्वमाश्रयणीयमिति भावः ।

नन्वस्मिन्पक्षे शत्रूणामित्येव निर्देशस्य भाष्ये कर्तव्यत्वात् षष्ठ्यर्थे शत्रूनिति द्वितीयाविभक्तिव्यत्ययाश्रयणं किमर्थं कृतमिति चेन्न, पुरु निषध इत्यत्र निषच्छब्दस्य कर्तरि कृदन्तत्वेन तद्योगे पुरुशब्दस्य कर्मण्यर्थे षष्ठीति प्रदर्शनाय कर्मकारकवाचि द्वितीयाविभक्त्यन्तेन निर्देशः कृत इति । नन्वेवं कर्मणि चेति षष्ठीसमासनिषेधात् पुरुशब्दस्य निषच्छब्देन कथं षष्ठीसमास इति चेन्न, कर्मणि चेति सूत्रे कर्मणीत्युच्चार्यविहितषष्ठ्या एव समासनिषेधस्य वृत्त्यादावुक्तत्वेनोभयप्राप्तौ कर्मणीति सूत्रप्राप्तषष्ठ्या एव कर्मणि चेति सूत्रेण समासनिषेधात् ।

प्रकृते कर्तुरनुपादानेनोभयप्राप्तेरभावेनोभयप्राप्तौ कर्मणीति षष्ठ्याः प्राप्त्यभावेन कर्तृकर्मणोः कृतीति प्राप्तषष्ठ्या समासनिषेधाभावेन पुरुशब्दस्य षष्ठीसमासोपपत्तिरिति ।

तात्पर्यार्थमाहेति । पुरुनिषच्छब्दस्येति शेषः । दनुजेन्द्रारि दानवा इत्यमरोक्तेर्दनुजादिशब्दितदानवानामिन्द्रशत्रुत्वेन तेषामेव निषेध्यतया प्राप्ते-रिति भावेनेन्द्रायेति चतुर्थ्यास्तस्यैवेति षष्ठ्यर्थतया व्याख्यानात् तद्विशेषण-भूतेऽपि पुरुनिषध इति शब्दे चतुर्थ्याः षष्ठ्यर्थकत्वं ज्ञेयम् ।

ऋचि न इति षष्ठ्यन्तस्य सख्येषु चेति सप्तम्यन्तेनान्वयः । तत्रस्थ सप्तमी च तादर्थ्ये वर्तत इति दर्शनाय भाष्य अस्मात्सख्यायेत्युक्त-मित्यभिप्रेत्य योजनामाह नः सख्येष्वस्मत्सख्याय चेति । ननु पूरण गुणेति सूत्रे गुणवाचिनः षष्ठीसमासस्य निषिद्धत्वात्प्रकृते सख्युर्भाव इति

भावार्थस्य सख्युर्य इति सूत्रेण यप्रत्ययान्ततया निष्पन्नस्य शब्दस्य[1] सखित्वरूपगुणवाचकत्वेन गुणवाचिना सख्यशब्देनास्मच्छब्दस्य षष्ठी-समासाश्रयणे भाष्ये टीकायां चास्मत्सखायेति कथं निर्देशः कृत इति चेत्, उच्यते— 'तदशिष्यं संज्ञाप्रमाणत्वात्, अधिकरणैतावत्वे च' इत्यादिसूत्रेषु संज्ञायाः प्रमाणत्वं संज्ञाप्रमाणत्वम् । अधिकरणस्यैतावत्व-मधिकरणैतावत्वमिति गुणवाचिना षष्ठीसमासस्याश्रितत्वेन पूरणगुणेति निषेधस्यानित्यत्वज्ञापनात् प्रकृतेऽपि निषेधस्याप्रवृत्तेः षष्ठीसमासाश्रयणेन निर्देशः कृतः इति ।

ननु 'रषाभ्यां नो णः समानपदे, अट्कुप्वाङ्नुम्व्यवायेऽपि' इति समानपदाधिकारे विहितस्य णकारस्य ऋचि श्रुतेषु नः इति भिन्नपदे कथं प्राप्तिः । न च वाच्यम्— नश्च धातुस्थोरुषुभ्य इति सूत्रे षुशब्दा-त्परस्थास्मदादेशनसो नकारस्य णत्वविधानेन प्रकृतेऽपि णत्वं भविष्य-तीति । तस्मिन् सूत्रे सुञः इति सूत्रविहितषकारोपेतस्य सुञ इति निपातस्य ग्रहणं न सप्तमीबहुवचनस्य । तेन इन्द्रो धर्ता गृहेषु न इत्यत्र न भवतीति पदमञ्जर्यादावुक्तत्वात् । अत एव नश्च धातुस्थ इति णत्वविधायकसूत्रे सुञ इति षत्वविधायकसूत्रे कः सुञीति दीर्घविधायक-सूत्रे चाभिषुणः सखीनाम् ऊर्ध्व ऊषण ऊतय इत्येवोदाहृतं वृत्त्यादौ, तस्मादत्र कथं णत्वप्राप्तिरिति चेदत्रोच्यते— गीतातात्पर्ये चतुर्थेऽध्याये 'कर्मणो ह्यपि बोद्धव्यं बोद्धव्यं च विकर्मणः । अकर्मणश्च बोद्धव्यं गहना कर्मणो गतिः' इति श्लोकव्याख्यावसरे कर्म नः अकर्म नः इति पद-विभागाश्रयणेन कर्मापि मत्त इति बोद्धव्यमित्यादीत्युक्तप्रकारानुसारेण तत्र

१. सख्यशब्दस्य - क ।

टीकायामसमानपदस्य रेफात्परस्य नस्य णत्वं दृष्टम् । ब्रह्माण इन्द्रोपयाहि विद्वानित्यादावित्युक्तत्वात् ।

तथा च हे इन्द्र नः ब्रह्म उपयाहीत्यादौ कर्म न इत्यादौ च भिन्न-पदेऽपि व्यत्ययो बहुलमित्यनुशानसबलाद्यथा ब्रह्मण इति कर्मण इत्यादि णकारोपेतप्रयोगो दृष्टः तथा प्रकृतेऽपि सुतेषण इत्यत्र भिन्नपदेऽपि णत्वमिति सर्वं समञ्जसमिति शब्दं चकारेत्युक्तशब्दकरणप्रकारं दर्शयति सखाहमस्मीतीति ।

रारणदित्यस्य शब्दं चकारेत्यर्थपरत्वं कथमित्यत आह रारणदिति । राणतेरिति । रण शब्द इति धातोः यङ्लुगन्ताल्लेट्प्रत्यये तस्य तिबादिकार्ये रारणदिति रूपमिति भावः । अत्रापेक्षितप्रक्रियावशेष ऋगर्थमञ्जर्यां सम्यगुप-पादितो द्रष्टव्यः ॥ ९५ ॥

मंत्रः – ९६

(अ.१, सू.१०, मं.६)

**तमित्संखित्व ईमहे तं राये तं सुवीर्ये ।**
**स शक्र उत नः शकदिन्द्रो वसु दयमानः ॥**

पदपाठः

**तम् । इत् । सखिऽत्वे । ईमहे । तम् । राये ।**
**तम् । सुऽवीर्ये । सः । शक्रः । उत । नः ।**
**शकत् । इन्द्रः । वसु । दयमानः ॥**

भाष्यम्

**तमेव शरणं नित्यं सखित्वाद्यर्थमीमहे ।**
**शक्त्यानन्दस्वरूपत्वाच्छक्रः सर्वत्र चाशकत् ।**
**अस्माकं च सदा वित्तं ददद्देव प्रवर्तते ।। ९६ ।।**

टीका

वयं सखित्वे सखित्वार्थं तमित् तमेवेन्द्रं नित्यं शरणमीमहे। राये वित्तार्थं च तमीमहे । सुवीर्ये साधुवीर्यार्थं च तमीमहे । सर्वस्य सङ्ग्रहणोक्तिः सखित्वाद्यर्थमिति । शरणं प्राप्तश्च स यस्माच्छक्रः शक्त्यानन्दस्वरूपत्वाच्छक्रशब्दार्थः। शक्लृ शक्तौ रमुक्रीडायां द्वाभ्यां डः । उत तस्माच्छकत् सर्वत्र तत्तत्प्रार्थितसम्पादनेऽशकत् शक्तो भवत्येव । किञ्च । स इन्द्रो नोऽस्मभ्यं वसु वित्तं दयमानः । दय दानगतिरक्षणेष । ददद्देव सदा प्रवर्तत इति शेषः । अतश्च तमीमहे । ।। ९६ ।।

टिप्पणी

व्यत्ययो बहुलमित्युक्तेः सखित्व इत्यादिसप्तमीनिमित्तार्थे वर्तत इत्यभिप्रेत्य योजनामाह सखित्वे सखित्वार्थमिति । ईमह इति । प्राप्नुम इत्यर्थः । ईङ्गतावित्यस्य श्यन्विकरणे पठिताद्धातोर्लडात्मनेपदोत्तमपुरुष-बहुवचने छान्दसत्वेन श्यन्विकरणस्य लुकि इमह इति रूपमिति ज्ञेयम् ।

सर्वस्येति । सखित्वे राये सुवीर्ये इत्युक्तस्य सर्वस्य सङ्ग्रहार्थं सखित्वाद्यर्थमित्युक्तिरित्यर्थः । अव्ययानामनेकार्थत्वादुतेत्यस्य तस्मादिति हेत्वर्थकत्वम्, तथा च तत्प्रतिसम्बन्धितया तस्मादिति प्राप्तं शक्र

इत्येतद्धेतुगर्भविशेषणं चेत्युपेत्य हेतुत्वं व्यञ्जयन् योजनामाह **यस्मादित्यादिना** । शक्रशब्दस्य शक्त्यानन्दस्वरूपत्वार्थकत्वं कथमित्यतः तत्र प्रकृतभूतधातुद्वयपठनपूर्वकं व्युत्पत्तिं दर्शयति **शक्लृ शक्तावित्यादिना** । **उ इति** । उप्रत्यय इत्यर्थः । तथा च चुटू इति उकारलोपे डित्यभस्यापि टेर्लोप इति रमु धातोष्टिलोपे शक्रशब्दस्य निष्पत्तिरिति भावः । अद्भुतमित्यादिरूपसिद्ध्यर्थमदितुभ्यां डुतजिति धातुसमुदायात् प्रत्ययोत्पत्तेर्दर्शनादिति ज्ञेयम् ।

शकदित्यत्राडभावः छान्दस इत्यभिप्रेत्य योजनामाह **अशकदिति** । 'छन्दसि लुङ्लङ्लिटः' इति लुङः सार्वकालिकत्वोक्तेः प्रकृते शक इति लट् सार्वकालिक इत्यभिप्रेत्यार्थमाह **शक्तो भवत्येवेति** ।

ननु दयमान इत्यस्य ददिति भाष्योक्तदानार्थकत्वं कथमित्यतस्तत्र प्रकृतिभूतधातुं पठति **दय दान इति** । दान गति रक्षणार्थस्य धातोरनुदात्तत्वेनानुदात्त ङित आत्मनेपदमित्यनुदात्तेतोरात्मनेपदस्य विहितत्वेन तङानावात्मनेपदमित्यात्मनेपदसंज्ञकस्य शानचः लटःशतृशानचाविति प्राप्तौ आने मुगिति मुगागमे दयमान इति रूपसिद्धेस्तस्य दानार्थकत्वमुपपन्नमिति भावः ।

ननु ऋचि दयमान इति व्याख्येयपदस्यात्मनेपदसंज्ञितशानजन्ततया पाठात् तद्व्याख्यानभूतभाष्यपदे ददित्यत्र प्रकृतिभूतस्य डुदाञ् दान इति धातोर्ञित्वेनोभयपदित्वादात्मनेपदसंज्ञितशानजन्ततयैव ददमान इति निर्देशस्य कर्तव्यत्वात् ल परस्मैपदमिति परस्मैपदसंज्ञितशत्रन्तेन ददित्यनेन कथं व्याख्यानं क्रियत इति चेदुच्यते— स्वरितञितः कर्त्रभिप्राये क्रियाफले इति सूत्रे क्रियाफलस्य कर्तृगामित्वविवक्षायामेवात्मनेपदस्य

विहितत्वेन परमैश्वर्यस्य वित्तदानादिना प्रयोजनाभावस्य 'न प्रयोजनवत्वात् लोकवत्तु लीलीकैवल्यम्', 'देवस्यैष स्वभावोऽयमाप्तकामस्य का स्पृहा' इत्यादिब्रह्मसूत्रश्रुतिषु निर्णीतत्वेन प्रकृते दयमान इत्युक्तदानेन परमेश्वरस्य प्रयोजनापेक्षा नास्तीति सूचनाय परस्मैपदशत्रन्तेन व्याख्यानं कृतमिति ।

यद्यपि भाष्ये ददिति दानार्थकतया व्याख्यानात्तदनुसारेण टीकायां दय दान इत्येव निर्देशः कर्तव्यः । तथापि भाष्ये दानार्थकत्वकथनं गतिरक्षणयोरप्युपलक्षणीयम् । तथा चास्मभ्यं वित्तं ददते ददाति ददं[1] वित्तं स पूजासाधनत्वेन दयते यच्छति[2] प्राप्नोति । तथा अस्माभिः अन्यान् भगवद्भक्तान् प्रति वित्तं दाययति गमयति प्रापयतीति स्वदत्तदानं स्वयमेव दयते रक्षति चेत्यर्थविशेषणपरत्वज्ञापनाय गतिरक्षणार्थयोरप्युक्तिरिति ज्ञेयम् । अग्निना रयिमश्नवत् पोषमेव दिवे दिवे स वाजं विश्वचर्षणिरर्वद्भिरस्तुतरुता विप्रेभिरस्तु सनितेत्यादावेवमेवार्थविशेषणस्य[3] भाष्यटीकयोरुक्तेरिति ज्ञेयम् ।

केचित्तु भीमसेनधातुपाठानुसारेणैवमेवानुवादः कृत इति वदन्ति, तन्न, तथात्वे दय दानगतिरक्षणहिंसनेष्विति शब्विकरणात्मनेपदिषु पाठात्तदनुवादः क्रियेत, तस्मादुक्त एव पक्षो युक्त इति । इति शेष इति । शेषत्वेन भाष्ये पूरित इत्यर्थः ।

अशकत् दयमान इत्युक्त शक्तत्वं दातृत्वं च हेतुगर्भविशेषणमित्यभिप्रेत्योभयोर्हेतुत्वं व्यञ्जयन् पूर्वोक्तक्रियापदेनान्वयं दर्शयति अतश्चेति । तत्र प्राप्तिसम्पादने शक्तत्वात् दातृत्वाच्च तमिन्द्रमीमह इत्यन्वयो बोध्य इति भावः । उभयोरपि हेतुत्वप्रदर्शनायैव किञ्चेति समुच्चायक-

---

१. दत्तं - क । २. प्रयच्छति - क । ३. विशेषस्य - क

त्वेनोक्तमिति ज्ञेयम् । अतश्चेति चशब्दस्तु सखित्वादिप्रापकत्वसमुच्चायक इति ज्ञेयम् ॥ ९६ ॥

**मंत्रः – ९७**

(अ.१, सू.१०, मं.७)

**सुविवृतं सुनिरजमिन्द्र त्वादातमिद्यशः ।**
**गवामप व्रजं वृधि कृणुष्व राधो अद्रिवः ॥**

**पदपाठः**

सुऽविवृतम् । सुनिःऽअजम् । इन्द्र । त्वाऽदातम् ।
इत् । यशः । गवाम् । अप । व्रजम् । वृधि ।
कृणुष्व । राधः । अद्रिऽवः ॥

**भाष्यम्**

**विस्पष्टं सुष्ठ्वकाल्यं च यशस्त्वद्दत्तमेव हि ।**
**गूढं ज्ञानसमूहं त्वं [1]विवृण्वृद्धिं च नः कुरु ।**
**अद्रिरादरणीयत्वात् प्राणस्तद्वर्तकोऽद्रिवाः ।**
**हरिः शक्रस्तथाऽद्रीणां छेदनाद्धारणादपि ॥ ९७ ॥**

**टीका**

हे इन्द्र ! त्वादातमित् त्वद्दत्तमेव । सर्वे विधयश्छन्दसि विकल्प्यन्त इति दोदद्धेरित्येष विधिर्न भवति । यद्वा दापोदैपोवैतद्रूपम् । अनेकार्थत्वाद्धातूनां दत्तमित्युक्तम् । यशः सुविवृतं विस्पष्टं सु सुष्ठु

१. प्रवृण्वृद्धिं – पा० ।

**निरजं अजगतिक्षेपणयोः अन्माल्यं अक्षेप्यं निरो निषेधार्थत्वात् अनपहार्यं च हि यस्मादेवं शुभं त्वदीयं दानं तस्मात्त्वं गवां व्रजं ज्ञानसमूहं स्वरूपभूतमपवृधि विवृणु। विवरणप्रार्थनं चावृतस्यैव सम्भवतीति गूढमित्युक्तम्। नोऽस्माकं राधः ऋद्धिं च कृणुष्व कुरु। अद्रिव इति सम्बुद्ध्यन्तं भगवति व्याख्याति अद्रिरिति। आङ्पूर्वाद्दरतेः कर्मणि किः। आङश्च ह्रस्वत्वम्। अद्रिशब्दे कर्मण्युपपदेऽन्तर्णीतण्यर्थाद्द्रुतेरसुन् डिच्च। भाष्ये तु क्वचिददद्रिवेति पाठः। तत्र छान्दसस्सकारलोपः। इन्द्रे व्याख्याति शक्र इति। छेदनाद्दारणादपीत्यर्थद्वयम्। अद्रिशब्दोपपदाद्द्रुश्वतेरन्तर्णीतण्यर्थाद्द्रुञो वाऽसुन् डिच्चेति॥ ९७॥**

**टिप्पणी**

ऋचि त्वादातमिदित्यत्र युष्मच्छब्दमपर्यन्तस्य प्रत्ययोत्तरपदयोश्चेति त्वादेशे विभक्तिपरत्वाभावेन युष्मदस्मदोरनादेश इत्यात्वस्याप्राप्तेः युष्मदो दकारस्य छान्दसत्वेनाकारादेशे त्वा इति रूपसिद्धिः। इच्छब्दश्च एवार्थक इत्यभिप्रेत्य तदनूद्य भाष्यपदेन योजनामाह **त्वा दातमित् त्वदत्तमेवेति**। ननु दाधाघ्वदापिति सूत्रे दारूपश्चत्वारो धातवो धारूपौ द्वौ धातू घुसंज्ञा भवन्ति दाप् दैपौ धातू वर्जयित्वेति डुदाञ् दाने, दोऽवखण्डने, देङ् पालने, डुधाञ् धारणपोषणयोः, धेट् पाने इत्येतेषां धातूनां घुसंज्ञाविधानात् दो देङ् धेटामपि आदेच उपदेशेऽशितीति कृतात्वानां दारूपधारूपत्वात् दो दद्घोरिति सूत्रे घुसंज्ञकस्य दा इत्येतस्य दद इत्येतस्य दद् इत्ययमादेशो भवति तकारादौ किति प्रत्यये परतः दत्तं दत्तवान् दत्तः इत्यादिसूत्रोदाहरणानां वृत्त्यादावुक्तत्वात्।

तथा च प्रकृते डुधाञ् दान इति धातोर्वा दाण दान इति धातोर्वा क्तप्रत्यये तस्मिन् परतः धातोर्ददित्यादेशे सति दत्तशब्दस्य निष्पन्नत्वेन ऋचि दत्तमिति निर्देशः स्यात्, कथं दातमिति निर्देश इत्यत आह **सर्वे विधय इति** । दो दद्घोरिति सूत्रे दथिति थान्तोऽदेशोऽयं न तु तान्तो दान्तो धान्तश्च । तान्ते दोषो दीर्घत्वम्, दान्ते दोषो निष्ठावत्वम् धान्ते दोषो धत्वप्राप्तिः । धान्त दोषस्थान्त इत्यादिवृत्त्यादावुक्ता चर्चा तु विजातीयत्वान्न प्रपञ्च्यते । तथा च धकारस्य जश्त्वेन दकारे खरि चेति चर्त्वे दत्तमिति रूपसिद्धिरिति ज्ञेयम् । अत एव टीकायामेष विधिरिति सामान्येनोक्तमिति ज्ञेयम् ।

**यद्वेति** । अदाबिति दाप्दैपोर्घुसंज्ञानिषेधेन दापो वा दैपो वा धातोर्क्तप्रत्यये लशक्वतद्धित इति प्रत्ययककारलोपे हलन्त्यमिति धातु-पकारयोर्लोपे दैप आदेच उपदेशेऽशित्यात्वे दातमिति रूपसिद्धिरिति भावः ।

ननु दाप् लवने दैप् शोधन इति दाप् दैपोर्लवनशोधनार्थकतया धातुगणे पाठात् दो दद्घोरिति सूत्रे वृत्त्यादौ घोरिति किम् ? दान्तम्, अव-दातम् मुखमिति दाप्दैपोर्लवनशोधनार्थकतया प्रत्युदाहृतत्वाच्च कथं भाष्ये दत्तमिति दानार्थकतया व्याख्यानं क्रियत इत्यत आह **अनेकार्थत्वा-दिति** । 'प्रयोगतोऽनुगन्तव्या अनेकार्था हि धातव' इति शाब्दिकैरुक्तत्वात् प्रकृते दाप्दैपोर्दानार्थकत्वमित्यभिप्रेत्य भाष्ये दत्तमित्युक्तमिति भावः ।

**विस्पष्टमिति** । जगद्विख्यातमित्यर्थः । निरजमित्यस्याकाल्यमिति भाष्यपदेनैकार्थत्वप्रदर्शनायाजशब्दे प्रकृतिभूतधातुं पठति **अज गति क्षेप-णयोरिति** । गति क्षेपणरूपार्थद्वयप्रतिपादकादज धातोः कर्मण्यौणादि-

काकाप्रत्यये वा घञर्थे कविधानमिति कप्रत्यये वा सति ककारलोपे अजेर्व्यघञपोरिति वाभावस्य छान्दसत्वेनाप्राप्तौ अजशब्दनिष्पत्तिरिति भावः ।

अकल्यमिति । कल विक्षेप इति चुरादिगणे पठितात् कलधातोर्णिचि अत उपधाया इत्युपधावृद्धौ अचो यदिति यत्प्रत्यये णेरनिटीति णिलोपे काल्यशब्दनिष्पत्तौ, तस्य नञ्समासे अकाल्यमिति रूपसिद्धिरिति भावः । तस्य प्रतिपदमाह अक्षेप्यमिति । अनिरस्यमित्यर्थः । क्षिप् निरसन इति धातोः पोरदुपधादिति यत्प्रत्यय उपधागुणे नञ्समास अक्षेप्यमिति ज्ञेयम् । ननु निरजपदे नञोऽभावात् कथं निषेधार्थलाभ लाभ इत्यत आह निर इति । निर्निश्चयनिषेधयोरित्यमरोक्तेस्तत्र निरो निषेधार्थकत्वमिति भावः । अकाल्यनिरजपदलब्धपर्यवसितार्थं दर्शयति अनपहार्यं चेति । यद्वा काल्यमित्यत्र काल्यशब्दस्य कल विक्षेप इति धातोर्निष्पन्नत्वमुपेत्य तदनुसारेणाजधातोः क्षेपणार्थपरतयाक्षेप्यमिति पूर्वं व्याख्यातम् । इदानीं तु कलगताविति चुरादिगण एव पठितात् गत्यर्थककलधातोर्निष्पन्नत्वं काल्यशब्दस्येत्युपेत्य तदनुसारेणाजधातोः गत्यर्थत्वमादाय ईश्वरदत्तमन्यत्र न गच्छत्यन्यैर्नापह्रियत इत्यर्थपरतया योजनान्तरमाह अनपहार्यं चेति । अत एवाज गतिक्षेपणयोरित्यर्थद्वयस्यापि ग्रहणं कृतमिति ज्ञेयम् । चशब्दः सुविवृत्तत्वसमुच्चायक इति ज्ञेयम् ।

ऋचि पूर्वोत्तरार्धयोर्हेतुहेतुमद्भावप्रदर्शनाय भाष्ये हिशब्दः प्रयुक्त इत्यभिप्रेत्य योजनामाह हि यस्मादित्यादिना । भाव्ये गूढमिति पदं कस्य व्याख्यानम्, ऋचि व्याख्येयपदादर्शनादित्याशङ्क्य गूढपदमर्थात्प्राप्तं न ऋक्पदविवरणपरमित्याह विवरणप्रार्थनं चेति । आङ्पूर्वाद्दृरतेरिति ।

दृङ् आदर इति धातोरित्यर्थः । तथा चाङ्पूर्वाद्दरतेः कर्मकारकेऽर्थे उणादयो बहुलमिति किप्रत्यये ककारलोपे धातु ऋकारस्य क्ङिति चेति गुणनिषेधे यमादेशो उपपदस्याङः छान्दसह्रस्वत्वे अद्रिशब्दनिष्पत्तिरिति भावः । वृत इति । वृतु वर्तन इति धातोरित्यर्थः । तथा चाद्रिं मुख्यप्राणं वर्तयति प्रवर्तयतीत्यर्थे वृत असुन्प्रत्यये नकारस्योकारस्य च लोपे प्रत्ययस्य डिद्वद्भावेन डित्यभस्यापीति टिलोपे अत्वसन्तस्य चाधतोरिति दीर्घे अद्रिवा इति निष्पत्तौ तस्य सम्बुद्धौ अद्रिव इति रूपमिति भावः ।

वृश्चतेरिति । ओ वृश्चू छेदन इति धातोरित्यर्थः । असुन् ङिच्चेत्यनेनान्वयः । तथा च पर्वतवाचितया प्रसिद्धाद्रिशब्दोपपदात् वृश्चतेरसुन् प्रत्यये धातोष्टिलोपे धातुरेफस्य छान्दसलोपे वा कसुन्प्रत्ययाश्रयणेन ग्रहिज्येत्यादिना रेफस्य कित्वनिमित्तकसम्प्रसारणे सति टिलोपो वा द्रष्टव्यः । तथा चाद्रीन् पर्वतान् पश्यतीत्यद्रिवाः । तस्य सम्बुद्धौ हे अद्रिव इति रूपमिति भावः । अन्तर्णीतण्यर्थात् वृञो वेति । वृञ् वरण इति धातोरित्यर्थः । तथा चाद्रीन् पर्वतान् वारयतीत्यर्थेऽद्रिशब्दोपपदात् वृञ् असुप्रत्यये टिलोपादिकार्ये च सति अद्रिव इति रूपमिति भावः । ॥ ९७ ॥

मंत्रः – ९८

(अ.१, सू.१०, मं.८)

**नहि त्वा रोदसी उभे ऋघायमाणमिन्वतः ।**
**जेषः स्वर्वतीरपः सं गा अस्मभ्यं धूनुहि ॥**

पदपाठः

नहि । त्वा । रोदंसी इतिं । उभे इतिं ।
ऋघायमाणम् । इन्वंतः । जेषः । स्वंःऽवतीः ।
अपः । सम् । गाः । अस्मभ्यंम् । धूनुहि ॥

भाष्यम्

**न त्वामृघायमाणं हि वर्धमानं तु रोदसी ।**
**सम्प्राप्नुतः [१]श्रीभूमी च सहिते [२]वाऽप्रसादतः ।**
**अपः प्रजाः सुखवतीरजयस्त्वद्वशत्वतः ।**
**ज्ञानानि सन्धूनुहि च प्रापयोच्चा अपि स्वयम् ॥ ९८ ॥**

टीका

हे इन्द्र ! ऋघायमाणं कण्ड्वादिः वर्धमानं सर्वगतं त्वा त्वां रोदसी द्यावापृथिव्यौ तदभिमानिन्यौ श्रीभूमी अपि उभे सहिते वा नहीन्वतो नैव सम्प्राप्नुतो हि। व्याप्तिकर्मसु पाठात्। तयोरपि सर्वगतत्वात् कथमेतदित्यत आह अप्रसादत इति । त्वत्प्रसादेन विना । किञ्च। त्वं स्वर्वतीः सुखवतीः अपः प्रजाः स्वर्गिणो मुक्ताश्च जेषः अजयः। लङर्थे लेट्। कथं त्वद्वशत्वतस्तासाम्। एवंविधश्च त्वं स्वयमस्मभ्यं गाः ज्ञानानि सन्धूनुहि कम्पय । गमय । अस्मान्प्रति प्रापय । चशब्दात्प्रसिद्धा गाश्च । समित्येतद्द्वयं विशेषणतया च व्याख्याति उच्चा अपीति । गा इत्येतदपेक्षया स्त्रीलिङ्गत्वम्। यथायोगं भगवतीन्द्रे च व्याख्यानम् ॥ ९८ ॥

---

१. श्रीर्भूमी – पा० ।     २. चाप्रसादतः – पा० ।

## टिप्पणी

**कण्ड्वादिरिति** । वृध् वृद्धाविति वृद्ध्यर्थात् वृध् धातोः कण्ड्वादिभ्यो यगिति यक्प्रत्यये तदन्तात्ताच्छील्येत्यादिना [१]चानशप्रत्ययादिकार्ये सति ऋधायमाणेति रूपसिद्धिरिति भावः । यद्यपि ऋध् धातुः कण्ड्वादिषु न पठ्यते, तथापि वैदिकप्रयोगबलादयमपि पठनीय इति भावः ।

**व्याप्तिकर्मस्विति** । व्याप्तिक्रियाकेषु धातुष्विति धातोः पाठादित्यर्थः । तथा च इवि व्याप्ताविति धातोर्लटि प्रथमपुरुषद्विवचने कर्तरि शबिति शप्प्रत्यये इदितो नुम्धातोरिति नुमागमे इन्वत इति रूपमिति भावः ।

ननु भाष्येऽप्रसाद इति कस्य व्याख्यानम्, ऋचि व्याख्येयपदादर्शनादित्याशङ्क्य नेदम् ऋक्पदविवरणपरम्, किन्तु न हीन्वत इत्यनेनाक्षिप्ततया प्राप्तमित्यभिप्रेत्याक्षेपप्रदर्शनपूर्वकं योजनामाह **तयोरपीत्यादिना** । तयोः क्षीभूम्योरपीत्यर्थः । चतुर्थस्य द्वितीयपादे 'समना चासृत्युपक्रमादमतत्वं चानुपोष्य' इति श्रीमद्ब्रह्मसूत्रभाष्यादौ समानदेशकालाभ्यां व्याप्ता समना परमपुरुषो विष्णुः श्रियः सा समना इत्यर्थोक्तेः । तत्रैव भाष्ये तावनुसृत्यनुपक्रमौ[२] प्रकृतिश्च परमश्च द्वावेतौ नित्यमुक्तौ नित्यौ च सर्वगतौ चेतौ ज्ञात्वा विमुच्यत इति बृहच्छ्रुत्युदाहरणात् । 'तत्रैव नोपमर्दनातः' इति गुणसूत्रे 'देशतः कालतश्चैव समा प्रकृतिरीश्वरे' इत्यादिभविष्यत्पर्ववचनोदाहरणाच्च ब्रह्मसूत्रश्रुत्यादिप्रमाणेषु श्रीभूम्योरपि देशकालाभ्यां व्याप्तत्वोक्तेः न हीन्वतव्याप्त्यभावकथनं कथमिति[३] शङ्काभिप्रायो ज्ञेयः ।

---

१. शानच्प्रत्ययादिकार्ये - क । २. द्वौ वाव श्रुत्यनुपक्रमौ - क ।
३. न हीन्वत इति व्याप्त्यभावः कथमिति - क ।

त्वत्प्रसादेन विनेति। सा चोपास्ते सदा हरिम्, प्रकृतेः प्राकृतस्यापि ये गुणास्ते गुणा विष्णुना नियता इति तत्रैव भाष्ये उदाहृतवचनेषु श्रियः व्याप्त्यादिगुणानां भगवत्प्रसादनियतत्वोक्तेरिति भावः । सङ्गा इत्यत्र गोशब्दस्य ज्ञानार्थकत्वं समित्युपसर्गस्य व्यवहिताश्चेति क्रियापदेनान्वय इति प्रदर्शनाय भाष्ये ज्ञानानि सन्धूनहीत्युक्त्यभिप्रेत्य योजनामाह गाः ज्ञानानि सन्धूनहीति । धूञ् कम्पन इति धातोः लोटि तस्य मध्यमपुरुषैकवचने सिपि तस्य हीत्यादेशे स्वादित्वेन श्नुप्रत्यये उतश्च प्रत्ययादसंयोगपूर्वादिति प्राप्तस्य हेर्लुकः छन्दसि वेति वक्तव्यमिति विकल्पत्वेनाभावे धूनुहीति रूपम् ।

तस्य प्रापयेति णिजन्तपदेन भाष्यव्याख्यानादन्तर्भावितण्यर्थत्वमित्यभिप्रेत्य तस्य प्रतिपादमाह कम्पयेति। कपि कम्पायामिति धातोर्णिचि लोटि मध्यमपुरुषैकवचने इदित्वान्नुमिकम्पयेति रूपमिति ज्ञेयम् । तस्य पर्यवसितार्थकथनपूर्वकं भाष्यपदयोजनामाह **गमयास्मान्प्रापयेति** ।

प्रापयेत्यस्य णिजन्तत्वेन गतिबुद्धिप्रत्यवसानार्थेत्यादिना द्विकर्मकत्वात् कर्मकारकपूरकत्वेनास्मभ्यमित्येतत् द्वितीयान्ततयान्वेतीत्यभिप्रेत्य टीकायामस्मात्प्रतीति योजितमिति ध्येयम् । एतेन ऋच्यस्मभ्यमिति चतुर्थीव्यत्ययेन कर्मणीति सूचितमिति ज्ञेयम् ।

चशब्दादिति । ज्ञानानि सन्धुनुहि चेति भाष्ये प्रयुक्तशब्दैरित्यर्थः । तथा च गोशब्दार्थतयोपात्तज्ञानेन सह प्रसिद्धगोशब्दार्थपशुसमुच्चायकतया चशब्दः प्रयुक्त इति भावः । **समित्येत इति** । अस्मिन्पक्षे समित्यस्य सङ्गा इति स्वस्थान एवान्वय इति ज्ञेयम् । गवामिति । गोशब्दार्थतयोपात्तानां ज्ञानानां प्रसिद्धपशूनां चेत्यर्थः ।

नन्वेवं ज्ञानविशेषणत्वे उच्चा इति कथं स्त्रीलिङ्गनिर्देश इत्यत आह गा इत्येतदपेक्षयेति । गोशब्दस्य स्त्रीलिङ्गत्वेन तद्विशेषभूतेऽप्युच्चपदे स्त्रीलिङ्गत्वमिति भावः । तथाच उच्चा गा उत्कृष्टानि ज्ञानानि, उत्कृष्टाः गाः प्रसिद्धपशूंश्च सन्धुनुहीत्यर्थो ज्ञेय इति भावः । तथा योगमिति[1] उक्तरीत्या भगवति व्याख्यानं स्पष्टम् । प्रसिद्धेन्द्र तु रोदसी श्रीभूमी त्वां नेहीन्वत तत्कृतोपासनां विना त्वय्यनुग्रहं कर्तुं न प्राप्नुत इत्यर्थः ।

'श्रीर्यत्पदाम्बुजरजश्चकमेऽतुलस्य लब्ध्वापि वक्षसि पदं किल भृत्य-जुष्टम् । यस्यां स्ववीक्षणकृतेऽन्यसुरप्रयासस्तद्वद्वयं च तव पादरजः प्रपन्नाः ॥' इत्यादि भागवताद्युक्तप्रमाणेषु, 'अहं रुद्रेभिर्वसुभिश्चरामी'त्युप-क्रम्य 'परोदिवा पर एना पृथिवी एतावती महिना सम्बभूवेत्यन्तमम्भ्रणीसूक्ते, तथा श्रीसूक्तादौ च सर्वदेवानां लक्ष्म्यधीनत्वस्य प्रमितत्वादिति ज्ञेयम् ।

यद्वा रोदसी द्यावापृथिव्योरवान्तराभिमानिन्यौ देवते ऋगायमाणं त्वां न हीन्वतः त्वदभिवृद्धये न पर्याप्त इत्यर्थः । जेष्टः स्वर्वतीत्यादेस्तु पूर्वव-देवार्थो ज्ञेयः । प्रसिद्धेन्द्रस्यापि स्वावरान् स्वर्गस्थान् प्रति नियामकत्वात् । तथा च मुक्तिदशायां स्वावरमुक्तिनियामकत्वात् ज्ञानादिदाने सामर्थ्योपेत-त्वाच्चेन्द्रेऽपि व्याख्यानमुपपन्नमिति । अत्र पदानामपेक्षितप्रक्रियाविशेषस्तु ऋगर्थमञ्जर्यां सम्यगुपपादितो द्रष्टव्यः ॥ ९८ ॥

**मंत्रः – ९९**

(अ.१, सू.१०, मं.९)

**आश्रु॑त्कर्ण श्रु॒धी हवं॒ नू चि॑द्दधिष्व मे॒ गिरः॑ ।**
**इन्द्र॒ स्तोम॑मि॒मं मम॑ कृ॒ष्वा यु॒जश्चि॒दन्त॑रम् ॥**

१. यथा योगमिति - क ।

पदपाठः

आश्रुत्ऽकर्ण । श्रुधि । हवम् । नु । चित् ।
दधिष्व । मे । गिरः । इन्द्र । स्तोमम् ।
इमम् । मम । कृष्व । युजः । चित् । अन्तरम् ॥

भाष्यम्

**बहुश्रवणकर्णास्मदाह्वानं शृणु चादरात् ।**
**अद्यैव च गिरो धेहि मयि स्तोमं च मत्कृतम् ।**
**प्रियं योगादपि कुरु ॥ ९९ ॥**

टीका

हे आश्रुत्कर्ण ! आसमन्ताच्छृणुत इत्याश्रुतौ कर्णौ यस्य बहुश्रवणकर्णेति यावत् । त्वं हवमस्मदाह्वानम् । श्रुधि शृणु । आश्रुत्कर्णश्चेत्स्वयमेव श्रोष्यति किं प्रार्थनेनेत्यत उक्तम् आदरादिति । नुचित् अद्यैव मे मयि गिरो वेदरूपाः दधिष्व धेहि वेदविदं मां कुरु । हे इन्द्र ! इमं मम स्तोमं मत्कृतं स्तुतिविशेषं युजश्चिद्योगादपि समाधिलक्षणादन्तरं सन्निकृष्टं प्रियमिति यावत् । कृष्व कुरु चशब्दा मिथः समुच्चयार्थाः ॥ ९९ ॥

टिप्पणी

आ इत्यस्यार्थमाह आ समन्तादिति । बहुश्रवणकर्णेति । सार्वकालिकसार्वदेशिकस्वर्गशब्दश्रवणशक्तियुक्तकर्णोपेतेत्यर्थः । चशब्दा इति । शृणु चेति अद्यैव चेति स्तोमं चेति भाष्ये प्रयुक्तास्त्रयश्चशब्दा श्रधि दधिष्व कृष्व इत्युक्तक्रियाणां परस्परसमुच्चयार्था इत्यर्थः ॥ ९९ ॥

मंत्रः – १००

(अ.१, सू.१०, मं.१०)

विद्मा हि त्वा वृषन्तमं वाजेषु हवनश्रुतम् ।
वृषन्तमस्य हूमह ऊतिं सहस्रसातमाम् ॥

पदपाठः

विद्म । हि । त्वा । वृषन्ऽतमम् । वाजेषु ।
हवनऽश्रुतम् । वृषन्ऽतमस्य । हूमहे । ऊतिम् ।
सहस्रऽसातमाम् ॥

भाष्यम्

विद्म त्वां शक्तिमत्तमम् ।
श्रोतारं युत्सु चाह्वानमाह्वयामस्तवावनम् ।
बहुलाभोत्तममिति स्थानान्तरगते ऋचौ ।
दृष्ट्वेन्द्रं यज्ञगं [1]याभ्यां मधुच्छन्दाः समस्तुवत् ।
आतून इति तेनैव न विरुद्धा शतर्चिता ॥ १०० ॥

टीका

हि यस्मात् वृषन्तमं वृषः शक्तिमान् अतिशयेन वृषो वृषन्तमः । छान्दसो नकारागमः । नकारान्ताद्वा तमप् । तत्र नलोपाभावश्छान्दसः । तं वृषन्तमं शक्तिमत्तमम् । वाजेषु युद्धेषु हवनश्रुतं तत्कालभक्ताह्वानस्य श्रोतारं च त्वा त्वां विद्म विद्मः । तस्माद्वृषन्त-

१. ताभ्यां – पा० ।

पदपाठः

आश्रुत्ऽकर्ण । श्रुधि । हवम् । नु । चित् ।
दधिष्व । मे । गिरः । इन्द्र । स्तोमम् ।
इमम् । मम । कृष्व । युजः । चित् । अन्तरम् ॥

भाष्यम्

**बहुश्रवणकर्णास्मदाह्वानं श्रुणु चादरात् ।**
**अद्यैव च गिरो धेहि मयि स्तोमं च मत्कृतम् ।**
**प्रियं योगादपि कुरु ॥ ९९ ॥**

टीका

हे आश्रुत्कर्ण ! आसमन्ताच्छृणुत इत्याश्रुतौ कर्णौ यस्य बहुश्रवणकर्णेति यावत् । त्वं हवमस्मदाह्वानम् । श्रुधि शृणु । आश्रुत्कर्णश्चेत्स्वयमेव श्रोष्यति किं प्रार्थनेनेत्यत उक्तम् आदरादिति । नुचित् अद्यैव मे मयि गिरो वेदरूपाः दधिष्व धेहि वेदविदं मां कुरु । हे इन्द्र ! इमं मम स्तोमं मत्कृतं स्तुतिविशेषं युजश्चिद्योगादपि समाधिलक्षणादन्तरं सन्निकृष्टं प्रियमिति यावत् । कृष्व कुरु चशब्दा मिथः समुच्चयार्थाः ॥ ९९ ॥

टिप्पणी

आ इत्यस्यार्थमाह आ समन्तादिति । बहुश्रवणकर्णेति । सार्वकालिकसार्वदेशिकस्वर्गशब्दश्रवणशक्तियुक्तकर्णोपेतेत्यर्थः । चशब्दा इति । श्रुणु चेति अद्यैव चेति स्तोमं चेति भाष्ये प्रयुक्तास्त्रयश्चशब्दा श्रधि दधिष्व कृष्व इत्युक्तक्रियाणां परस्परसमुच्चयार्था इत्यर्थः ॥ ९९ ॥

मंत्रः – १००

(अ.१, सू.१०, मं.१०)

विद्मा हि त्वा वृषन्तमं वाजेषु हवनश्रुतम् ।
वृषन्तमस्य हूमह ऊतिं सहस्रसातमाम् ॥

पदपाठः

विद्म । हि । त्वा । वृषन्ऽतमम् । वाजेषु ।
हवनऽश्रुतम् । वृषन्ऽतमस्य । हूमहे । ऊतिम् ।
सहस्रऽसातमाम् ॥

भाष्यम्

विद्म त्वां शक्तिमत्तमम् ।
श्रोतारं युत्सु चाह्वानमाह्वयामस्तवावनम् ।
बहुलाभोत्तममिति स्थानान्तरगते ऋचौ ।
दृष्ट्वेन्द्रं यज्ञगं [1]याभ्यां मधुच्छन्दाः समस्तुवत् ।
आतून इति तेनैव न विरुद्धा शतर्चिता ॥ १०० ॥

टीका

हि यस्मात् वृषन्तमं वृषः शक्तिमान् अतिशयेन वृषो वृषन्तमः । छान्दसो नकारागमः । नकारान्ताद्वा तमप् । तत्र नलोपाभावश्छान्दसः । तं वृषन्तमं शक्तिमत्तमम् । वाजेषु युद्धेषु हवनश्रुतं तत्कालभक्ताह्वानस्य श्रोतारं च त्वा त्वां विद्म विद्मः । तस्माद्वृषन्त-

१. ताभ्यां – पा० ।

**मस्य शक्तिमत्तमस्य तव सहस्रसातमामूर्तिं सहस्रं सनोतीति सहस्रसाः। अतिशयेन सहस्रसाः सहस्रसातमा। तां बहुलाभोत्तम-मवनमतिलाभयुक्तां रक्षां हूमहे आह्वयामः। प्रार्थयाम इति यावत्। श्रोतारमिति तृन्। तेन द्वितीयोपपत्तिः। ऋक्शतसमास्यर्थ इति शब्दः। नन्वित उत्तरे अपि ऋचौ मधुच्छन्दसा दृष्टे। ऋष्यन्तरे प्रमाणाभावात्। तत्कथं तस्य शतर्चित्वमित्यत आह स्थानान्तरेति। येनकारणेनातून इत्यादिके ऋचौ स्थानान्तरगते आनुपूर्व्यन्तरस्थे तेन कारणेन मधुच्छन्दसः शतर्चिता नैव विरुद्धा। एकानुपूर्वीनिमित्त-त्वात्तस्याः। देशकालावस्थान्तरदृष्टत्वाच्च न विरुद्धे इत्याह दृष्ट्वेति। याभ्यां ते स्थानान्तरगते इति सम्बन्धः॥ १००॥**

**टिप्पणी**

ननु वर्षशब्दात् तमप्प्रत्यये पृषतम इति निर्देशः स्यात् कथं पृषन्तम इति निर्देश इत्यत आह **छान्दसो नकारागम** इति। पृषोदरादीनि यथोपदिष्टमिति सूत्रे 'वर्णागमो वर्णविपर्ययश्च तथापरौ वर्णविकारनाशौ। धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तमि'ति वृत्त्यादावुक्तेरिति ज्ञेयम्। नकारागम इत्यनेन तमपो नुमागमो ग्राह्यः[१]।

अन्यथा वृषशब्दान्त्यस्य नकारागमे नलोपः प्रातिपदिकान्त्यस्येति नलोपप्रसङ्गादिति। न च पूर्वत्रासिद्धमिति लोपं प्रति नकारस्यासिद्धत्वमिति वाच्यम्, नकारागमस्य सपादसप्ताध्याय्यां विहितत्वात् नलोपस्य तु त्रिपाद्यां विहितत्वेन पूर्वत्रासिद्धन्यायस्याप्राप्तेरिति। यद्वा वृषशब्दान्त्यस्य नकारागमेऽपि विधानसामर्थ्याद्वा वक्ष्यमाणरीत्या वा नलोपाभावो द्रष्टव्यः।

---

१. नुमागम इति ज्ञेयम्।

**नकारान्ताद्वेति** । वृषन्शब्दादित्यर्थः । ननु वृषन्शब्दात् तमप्प्रत्यये नलोपः प्रातिपदिकान्तस्येति नकारलोपः कस्मान्न भवतीत्यत आह **तत्र नलोपाभावश्छान्दस इति**। तत्रेत्यस्य वृषन्शब्द इत्यर्थः। वृषन्शब्दात् तमप्प्रत्ययपक्ष इति वार्थः। अयस्मयादीनि छान्दसीति सूत्रेण भसंज्ञायाः प्राप्तत्वेन पदसंज्ञानिमित्तकस्य नलोपस्याभाव इत्यर्थः। तस्मिन् सूत्र आकृतिगणश्चायमिति वृत्यादावुक्तेः। यथोक्तं महाभाष्ये वृध्याह्निके वृद्धि-रादैच्, चुत्वं[1] कस्मान्न भवति, चोः कुः पदस्येति भत्वात्, कथं भसंज्ञा, अयस्मयादीनि छन्दसीति छन्दसीत्युच्यते, नेदं छन्दः, छन्दोवत् सूत्राणि भवन्तीत्यादीति[2]। विद् ज्ञान इति धातोः लडुत्तमपुरुषबहुवचनस्य समः विदो लटो वेति वैकल्पिक म इत्यादेशे विद्म इति रूपमित्यभिप्रेत्य योजनामाह **विद्म विद्म इति**। ननु श्रोतारं युत्सु चाह्वानमित्यत्र भाष्ये श्रोतृशब्दयोगे कर्तृकर्मणोः कृतीति षष्ठीप्राप्तेराह्वानस्येति निर्देशे कर्तव्ये कथमाह्वानमिति द्वितीयान्ततया निर्देशः कृत इत्यत आह **श्रोतारमिति**। **तृन्निति**। तथा च न लोकाव्ययनिष्ठा खलर्थतृनामिति तृन्प्रत्ययान्तयोगे षष्ठीनिषेधात् द्वितीयो-पपत्तिरिति भावः। ताच्छील्यार्थकतृनन्तप्रयोगेण हरेः श्रोतृत्वं स्वाभाविकं न त्वागन्तुकमिति दर्शितमिति ज्ञेयम्।

टीकायामाह्वानस्य श्रोतारमिति षष्ठ्यन्तनिर्देशस्तु श्रोतृशब्दस्य तृज-न्तताश्रयणेनेति ज्ञेयम्।

**ऋक्शतसमाप्त्यर्थ इति**। अग्निमीळ इत्यारभ्य विद्मा हित्वेत्यन्तस्य ऋक्शतस्य व्याख्यानसमाप्तिद्योतकतया भाष्ये बहुलाभोत्तममितीति प्रयुक्त इत्यर्थः। **नन्वित उत्तर इति**। विद्मा हि त्वेत्यस्याः ऋचः उत्तरत्र पठिते आतून इन्द्र, परित्वा गिर्वण इति द्वे ऋचावित्यर्थः।

---

१. कुत्वं - क। २. छन्दवत्सूत्राणि भवन्तीति - क।

तस्येति । मधुच्छन्दस इत्यर्थः । शतर्चत्वमिति । शत ऋचः यस्मिन् समुदाये स शतर्चः ऋक्पूरब्धूरिति ऋक्शब्दस्य समासान्ताप्रत्ययः शतर्च अस्यास्तीति शतर्ची तस्य भावः शतर्चित्वमिति व्युत्पत्तिर्द्रष्टव्या । एकानुपूर्वीति । एकानुपूर्वीगतऋक्शतदर्शननिमित्तत्वादित्यर्थः । तस्या इति । शतर्चितया इत्यर्थः । न विरुद्धेति । शतर्चितेत्यन्वेति याभ्यामिति । याभ्याम् ऋग्भ्याम् इन्द्रम् समस्तुवतु ते ऋचौ स्थानान्तरगते इति सम्बन्ध इत्यर्थः । ष्टुञ् स्तुताविति धातोर्लुङि छान्दसत्वेन च्लेरङादेशो वा लङि छान्दसव्यत्ययेन शविकरणे सत्युवङादेशो अस्तुवदिति रूपमिति ज्ञेयम् ॥ १०० ॥

मंत्रः – १०१

(अ.१, सू.१०, मं.११)

**आ तू न इन्द्र कौशिक मन्दसानः सुतं पिब ।**
**नव्यमायुः प्र सू तिर कृधी सहस्रसामृषिम् ॥**

पदपाठः

**आ । तु । नः । इन्द्र । कौशिक । मन्दसानः ।**
**सुतम् । पिब । नव्यम् । आयुः । प्र । सु ।**
**तिर । कृधि । सहस्रऽसाम् । ऋषिम् ॥**

भाष्यम्

**मात्रा कुशैर्गृहीतत्वाज्जन्मन्यासीत् स कौशिकः ।**
**[1]गाधित्वाद्वा हिरण्याण्डकोशस्थत्वाद्धरिस्तथा ।**

---

१. गाधित्वात् – पा० ।

**मन्दसानो नित्यसुखी स्तुत्यमायुश्च नस्तिर ।**
**ऋषिं सहस्रलाभं मां कुरु च ॥ १०१ ॥**

टीका

अदित्या जन्मनि जन्मसमये । स इन्द्रः गाधित्वाद्वा कौशिकः । कुशिकापत्यत्वात् गाधिनः हरिस्तथा कौशिकः । हिरण्यग्रहणं ब्रह्माण्ड-द्योतनार्थं कुशशब्दात् गृहीतार्थे कोशशब्दाद्भवार्थे वा ठक् । मन्दो मदः आधिक्येऽधिकं नित्यसुखम् । तस्य सानो लाभो यस्यासौ मन्दसानो नित्यसुखी ।

यद्वा सानः सम्भजनम् । संशब्देन नित्यत्वं लभ्यते । हे इन्द्र ! कौशिक ! मन्दसानस्त्वं नोऽस्माकं सुतं सोमं तु क्षिप्रमापिब । नव्यं णुस्तुतौ । स्तुत्यमायुश्च नः प्रसूतिर । अतिप्रकर्षेण देहि । मां सहस्रसां सहस्रलाभयुक्तमृषिं ज्ञानिनं च कृधि कुरु ॥ १०१ ॥

टिप्पणी

गाधित्वाद्वेति । इन्द्रस्य गाधित्वेन जातत्वं स्पष्टमुक्त श्रीमन्महा-भारततात्पर्यनिर्णये चतुर्थाध्याये 'ततः सुवंशे शशिनः प्रसूतो गाधीति शक्रस्तनुजोऽस्य चासीदि'ति । तथा विष्णुपुराणे चतुर्थांशे सप्तमाध्याये आत्मनैवास्येन्द्रः पुत्रत्वमगच्छत्[1] स गाधिनामा कौशिकोऽभवदित्युक्तमिति ज्ञेयम् । नन्विन्द्रस्य गाधिनामकतया जातत्वेऽपि कौशिकत्वं कथमित्यत आह कुशिकापत्यत्वाद् गाधिन इति । यथा च कुशिकस्यापत्यार्थे कुशिकशब्दात् तस्यापत्यमिति सूत्रेण अणप्रत्यये णकारलोपे यस्येति च

१. अगमत् - क ।

तस्येति । मधुच्छन्दस इत्यर्थः । शतर्चत्वमिति । शत ऋचः यस्मिन् समुदाये स शतर्चः ऋक्पूरब्धूरिति ऋक्शब्दस्य समासान्ताप्रत्ययः शतर्च अस्यास्तीति शतर्ची तस्य भावः शतर्चित्वमिति व्युत्पत्तिर्द्रष्टव्या । एकानुपूर्वीति । एकानुपूर्वीगतऋक्शतदर्शननिमित्तत्वादित्यर्थः । तस्या इति । शतर्चितया इत्यर्थः । न विरुद्धेति । शतर्चितेत्यन्वेति याभ्यामिति । याभ्याम् ऋग्भ्याम् इन्द्रम् समस्तुवतु ते ऋचौ स्थानान्तरगते इति सम्बन्ध इत्यर्थः । ष्टुञ् स्तुताविति धातोर्लुङि छान्दसत्वेन च्लेरङादेशो वा लङि छान्दसव्यत्ययेन शविकरणे सत्युवङादेशो अस्तुवदिति रूपमिति ज्ञेयम् ॥ १०० ॥

मंत्रः – १०१

(अ.१, सू.१०, मं.११)

**आ तू नं इन्द्र कौशिक मन्दसानः सुतं पिब ।**
**नव्यमायुः प्र सू तिर कृधी संहस्रसामृषिम् ॥**

पदपाठः

**आ । तु । नः । इन्द्र । कौशिक । मन्दसानः ।**
**सुतम् । पिब । नव्यंम् । आयुः । प्र । सु ।**
**तिर । कृधि । सहस्रऽसाम् । ऋषिम् ॥**

भाष्यम्

**मात्रा कुशैर्गृहीतत्वाज्जन्मन्यासीत् स कौशिकः ।**
**[1]गाधित्वाद्वा हिरण्याण्डकोशस्थत्वाद्धरिस्तथा ।**

१. गाथित्वात् – पा० ।

**मन्दसानो नित्यसुखी स्तुत्यमायुश्च नस्तिर ।**
**ऋषिं सहस्रलाभं मां कुरु च ॥ १०१ ॥**

टीका

अदित्या जन्मनि जन्मसमये । स इन्द्रः गाधित्वाद्वा कौशिकः । कुशिकापत्यत्वात् गाधिनः हरिस्तथा कौशिकः । हिरण्यग्रहणं ब्रह्माण्ड-द्योतनार्थं कुशशब्दात् गृहीतार्थे कोशशब्दाद्भवार्थे वा ठक् । मन्दो मदः आधिक्येऽधिकं नित्यसुखम् । तस्य सानो लाभो यस्यासौ मन्दसानो नित्यसुखी ।

यद्वा सानः सम्भजनम् । संशब्देन नित्यत्वं लभ्यते । हे इन्द्र ! कौशिक ! मन्दसानस्त्वं नोऽस्माकं सुतं सोमं तु क्षिप्रमापिब । नव्यं णुस्तुतौ । स्तुत्यमायुश्च नः प्रसूतिर । अतिप्रकर्षेण देहि । मां सहस्रसां सहस्रलाभयुक्तमृषिं ज्ञानिनं च कृधि कुरु ॥ १०१ ॥

टिप्पणी

गाधित्वाद्वेति । इन्द्रस्य गाधित्वेन जातत्वं स्पष्टमुक्त श्रीमन्महा-भारततात्पर्यनिर्णये चतुर्थाध्याये 'ततः सुवंशे शशिनः प्रसूतो गाधीति शक्रस्तनुजोऽस्य चासीदि'ति । तथा विष्णुपुराणे चतुर्थांशे सप्तमाध्याये आत्मनैवास्येन्द्रः पुत्रत्वमगच्छत्[१] स गाधिनामा कौशिकोऽभवदित्युक्तमिति ज्ञेयम् । नन्विन्द्रस्य गाधिनामकतया जातत्वेऽपि कौशिकत्वं कथमित्यत आह कुशिकापत्यत्वाद् गाधिन इति । यथा च कुशिकस्यापत्यार्थे कुशिकशब्दात् तस्यापत्यमिति सूत्रेण अण्प्रत्यये णकारलोपे यस्येति च

---

१. अगमत् - क ।

इति सूत्रेण कुशिकशब्दान्त्याकारस्य लोपे आदिवृद्धौ कौशिक इति प्रातिपदिकनिष्पत्तिरिति भावः । यद्यपि कुशिकशब्दस्याकारान्तत्वेनात इञिती ञ्प्रत्ययस्य प्राप्तिः, तथापि ऋष्यन्धकवृष्णि कुरुभ्यश्चेति प्रतिप्रसवादण्प्रत्यय एवेति ज्ञेयम् ।

अत्र कुशिकपदेन कुशिकवंशजः कुशपुत्रः कुशनाभो ग्राह्यः । यदवः कुरव इत्यादौ कूटस्थनाम्ना तद्वंश्यानां व्यवहारदर्शनादिति ज्ञेयम् । विस्तरेणोपपादितश्च गाधिवंशः श्रीमद्भागवते नवमस्कन्धे त्रयोदशाध्याये 'ततः कुशः कुशस्यापि कुशाम्बुस्तनयो वसुः[१] कुशनाभश्च चत्वारो गाधिरासीत् कुशाम्बुजः । तस्य सत्यवतीं कन्यामृचीकोऽयाचत द्विजः । नरं विसदृशं मत्वा गाधिर्भार्गवमब्रवीत् । एकतः श्यामकर्णानां हयानां चन्द्रवर्चसाम् । सहस्रं दीयतां शुल्कं कन्यायाः कुशिकान्वयः ॥' इति । कुशिकानामन्वयो यस्य सः कुशिकान्वयः गाधिरब्रवीदिति पूर्वेणान्वयः । कुशाम्बुजो गाधिरित्येकस्य नामद्वयम्, तथैव विजयध्वजीयटीकायामुक्तेरिति ज्ञेयम् ।

तथा रामायणे बालकाण्डे पञ्चमे सर्गे 'पुरा कुशिकपुत्राणां देशांस्तानवलोकयन् । कथां स कथनीयानां कथयामास तापसः । कुशनाभसुताद् भूपात् कुशपौत्रान्महाबलात् । गाधिनाम्नो निजं जन्म रामायाह स्म कौशिकः' इति । एवमेव भारतविष्णुरामायणादिषूपपादित इति द्रष्टव्यम् ।

हिरण्यग्रहणमिति । हिरण्याण्डकोशस्थत्वादित्यत्र हिरण्यग्रहणमित्यर्थः । 'अन्तस्तद्धर्मोपदेशात्' इत्यधिकरणोदाहृतेषु 'यस्याण्डकोशं शुष्ममाहुः' 'अप एव ससर्जादौ तासु वीर्यमपासृजत् । तदण्डमभवद्धैमं

१. १-४ ।

सहस्रांशुसमप्रभम्' इत्यादिप्रमाणेषु ब्रह्माण्डस्य हिरण्मयत्वावगतेः प्रकृते कौशिक इत्यत्र कोशपदेन ब्रह्माण्डकोशो ग्राह्य इति प्रदर्शनाय हिरण्यग्रहणं कृतमिति भावः । कुशैर्गृहीतत्वादिति, कोशस्थत्वादित्युक्तपक्षद्वये यथाक्रमं व्युत्पत्तिं दर्शयति **कुशशब्दादित्यादिना** । कुशैर्गृहीत इत्यर्थे कुशशब्दात् कोशे भव इत्यर्थे कोशशब्दाद्वा तद्धिता इति बहुवचनज्ञापिते ठक्प्रत्यये सति ककारलोपे किति चेत्यादिवृद्धौ ठस्येक इति ठकारस्येकादेशे कुश-कोशशब्दयोरन्त्याकारस्य यस्येति चेति लोपे कौशिकशब्दनिष्पत्तिरिति भावः ।

ननु मन्दशब्दस्य मदशब्दितसुखवाचित्वेऽपि नित्यसुखीति भाष्योक्त-सुखस्य नित्यत्वं कथं लब्धमित्यत आह **आधिक्येऽधिकमिति** । आधिक्येऽधिकमित्येव हरिणीसूक्तमीरितिम्' पूर्वमुक्तत्वात्प्रकृते मदी हर्ष इति शब्विकरणे पठितात् ईदितो धातोर्निष्पन्नस्य मदशब्दस्य लक्षण-प्रासादन्येन मुमागमरूपाधिकाक्षरेण मदशब्दार्थस्य सुखस्याधिक्यलाभात् तदाधिक्यं नित्यत्वेनेत्युपपादनाय भाष्ये नित्यत्वेन सुखं विशेषितमिति भावः ।

**सानो लाभ इति** । षणु लाभ इति धातोर्घञन्ततया निष्पन्नस्य सानशब्दस्य लाभार्थकत्वादिति भावः । ननु मदि स्तुति मोदमदस्वप्न-कान्तिगतिष्विति शब्विकरणे पठितस्य मदि धातोरिदित्वेन इदितो नुम-धातोरिति नुमागमेन मन्दशब्दस्य व्युत्पादयितुं शक्यत्वेनाधिक्यार्थलाभो न सम्भवतीत्यरुच्या पक्षान्तरमाह **यद्वेति** ।

**सानः सम्भजनमिति** । षण सम्भक्ताविति धातोर्निष्पन्नस्य सान-शब्दस्य सम्भजनार्थत्वेन तत्र संशब्देन नित्यत्वरूपसम्यक्त्वलाभात् मन्दस्य

सानः सम्भजनं यस्येति व्युत्पत्त्या मन्दसानशब्देन सुखस्य नित्यत्वावगतेर्नित्यसुखीत्युक्तमुपपन्नमिति भावः । एवं ऋक्पदानां भाष्यपदैः संयोजनं कृत्वा समग्रवाक्ययोजनामाह हे इन्द्रेत्यादिना । आतून इत्यत्र तु इति पदस्य संहितायां दीर्घ इत्यभिप्रेत्य तदनूद्य तस्यार्थमाह तु क्षिप्रमिति । अव्ययानामनेकार्थत्वादिति भावः ॥ १०१ ॥

मंत्रः – १०२

(अ.१, सू.१०, मं.१२)

**परि त्वा गिर्वणो गिर इमा भवन्तु विश्वतः ।**
**वृद्धायुमनु वृद्धयो जुष्टा भवन्तु जुष्टयः ॥**

पदपाठः

परि । त्वा । गिर्वणः । गिरः । इमाः ।
भवन्तु । विश्वतः । वृद्धऽआयुम् । अनु । वृद्धयः ।
जुष्टाः । भवन्तु । जुष्टयः ॥

भाष्यम्

**त्वा इमा गिरः ।**
**सर्वदा परितः सन्तु मदीयाः सर्वलाभिनम् ।**
**वृद्धिरूपा गिरो जुष्टाः सेवारूपाश्च सन्तु नः ॥ १०२ ॥**

टीका

हे गिर्वणः ! इमा मदीया गिरः स्तुतिरूपा वाचो विश्वतः सर्वदा वृद्धः पूर्ण आयो लाभो यस्यासौ वृद्धायुस्तं सर्वलाभिनं त्वा त्वां परि

परितो भवन्तु । अतिशयेन त्वद्विषया भवन्तु । किञ्च । वृद्धयो वृद्धिरूपास्त्वद्वृद्धिप्रकाशिन्यो जुष्टाः सेव्याः नो गिरो जुष्टयोऽनुभवन्तु त्वत्सेवानुरूपाश्च सन्तु ॥ १०२ ॥

### टिप्पणी

हे गिर्वण इति । गीर्भि अवनीय भजनीय इत्यर्थः । स त्वाविशं त्वित्यस्यामृचि भाष्यटीकयोरेवमेव व्याख्यानादिति ज्ञेयम् । विश्वत इत्यत्र सार्वविभक्तिकस्तसिरित्यभिप्रेत्य योजनामाह विश्वतः सर्वदेति । तथा च विश्वत इत्यस्य विश्वस्मिन् काल इत्यर्थपरत्वमिति भावः । वृद्धायुमित्यत्र वृद्धशब्दस्यायशब्देन बहुव्रीहिसमासे सत्यायशब्दान्त्याकारस्य छान्दसव्यत्ययेन उकारादेश इत्यभिप्रेत्य योजनामाह वृद्धपूर्ण इत्यादिना । अनु इत्युपसर्गस्य उपरितनक्रियापदेनान्वय इत्यभिप्रेत्य योजनामाह अनुभवं त्विति । विस्तरस्तु ऋगर्थमञ्जर्यां द्रष्टव्यः । ॥ १०२ ॥

## सूक्तम् – ११

अष्टर्चम् । मधुच्छन्दाः । इन्द्रः । अनुष्टुप् ।

मंत्रः – १०३

(अ.१, सू.११, मं.१)

**इन्द्रं विश्वा अवीवृधन्त्समुद्रव्यचसं गिरः ।**
**रथीतमं रथीनां वाजानां सत्पतिं पतिम् ॥**

पदपाठः

इन्द्रम् । विश्वाः । अवीवृधन् । समुद्रऽव्यचसम् ।
गिरः । रथिऽतमम् । रथिनाम् । वाजानाम् ।
सत्ऽपतिम् । पतिम् ॥

भाष्यम्

**अष्टावृचः पुनस्तेन दृष्टा अन्यत्रगास्तपः ।**
**कुर्वता सम्यगुद्रिक्तगुणव्यक्तिस्तथाभिधः[1] ॥ १०३ ॥**

टीका

अष्टावृच इत्यस्यापि पूर्ववच्छङ्कापरिहारौ । अन्यत्रगा आनुपूर्व्यन्तरगाः । अनेनेन्द्रमष्टौ जेता माधुच्छन्दस इति जेतानाममधुच्छन्दसः पुत्रोष्टाविन्द्रं विश्वा इत्याद्या ऋचोऽपश्यदित्येतदपि निरस्तं भवति ॥ उपपत्तिं तूत्तरत्र वक्ष्यति ॥ सम्यगुद्रिक्तानां गुणानां व्यक्तिर्यस्य स तथाभिधः । समुद्रव्यचाः समुत्पूर्वाद्रिचेर्डः । गुणानां योग्यतया सम्बन्धः । व्यचःशब्दो व्याप्तिवद्व्यक्तेरपि वाचकः । समुद्रव्यचसं रथिनां रथितमं वाजानामन्नानां पतिं सत्पतिं सतां पतिं इन्द्रं विश्वागिरः सर्वा वेदवाचोऽवीवृधन् । प्रकाशितवत्यः ॥ १०३ ॥

टिप्पणी

पूर्ववदिति । स्थानान्तरगते ऋचावित्यतोक्तरीत्यात्रापि शङ्कापरिहारौ ज्ञेयावित्यर्थः । तथा हि नन्विन्द्रं विश्वेत्याद्यष्टौ ऋचः मधुच्छन्दसा दृष्टाः,

---

१. तथाविधः – पा० ।

ऋष्यन्तरे प्रमाणाभावात् तत्कथं तस्य शतर्चित्वमित्यत आहेत्यवतार्य एकानुपूर्वीगत ऋक्शतदर्शननिमित्तत्वात् शतर्चित्वप्रसिद्धेरिन्द्रं विश्वेत्याद्यष्टानामृचामानुपूर्व्यन्तरगतत्वेन देशकालावस्थान्तरदृष्टत्वाच्छतर्चित्वप्रसिद्धेरविरोध इति परिहाराभिप्रायो ध्येयः ।

अनेनेति । इन्द्रं विश्वेत्याद्यष्टानामृचां मधुच्छन्दसा दृष्टत्वकथनेनेत्यर्थः । अस्य निरस्तं भवतीत्यनेनान्वयः । निरसनीयपक्षमनुक्रमणिकोक्तमनुवदति । **इन्द्रमष्टौ जेतेत्यादिना** । नन्विन्द्रं विश्वेत्याद्यष्टानामृचां मधुच्छन्दसा दृष्टत्वं न तु तत्पुत्रजेतृदृष्टत्वमित्यत्र किं नियामकमित्यत आह उपपत्तिं त्विति । इन्द्रविश्वा इति वर्गव्याख्यानान्तरम् ऋक्संहितायाः स्वाध्यायादित्यादिनोपपत्तिं[1] वक्ष्यतीत्यर्थः ।

ऋचेरिति । ऋचिर् विरेचन इति धातोर्डप्रत्यये चुटू इत्युकारलोपे डित्यभस्यापीति धातुटिलोपे सम् उदित्युपसर्गद्वयपूर्वकत्व उपसर्गकारकस्य[2] द्व्यच्त्वेन दकारे समुद्रशब्दनिष्पत्तिरिति भावः । ननूक्तव्युत्पत्त्यनुसारेण समुद्रशब्दस्य समुद्रिक्तार्थकत्वेऽपि सम्यगुद्रिक्तत्वं[3] कथमित्यत आह गुणानामिति । व्यासिवदिति । व्यच् व्याजीकरण इति धातोरसुन्प्रत्ययान्ततया निष्पन्नस्य वाचःशब्दस्य धातूनामनेकार्थत्वमादाय परभाष्ये समुद्रव्यचसं समुद्रवत् व्याप्तमिति व्याप्त्यर्थकतया यथा व्याख्याय तथा अस्मदाचार्यैरपि धातूनामनेकार्थत्वमादायैव गुणव्यक्तेरिति व्यक्त्यर्थकतया व्यचःशब्दो व्याख्यात इति भावः । 'कश्छन्दसां योगमावेद धीर' इत्यादिप्रमाणैर्वैदिकपदानामनेकार्थत्वावगमादिति हृदयम् ।

---

१. स्वाध्यायादित्युपपत्तिम् - क । २. उपसर्गतकारस्य जश्त्वेन - क ।
३. सम्यगुद्रिक्तगुणार्थकत्वं - क ।

उक्थमिन्द्राय शंस्यमित्यस्यामृचि नित्यवृद्धत्वतो विष्णोर्वर्धनं तु प्रकाशतमिति भाष्योक्तरीत्या वर्धनं प्रकाशनमेवेत्यभिप्रेत्य योजनामाह अवीवृधन् प्रकाशितवत्य इति ॥ १०३ ॥

**मंत्रः – १०४**

(अ.१, सू.११, मं.२)

**सख्ये तं इन्द्र वाजिनो मा भेम शवसस्पते ।**
**त्वामभि प्र णोनुमो जेतारमपराजितम् ॥**

**पदपाठः**

**सख्ये । ते । इन्द्र । वाजिनः । मा । भेम ।**
**शवसः । पते । त्वाम् । अभि । प्र । नोनुमः ।**
**जेतारम् । अपराऽजितम् ॥**

**टीका**

**हे शवसस्पते ! सुखस्य बलस्य वा पते इन्द्र ते सख्ये सति त्वदनुग्रहे सति वाजिनो युद्धवन्तो वयं मा भेम मा भैष्म तदर्थं च परेषां जेतारं स्वयमपराजितं त्वामभिप्रणोनुमः प्रकर्षेण पुनः पुनः स्तुमः ॥ १०४ ॥**

**टिप्पणी**

स्पष्टत्वादियमृक् भाष्यकृता न व्याख्यातेत्यभिप्रेत्य टीकाकृत्स्वयं व्याचष्टे हे शवसम्पत इत्यादिना । सुखस्य बलस्येवेति । महा इन्द्रः

परश्च नु इत्यस्यामृचि सुखबले तथेति भाष्यव्याख्यावसरे टीकायां शवः सुखबले उभयनामसुपाठादित्युक्तत्वेन प्रकृतेऽपि सुखबलोभयार्थकतया शवः शब्दो व्याख्यात इति ज्ञेयम् । ऋचि मा भेमेत्यत्र माङ् पूर्वात् ञिभी भय इति धातोर्माङि लुङिति लुङ्युत्तमपुरुषबहुवचने मसि नित्यं ङित इति सकारलोपे छान्दसत्वेन च्लेरभावे सिचोऽप्यभावेन तन्निमित्तिकवृद्धेरभावे धातोर्गुणे न माङ् योग इत्यडभावे मा भेमेति रूपमित्यभिप्रेत्य योजनामाह **मा भेम मा भैष्मेति** ।

प्रणोनुम इत्युत्तरार्धोक्ताया प्रकर्षेण पुनः क्रियमाणाया स्तुतेः पूर्वार्धोक्तं सखित्वं भयराहित्यं च साध्यमिति प्रदर्शनाय साध्यसाधनभावस्फोरकपदमध्याहृत्योत्तरार्धं योजयति **तदर्थं चेति** । सखित्वाद्यर्थमिवेत्यर्थः । चशब्द एवार्थक इति ज्ञेयम् । यद्वा जेतारमपराजितमित्युक्तेर्जयापराजितत्वसमुच्चायकश्चशब्द इति ज्ञेयम् । तं यथा यथोपासते तदेव भवतीत्यादेः । तथा च सखित्वाभयत्वजयापराजितत्वप्राप्त्यर्थं जेतृत्वादिगुणविशिष्टं त्वामभिप्रणोनुम इत्यन्वयो बोध्य इति भावः ।

अभिप्रेत्युपसर्गद्वयपूर्वकात् णु स्तुताविति धातोर्यङ्लुकि णो नेति णस्य नत्वे उपसर्गादिसमासेऽपि णोपदेशस्येति णत्व अभिप्रणोनुम इति रूपसिद्धेस्तत्र प्रेत्युपसर्गस्य प्रकर्षार्थकत्वं यङ्प्रत्ययस्य पौनःपुन्यार्थकत्वमित्यभिप्रेत्य योजनामाह **प्रकर्षेण पुनः पुनः स्तुम इति** । अभीत्युपसर्गस्य तु अभिमुखेनेति वा, अभितः सर्वस्मिन् देशे काले चेति वार्थो ज्ञेयः ॥ १०४ ॥

मंत्रः – १०५

(अ.१, सू.११, मं.३)

पूर्वीरिन्द्रस्य रातयो न वि दस्यन्त्यूतयः ।
यदी वाजस्य गोमतः स्तोतृभ्यो मंहते मघम् ॥

पदपाठः

पूर्वीः । इन्द्रस्य । रातयः । न । वि । दस्यन्ति ।
ऊतयः । यदि । वाजस्य । गोऽमतः ।
स्तोतृऽभ्यः । मंहते । मघम् ॥

भाष्यम्

प्रथमानि महत्त्वेन ते दानान्यवनानि च ।
न भिद्यन्ते न नश्यन्ति गोमदन्नं यशस्तथा ।
यदि मंहते ददातीशः ॥ १०५ ॥

टीका

इन्द्रस्य ते तव रातय ऊतयश्च पूर्वीः पूर्वाः । दानान्यवनानि च प्रथमानि । कथम् । महत्त्वेन कारणेन । किञ्च । न विदस्यन्ति न विदस्यन्ते । दसिर्विभेदनार्थः । न भिद्यन्ते क्षयार्थो वा न नश्यन्ति । स इन्द्र ईशो यदि गोमतो वाजस्य गोमदन्नं मघं यशश्चेत्यादिकं स्तोतृभ्यो मंहते मंहतिर्दानार्थः । ददाति तर्हि तानि दानानि प्रथमानीत्यादि सम्बन्धः ॥ १०५ ॥

## टिप्पणी

भाष्ये ते दानानीत्यत्र तवेति षष्ठ्येकवचनस्य ते मया वेकवचनस्येति त इत्यादेश इत्यभिप्रेत्य योजनामाह **ते तवेति** । युष्मदस्मदोः षष्ठीचतुर्थी द्वितीयास्थयोः वा नावावित्यादि सूत्रेषु अनुदात्तं सर्वमपादादाविति सूत्रादनुवर्तमानस्यापादादाविति निषेधस्य नञा निर्दिष्टत्वेनानित्यत्वात्पादादित्वेऽपि भाष्ये त इति निर्देश उपपन्न इति ज्ञेयम् । उक्तं च जिज्ञासाधिकरणसुधायां तेनानिष्टं कथं भवेदित्यनुव्याख्यावसरे ते तवानिष्टं कथं न भवेदिति योजनामाश्रित्य अपादादाविति नञा निर्दिष्टमनित्यमिति त इति निर्देश उपपन्न इति ।

रातयः ऊतयः पूर्वीरिति त्रीणि ऋक्पदान्यनूद्य दानान्यवनानि प्रथमानीति त्रिभिर्भाष्यपदैर्यथाक्रमं योजनामाह **रातय इत्यादिना** । अवनानि चेति भाष्ये चशब्दश्रवणात् ऋक्पदेऽपि उभयश्चेति शब्दो योजित इति ज्ञेयम् । रातिशब्दस्य रा दान इति धातोर्निष्पन्नत्वात् दानार्थकत्वम्, ऊतिशब्दस्य तु रक्षणार्थकावधातोर्निष्पन्नत्वादवनार्थकत्वमुपपन्नमिति ज्ञेयम् ।

पूर्वशब्दात् स्त्रियां छान्दसे ङीपि प्रथमाबहुवचने जसि दीर्घाज्जसि चेति निषेधस्य नञा निर्दिष्टत्वेन नञा निर्दिष्टमनित्यमित्यनित्यत्वात् प्रथमयोः पूर्वसवर्ण इति दीर्घे पूर्वीरिति रूपमित्यभिप्रेत्य योजनामाह **पूर्वीः पूर्वा इति** । यद्वा पूर्वशब्दात् स्त्रियां टापि जसि सवर्णदीर्घे च सति तृतीयोऽतिशय इत्याकारस्य ईकारे पूर्वीरिति रूपमित्यभिप्रेत्य योजनामाह **पूर्वीः पूर्वा इति** ।

**प्रथमानीति** । श्रेष्ठानीत्यर्थः । **कथमिति** । प्रथमत्वं कथमित्याकाङ्क्षायां तत्र हेतुतया महत्वेनेति भाष्ये पूरितमिति भावः । भाष्ये भिद्यन्त इति कर्मणि

निष्पन्नपदेन व्याख्यानात् तदनुसारेण दन्तीति व्याख्येयपदेऽपि कर्मणि निष्पन्नत्वं वाच्यम् । तत्र भावकर्मणो इत्यात्मनेपदे प्राप्तव्यत्ययो बहुलमिति छान्दसव्यत्ययेन परस्मैपदित्वमित्यभिप्रेत्य योजनामाह **विदस्यन्त** इति ।

न विनश्यन्ते भिद्यन्त इत्यत्र प्रकृतिभूतभिदिधात्वर्थानुगतिप्रदर्शनाय दस्यन्तीत्यत्र प्रकृतिभूतधात्वर्थं दर्शयति **दसिरिति** । दसुधातुरित्यर्थः । इक्श्तिपौ धातुनिर्देशे वक्तव्यावित्युक्तेर्दसिरिति निर्देशः कृत इति ज्ञेयम् । क्षयार्थो वेति दसिरित्यन्वेति ।

तसु उपक्षये दसु चेति क्षयार्थकतया दिवादिधातुगणे श्यन्विकरण-परस्मैपदित्वेन पठितात् दसु धातोः कर्तरि निष्पन्नस्य दस्यन्तीत्यस्य क्षयशब्दित नाशकर्तृत्वमर्थ इति प्रदर्शनाय नश्यन्तीति कर्तरिव्युत्पन्नपदेन व्याख्यानान्तरं कृतमिति भावः । नश अदर्शन इति धातोः श्यन्विकरण-परस्मैपदित्वेन नश्यन्तीति रूपमिति ज्ञेयम् ।

ननु क्षयार्थकतया धातुगणे पठितस्य दसुधातोर्दसिर्विभेदनार्थ इति भेदनार्थकतया कथं व्याख्यानं कृतमिति चेन्न । प्रयोगतोऽवगन्तव्या अनेकार्था हि धातव इति शाब्दिकैरेव धातूनामनेकार्थत्वस्योक्तत्वात्प्रकृते भेदनार्थकतया व्याख्यानमुपपन्नमिति । गोमतो वाजस्येति षष्ठी द्वितीयार्थे वर्तत इत्यभिप्रेत्य योजनामाह **गोमदन्नमिति** । अत्र गोपदस्य पश्वर्थकत्वं वागर्थकत्वं च ज्ञेयम् । भाष्ये यशस्तथेत्यत्र तथाशब्दस्य चशब्दार्थकतया गोमदन्नयशसोः समुच्चायकतया प्रयुक्त इत्यभिप्रेत्य योजनामाह **यशश्चे-त्यादिकमिति** । पूर्ववदेवार्थः ।

अत्र गोशब्दस्य पश्वर्थकत्वं वागर्थकत्वं च ज्ञेयम् । आदिशब्देन धन-मखयोर्ग्रहणम् । तथा च भाष्ये यशश्शब्दः धनमखयोरप्युपलक्षक इति

भावः । यद्वा तथाशब्द उक्तानुक्तोभयसमुच्चायक इत्यभिप्रेत्याह यशश्चेत्यादिकमिति । पूर्ववदेवार्थः ।

कर्मनिर्णये विदा मघवन्नित्येतद्व्याख्यानावसरे मघवन् यशस्विन् धनवन् मखपत इति मघशब्दं यशोधनमखरूपार्थत्रयपरतया व्याख्याय त्रिष्वपि मखधनयशोरूपार्थेषु मघशब्दस्य प्रयोगप्रदर्शनार्थं तं वा एतं मखवन्तं मघवानित्याचक्षते परोक्षेण परोक्षप्रिया इव हि देवाः प्रत्यक्षद्विषः । तेभिरिन्द्रं चोदथ दातवे मघम् । तन्न आयातु मघाय यशो वा मघं इत्यादिश्रुतिभ्य इति । श्रुतीनामुदाहृतत्वेन प्रकृतेऽप्यादिपदेन धनमखयोरपि ग्रहणमुपपन्नमिति ज्ञेयम् ।

मंहतिरिति । मंहधातुरित्यर्थः । तानि दानानीति । गोमदन्नदानानीत्यर्थः । प्रथमानीत्यादि सम्बन्ध इति । प्रथमानि न भिद्यन्ते न नश्यन्तीति सम्बन्ध इत्यर्थः ॥ १०५ ॥

**मंत्रः – १०६**

(अ.१, सू.११, मं.४)

**पुराम्भिन्दुर्युवा कविरमितौजा अजायत ।**
**इन्द्रो विश्वस्य कर्मणो धर्ता वज्री पुरुष्टुतः ॥**

**पदपाठः**

**पुराम् । भिन्दुः । युवा । कविः । अमितऽओजाः ।**
**अजायत । इन्द्रः । विश्वस्य । कर्मणः । धर्ता ।**
**वज्री । पुरुऽस्तुतः ॥**

## टीका

**शरीरपुराणां शम्बरस्य पुराणां च भेत्ता युवाकविः सर्वज्ञोऽमितमोजो यस्यासावमितौजाः विश्वस्य कर्मणो धर्ता सर्वकर्मणां प्रेरको वज्री पुरुभिः स्तुतः पुरुष्टुत इन्द्रोऽजायत यज्ञे अभिव्यक्तोऽभवत् ॥ १०६ ॥**

## टिप्पणी

इयमृक् स्पष्टार्थत्वाद् भाष्यकृता न व्याख्यातेत्यभिप्रेत्य टीकाकृत्स्वयं व्याचष्टे शरीरपुराणामित्यादिना शरीरपुराणां शरीराख्यपुराणामित्यर्थः । शम्बरस्येति । शम्बरासुरस्येत्यर्थः । भिदिर विदारण इति धातोर्निष्पन्नस्य भिन्दुशब्दस्य भेदनकर्तृत्वमर्थ इत्यभिप्रेत्य योजनामाह भेत्तेति । युवेति । नित्ययौवनोपेत इत्यर्थः । वज्रीति । विष्णुपक्षे इन्द्रो वज्री हिरणमय इत्यत्र भाष्ये वज्री च 'ज्ञानानन्दो हि धातुतः' इत्युक्तरीत्या ज्ञानानन्दवानित्यर्थः । प्रसिद्धेन्द्रे तु वज्रायुधवानित्यर्थः ॥ १०६ ॥

**मंत्रः – १०७**

(अ.१, सू.११, मं.५)

**त्वं वलस्य गोमतोऽपावरद्रिवो बिलम् ।**
**त्वां देवा अबिभ्युषस्तुज्यमानास आविषुः ॥**

**पदपाठः**

त्वम् । वलस्य । गोऽमतः । अप । अवः ।
अद्रिऽवः । बिलम् । त्वाम् । देवाः । अबिभ्युषः ।
तुज्यमानासः । आविषुः ॥

भाष्यम्

**बलस्तिर्यग्गतिर्धियः ।**
**वाचामन्यार्थबुद्धेस्तु बिलं मूलं तमो हि यत् ।**
**तदपावृतवांस्त्वं च प्रदर्श्य विनिवार्य च ।**
**त्वां हि देवा भयापेताः प्रेर्यमाणास्त्वयैव च ।**
**छाद्यमानं गिरा दैत्यैररक्षन्निव सद्गिरा ।**
**इन्द्रस्य गोसवार्थे च समुत्सृष्टा जगत्यपि ।**
**चर्तुं गावो हृता दैत्यैः सरमारक्षिताः पुरा ।**
**तस्याः [1]स्वसृत्वमुक्त्वैव तयोच्छिष्टं च गोपयः ।**
**तदर्थं पणयो नाम ते दैत्या बलपूर्वकाः ।**
**इन्द्रेण निहताः पश्चाज्ज्ञात्वा च सरमाकृतम् ।**
**ताडयित्वा पदा वक्त्रात्सृते[2] पयसि तां भयात् ।**
**शरणागतां प्रेषयित्वा दूत्येन[3] पणिनां पुनः ।**
**भित्वा गिरिव्रजं तं च गावो यत्र प्रतिष्ठिताः ।**
**निःसारिताः पुनस्ताश्च गोसवेनेष्टमेव च ।**
**तदा देवा अभीत्यैव परितो जुगुपुः पतिम् ॥ १०७ ॥**

टीका

ऋचं परमेश्वरे योजयितुं वलशब्दार्थं तावदाह वल इति । वलतिः परिवर्तनार्थः । अतो वलस्तिर्यग्गतिः धिय इति शेषः । धियो मनसो यदर्थवैपरीत्येन विषयीकरणं स वल इत्यर्थः । धियो ज्ञानस्य वा । विपरीतज्ञानमिति यावत् । इदानीमृचं व्याचष्टे **वाचा-**

---

१. स्वृतत्व – पा० । २. स्रुते – पा० । ३. दौत्येन – पा० ।

मिति । हे अद्रिवः ! त्वं गोमतः गोसम्बन्धिनो वलस्य मिथ्याज्ञानस्य वेदवाचामन्यार्थबुद्धेरिति यावत् । यद्बिलं मूलं कारणं तमोऽज्ञानं तदपावः अपावृतवानसि । छान्दसो विकरणलोपः । उत्सारितवानसि । कथम् । प्रदर्श्य विनिवार्य च । तत्त्वप्रदर्शनेन निराकृत्येत्यर्थः । ततश्चाज्ञानमिथ्याज्ञानयोर्नष्टयोर्देवाः सत्त्वप्रकृतयः पुरुषा अबिभ्युषः । प्रथमार्थे द्वितीया । अबिभीवांसः संसारभयापेतास्तुज्यमानास्त्वयैव प्रेर्यमाणाश्च त्वामाविषुः । दैत्यैर्दुष्टगिराच्छाद्यमानं सद्गिरा अरक्षन्निवहि । प्रकाशितवन्त इति यावत् । एतामृचमिन्द्रपरतया व्याकुर्वन्नितिहासगर्भत्वात् तमाह इन्द्रस्येति । इन्द्रस्य गावः गोसवो यज्ञविशेषः । जगति चर्तुं चरितुं समुत्सृष्टाः । इन्द्रस्यापीति सम्बन्धः । सरमा देवशुनी तस्याः स्वसृत्वमुक्त्वैव स्वसृत्वादिमृषोक्त्या तां प्रलोभ्य हृताः तदर्थं तन्निमित्तम् । सरमाकृतं व्यापारं कथं ज्ञात्वा पदा ताडयित्वा । ततोऽपि कथम् । वक्त्रात्पयसि सृते सति । पणिना सकाशम् । गिरिव्रजं गिरिकूटम् । ज्ञात्वेत्यादीनां भित्वेत्यन्तानां इन्द्रेण दैत्या निहता इत्यन्वयः । इष्टमेव चेत्यन्तेन पूर्वार्धो व्याख्यातः । हे अद्रिवः ! त्वं गोमतो गोभिर्युक्तस्य बलस्य दैत्यस्य बिलं गिरिकूटाधस्तनं विवरमपावोऽपावृतवानसीति । तदा देवास्तुज्यमानास्त्वयैव प्रेर्यमाणा अबिभ्युषस्त्वामाविषुः अभीत्यैव स्वपतिं त्वां परितो जुगुपुः । ॥ १०७ ॥

### टिप्पणी

वलतिरिति । वलधातुः परिवर्तनार्थ इत्यर्थः । धिय इति शेष इति । शेषत्वेन भाष्यकृता पूरित इत्यर्थः । तत्र धीशब्दस्य मनःपरत्व-

मुपेत्य वलशब्दान्वयलब्धमर्थं दर्शयति **मनसो यदिति** । मनस अर्थवैपरीत्येन विषयीकरणमिति यत् स वल इत्यर्थ इति पूर्वेणान्वयः । पक्षद्वयेऽपि परिवर्तनार्थकवलशब्दस्य पर्यवसितार्थं दर्शयति **विपरीतज्ञानमिति यावदिति** ।

**हे अद्रिव इति** । हे प्राणप्रवर्तक इत्यर्थः । सुविवृतं सुविरजमित्यस्यामृचि कृणुष्व राधो अद्रिव इत्यत्र भाष्ये अद्रिरादरणीयत्वात् प्राणस्तद्वर्तकोऽद्रिवा हरिः' इत्यद्रिवशब्दस्य हरौ व्याख्यानादिति ज्ञेयम् । **वेदवाचमिति** । 'तत्त्वमसि', अहं ब्रह्मास्मी'त्यादिवेदवाक्यानामभेदादिविषयत्वेनापाततो ज्ञायमानाया बुद्धेरित्यर्थः ।

नन्वप इत्युपसर्गपूर्वात् वृञ् वरण इति धातोर्लङि मध्यमपुरुषैकवचने सिपि पकारेकारयोर्लोपे धातोरडागमादिकार्ये सति 'स्वादिभ्यः श्नुरि'ति विकरणे शकारलोपे उकारस्य गुणे प्रत्ययसकारस्य रुत्वे तस्य विसर्गे सत्यापावृणो इति निर्देशः स्यात्, कथम् अपाव इति निर्देश इत्यत आह **छान्दसो विकरण इति** । तथा च धातु ऋकारस्य गुणे रपवत्वे हलङ्याभ्येति सकारलोपे रेफस्य विसर्गे अपाव इति रूपमिति भावः । प्रदर्श्य विनिवार्य चेत्युक्तप्रदर्शननिवारणयोर्हेतुहेतुमद्भावेनान्वय इत्युपेत्याह **तत्त्वप्रदर्शनेनेति** ।

ननु ञिभी भय इति धातोः क्वसुप्रत्ययान्ततया निष्पन्नस्य बिभीवसुशब्दस्य नञ्समासे द्वितीयाबहुवचन अबिभ्युष इति रूपस्य निष्पन्नत्वेन कर्मकारकवाचित्वाद् भाष्ये भयापेता इति कर्तृकारकवाचितया कथं व्याख्यानं क्रियते ? तथात्वे अबिभीवांस इति ऋचि निर्देशः स्यादित्यत आह **प्रथमार्थे द्वितीयेति** । व्यत्ययो बहुलमित्युक्तेरिति भावः ।

अव रक्षण इति धातोर्लुङि प्रथमपुरुषबहुवचने धातोरडागम आविषुरिति रूपमित्युपेत्य योजनामाह **दैत्यैरित्यादिना** । भाष्ये सद्भिरेति सत्पदप्रयोगात्तत्प्रतियोगित्वेन पूर्वत्र गिरेत्यनेन दुष्टपदं संयोजनीयमित्यभिप्रेत्य टीकायां दैत्यैर्दुष्टगिरेत्युक्तमिति ज्ञेयम् । इतिहासगर्भत्वादिति । इन्द्रपरतया प्रतिपादनस्येतिहासगर्भत्वादित्यर्थः । **तमाहेति** । इतिहासमाहेत्यर्थः । चरतेः सेट्त्वेन भाष्ये चरितुमिति निर्देशस्य कर्तव्यत्वेऽप्यनित्यमागमशासनमितीड्भाव इत्युपेत्य योजनामाह **चर्तुं चरितुमिति** । **इन्द्रस्यापीति** सम्बन्ध इति । जगत्यपीत्यत्र श्रुतस्यापिपदस्य इन्द्रस्येत्यनेन सम्बन्ध इत्यर्थः । तथा चेन्द्रस्यापि त्रिलोकाधीश्वरत्वेनातिसमर्थस्यापि गावः दैत्यैर्हृत इत्यन्वय इति भावः । **तन्निमित्तेनेति** । गवापहारादिनिमित्तेनेत्यर्थः ।

पदा ताडयित्वेति । योगतया सरमामिति कर्मकारकत्वेन[१] ताडयित्वेत्यनेनान्वेतीति ज्ञेयम् । ततोऽपीति । पदा ताडनादपि सरमाकृतव्यापारज्ञानं कथमित्यतो वक्रात्पयसि सृते सतीत्युक्तमिति भावः । पणिनामित्यत्रापेक्षितशेषमाह आकाशमिति । भाष्ये इन्द्रेण निहता इति पूर्वं निर्देशात् ज्ञात्वा च स रमाकृतमित्यादेः पश्चान्निर्देशान्निर्देशक्रमानुसारेण दैत्यहननस्य पूर्वभावित्वं ज्ञानताडनादेः पश्चाद्भावित्वं प्रतीयते । अतस्तां निवारयितुं शब्दक्रमादर्थक्रमो बलीयानित्यभिप्रेत्यान्वयं दर्शयति ज्ञात्वेत्यादीनामिति । ज्ञात्वा ताडयित्वा प्रेषयित्वा भित्त्वा इत्येतेषां पदानां इन्द्रेण निहता इति पूर्वत्र श्रुतेनान्वय इति भावः । पूर्वार्धे इति । उत्तरार्धस्य तदा देवा इत्यादिना व्याख्यानादिति भावः । आख्यानलब्धार्थमेव दर्शयति हे अद्रिवा इत्यादिना । हे अद्रिवः हे पर्वतच्छेदक इत्यर्थः । कृणुष्व राधो

१. योगतया कर्मकारकत्वेन सरमामिति - क ।

अद्रिव इत्यत्रैव शक्रस्तथाद्रीणां छेदनात् वारणादपीत्यद्रिवश्शब्दः सिद्धेन्द्रे व्याख्यातः ।

जुगुपुरिति । गुपू रक्षण इति शब्विकरणे परस्मैपदित्वेन पठिताद्धातोः गुपूधूपविच्छिपणिपनिभ्य आय इति सूत्रेण प्राप्तस्य आयप्रत्ययस्य आयादय आर्धधातुके वेत्यार्धधातुके परतः विकल्पितत्वेनायप्रत्ययाभावपक्षे लिटि प्रथमपुरुषबहुवचने द्विवचनादिकार्ये जुगुपुरिति रूपमिति ज्ञेयम् । गुपुगोपन कुत्सनयोरित्यस्य तु ग्रहणं न सम्भवति गुप् तिजिकिद्भ्यः सन्निति प्राप्त-सन्प्रत्ययस्य गुपादेः क्रमान्निन्दाक्षमारुक्क्षयेषूपसङ्ख्यानमिति गोपनार्थे प्राप्त्यभावेऽपि तस्यात्मनेपदिषु पठितत्वेन परस्मैपदप्राप्तेरभावादिति । अत्र उत्तरत्र च ऋक्ष्वपेक्षितप्रक्रियाविशेषः ऋगर्थमञ्जर्यां सम्यगुपपादितो द्रष्टव्यः ॥ १०७ ॥

**मंत्रः – १०८**

(अ.१, सू.११, मं.६)

**तवाहं शूर रातिभिः प्रत्यायं सिन्धुमावदन् ।**
**उपातिष्ठन्त गिर्वणो विदुष्टे तस्य कारवः ॥**

**पदपाठः**

तव । अहम् । शूर । रातिऽभिः । प्रति । आयम् । सिन्धुम् । आऽवदन् । उप । अतिष्ठन्त । गिर्वणः । विदुः । ते । तस्य । कारवः ॥

भाष्यम्

**तव दानैरहं सिन्धुं नदीं प्रत्यागमं पुनः ।**
**त्वामावदन् स्तुतिपदैर्यज्ञदीक्षार्थमुद्यताः[1] ।**
**उपातिष्ठन्त कर्तारो विदुस्त्वां ये गिरोदित ॥ १०८ ॥**

टीका

हे शूर ! इन्द्र ! अहं तव रातिभिर्दानैर्निमित्तैः सिन्धुं नदीं प्रत्यायं प्रत्यागमम् । यज्ञदीक्षार्थमुद्यत इति शेषः । आगत्य पुनरावदन् स्तुतिरूपैर्वेदपदैस्त्वामावदन् सम्यक् स्तुवंश्च जातोऽस्मि । यद्वा । सर्वदा त्वामावदन्नहं पुनः सिन्धुं प्रत्यायमिति योज्यम् । हे गिर्वणो ! गिरा सम्भजनीय वेदगिरोदित ! तस्य ते तं त्वां ये विदुस्ते कारवः कर्तारः ऋत्विजस्तत्रोपातिष्ठन्त मन्त्रैस्त्वामपूजयन् ॥ १०८ ॥

टिप्पणी

रातिशब्दस्य रा दान इति धातोर्निष्पन्नत्वेन दानार्थकत्वं तत्रत्य तृतीयाया हेत्वर्थकत्वमित्यभिप्रेत्य योजनामाह रातिभिर्दानैर्निमित्तैरिति । त्वया मह्यं यथेष्टं धनं दत्तमस्ति, तस्य यज्ञादिधर्मेषु विनियोगं कर्तुं नदीतीरं गतोऽस्मीत्यभिप्रायः । प्रत्यायमिति । प्रतीत्युपसर्गपूर्वादिण् गताविति धातोर्लङ्युत्तमपुरुषैकवचने प्रत्यायमिति रूपम् । प्रत्याङित्युपसर्गद्वय-पूर्वकात् गम्लृगताविति धातोर्लुङि उत्तमपुरुषैकवचने प्रत्यागममिति रूप-मिति ज्ञेयम् ।

इति शेष इति । शेषत्वेन पूरित इत्यर्थः । आवदन्नित्यस्य ज्ञाता-स्मीति पदमध्याहृत्यान्वयो दर्शितः । तदनध्याहारेणैव योजनामाह यद्वेति ।

१. मुद्यतः – पा० ।

आ त्वा विशन्त्वित्यस्यामृचि भाष्ये गीर्भिर्वृत प्रभो इत्युक्तरीत्या गिर्वणशब्दं व्याचष्टे हे गिर्वण इति । तस्य त इति षष्ठी द्वितीयार्थे वर्तत इत्यभिप्रेत्याह तं त्वामिति । उपान्मन्त्रकरण इति तिष्ठतेरात्मनेपदमित्यभिप्रेत्य तदर्थं दर्शयति मन्त्रैस्त्वामपूजयन्निति ॥ १०८ ॥

**मंत्रः – १०९**

(अ.१, सू.११, मं.७)

**मायाभिरिन्द्र मायिनं त्वं शुष्णमवातिरः ।**
**विदुष्टे तस्य मेधिरास्तेषां श्रवांस्युत्तिर ॥**

**पदपाठः**

मायाभिः । इन्द्र । मायिनम् । त्वम् ।
शुष्णम् । अव । अतिरः । विदुः । ते । तस्य ।
मेधिराः । तेषाम् । श्रवांसि । उत् । तिर ॥

**भाष्यम्**

**शक्तिभिः शक्तिमन्तं [1]त्वां शोषकं वृत्रमातिरः ।**
**तमो वा त्वां विदुर्मेधारतास्तेषां श्रवांसि च ।**
**विद्या उच्चैस्तरां देहि ॥ १०९ ॥**

**टीका**

हे इन्द्र ! त्वं मायिनं शक्तिमन्तं व्रीह्यादित्वात्साधुः । शुष्णं शोषकं शुषेर्नङ् । वृत्रमिति यावत् । मायाभिः शक्तिभिरवातिरः तिरति-

१. त्वं – पा० ।

**र्वधकर्मा । हतवानसि । तमो वेत्यध्यात्मं मायिनं शुष्णमिति तमोऽज्ञानमुच्यते । शेषं समानमिति । किञ्च । ये मेधिराः मेधारताः । तृतीयस्यातिशयार्थत्वात् । तस्य ते तं त्वां विदुः । तेषां श्रूयन्त इति श्रवांसि विद्याः उत्तिर उच्चैस्तरां देहि ॥ १०९ ॥**

## टिप्पणी

नन्वस्माया मेधा स्रजो विनिरिरिति मायाशब्दान्मत्वर्थे विनिप्रत्ययस्य विधानात् ऋचि मायाविनमिति निर्देशे कर्तव्ये कथं मायिनमिति निर्देश इत्यत आह व्रीह्यादित्वात्साधुरिति । व्रीह्यादिभ्यश्चेति सूत्रे व्रीह्यादिभ्यः प्रातिपदिकेभ्यः इनिठनौ भवतः मत्वर्थे मतुप् भवत्येव व्रीही व्रीहिकः व्रीहिमान्, मायी, मायिकः, मायावानित्यादिसूत्रार्थोदाहरणानां वृत्त्यादावुक्तत्वेन प्रकृते मायाशब्दात् मत्वर्थे इनिप्रत्यये इकारलोपे यस्येति-चेत्याकारलोपे मायिन्शब्दनिष्पत्तौ द्वितीयैकवचने मायिनमिति रूपमिति भावः ।

शुषेर्नङिति । शु शेषण[१] (१. श्रुष शोषण - क, शिङ् शोषण - श्री.टि.) इति धातोरौणादिके नङ्प्रत्यये ङकारलोपे नकारस्य ष्टुत्वेन णकारे शुष्णशब्दनिष्पत्तिरिति भावः । तस्य प्रकृते विवक्षितमर्थं दर्शयति वृत्रमिति । वृत्रासुरमित्यर्थः । तस्येन्द्रशत्रुत्वेनातिसमर्थतया सर्वशोषकत्वादिति भावः ।

तिरतिरिति । तिरधातुः वेधः कर्म क्रियावाच्यं यस्य सः वेधकर्म इत्यर्थः । उणादयो बहुलमिति सूत्रे बहुलग्रहणेन प्रयोगानुसारतः प्रकृतिप्रत्ययादीनामूह्यत्वोक्तेरिति ज्ञेयम् । तथा च तिरुवध इति धातोः लङि शविकरणे मध्यमपुरुषैकवचने धातोरडागम अवेत्युपसर्गपूर्वकत्वे सवर्णदीर्घे

अवातिर इति रूपमिति भावः । यद्वा धातूनामनेकार्थकत्वे तरतेर्वेधकर्मणः व्यत्ययेन शविकरणे ऋत ईद्धातोरितीत्वे पूर्ववल्लिङ्गादिकार्ये अवेत्युपसर्ग-पूर्वकत्व[१] अवातिरेति रूपमिति ज्ञेयम् । टीकायामपि तिरतिनिर्देशस्तु श्रुत्यनुसारेणैव तरतेः शविकरणव्यत्ययाश्रयणेनेति ज्ञेयम् ।

**मायिनं शुष्णमितीति**[२] दोषद्वयोपेतं तमः अज्ञानमुच्यत इत्यर्थः । विशेषणद्वयस्य पूर्ववदेवार्थो ज्ञेयः । अत्र पक्षे मायिनमित्यस्य मायीति लिङ्गव्यत्ययेन वा तमपदार्थापेक्षया पुल्लिङ्गत्वेनैव तमःपदेनान्वयो बोध्यः । **शेषमिति** । त्वं मायिभिरवातिर इत्येतत्समानमित्यर्थः । ननु भाष्ये मेधारतीति व्याख्यानेन ऋचि मेधिरा इत्यत्र मेधासु बुद्धिषु राः रता इत्यर्थः प्रतीयते ।

तत्र रमु क्रीडायामिति धातोरौणादिक उप्रत्ययान्ततया निष्पन्नेन रशब्देन मेधाशब्दस्य सप्तमीशौण्डैरित्यत्र सप्तमीति योगविभागाश्रयणेन सप्तमीसमासे सति ङ्यापोः संज्ञाछन्दसोर्बहुलमिति सूत्रे ङ्यन्तस्याबन्तस्य च संज्ञायां छन्दसि बहुलं ह्रस्वो भवत्युत्तरपदे परतः । बहुलग्रहणात् क्वचिद्भवति क्वचिन्न भवतीति वृत्त्यादावुक्तत्वेन ह्रस्वपक्षे मेधर इति तदभावपक्षे मेधारा इति निर्देशः स्यात् । कथं मेधिरा इति निर्देश इत्यत आह **तृतीयस्येति** । कृत्वी हत्वी च पूर्वीश्च तृतीयोऽतिशये यतः इति पूर्वमुक्तत्वेन ह्रस्वपक्षे मातृकाक्षरगणने अकारापेक्षया इकारस्य तृतीयवर्णत्वे अतिशयितज्ञानोपेतेत्यर्थपरतया मेधिरेति निर्देश उपपन्न इति भावः ।

---

१. अवेत्युपसर्गपूर्वकत्वे सवर्णदीर्घे - क ।

२. शुष्णमितीति विशेषणद्वयोपेतं तमः - क ।

तेषामिति । विवक्षातः कारकाणि भवन्तीति सम्प्रदानत्वस्य विवक्षितत्वात् षष्ठ्युपपत्तिरिति ज्ञेयम् । श्रूयन्त इतीति । श्रू श्रवण इति धातोः कर्मण्यसुन्प्रत्यये श्रवस्शब्दनिष्पत्तिरिति भावः । उत्तिरेति । उत्पूर्वोत्तरतेर्वा तिरतेर्वा लोणमध्यमपुरुषैकवचने व्यत्ययेन शविकरण उत्तिर इति रूपमिति ज्ञेयम् । भाष्ये उच्छब्दार्थविवरणपूर्वकमुपसर्गवशाद् धातूनामनेकार्थत्वमाश्रित्य तिरेत्येतत् दानार्थकतया व्याख्यातमित्यभिप्रेत्य योजनामाह उच्चैस्तरां देहीति ॥ १०९ ॥

मंत्रः – ११०

(अ.१, सू.११, मं.८)

**इन्द्रमीशानमोजसाभि स्तोमा अनूषत ।**
**सहस्रं यस्य रातय उत वा सन्ति भूयसीः ॥**

पदपाठः

इन्द्रम् । ईशानम् । ओजसा । अभि । स्तोमाः ।
अनूषत । सहस्रम् । यस्य । रातयः । उत । वा ।
सन्ति । भूयसीः ॥

भाष्यम्

**स्तुवन्ति त्वां सहौजसा ।**

**ऋक्संहितायाः स्वाध्यायात्प्रवन्धाद्व्यासनिर्मितात् ।**
**ब्राह्मणेभ्यस्तथा मानात् प्रोक्ताः स्युर्मुनयोऽत्र ये ।**
**श्रुत्यभावादलिङ्गाच्च मुनिर्नान्यः प्रतीयते ।**

**श्रुतिलिङ्गान्यता यावत्तावत्पूर्वप्रमा भवेत् ।**
**शतर्भिरुत्तराभिस्तु वह्निनामानमच्युतम् ।**
**अस्तौन्मेधातिथिस्ताभ्य उत्तरा अपि [1]तद्वशः ।**
**अन्यत्रगास्तपस्यन् स ता ददर्श कदाचन ।**
**कालस्थानान्तरत्वं चेत्सङ्ख्यातोऽभ्यधिकं भवेत् ।**
**अन्यस्थानगता अन्यदृष्टा अप्यत्रगा यदि ।**
**सङ्ख्यान्तर्भावमेष्यन्ति ता इतोऽपगता यतः ।। ११० ।।**

**टीका**

यस्येन्द्रस्य सहस्रमुत वाऽतोऽपि भूयसीर्भूयस्यो रातयो दानानि सन्ति तमीशानमिन्द्रं त्वामोजसा ओजःप्रभृतिभिर्गुणैः सहस्तोमा । स्तुतिविशेषा अनूषत । अभ्यनूषत सदा स्तुवन्ति ।

नन्वेवं शतर्चित्वस्य गतिमुक्त्वाप्येतासामृचां मधुच्छन्दाः कस्मादृषिरुच्यते माधुच्छन्दसो जेता कस्मान्न स्यादित्यत आह **ऋक्संहिताया इति** । तथाशब्दः समुच्चये । मानादिति प्रत्येकमभिसम्बध्यते । तथा मानान्मानान्तरादिति वा । येऽत्र ग्रन्थेऽस्माभिर्मुनयः प्रोक्तास्ते ऋक्संहिताद्यनुसारेणैव अतस्त एव स्युः । यद्वा ऋक्संहितादिना मानेन येऽत्र मुनयः प्रोक्तास्त एव स्वीकार्याः स्युः । न मानुषरचितग्रन्थोक्ता इति । युक्त्यन्तरमाह **श्रुत्यभावादिति** । शुनःशेपो ह्यह्वदित्यादिवत् श्रुत्यभावात् मधुच्छन्दसोऽन्यस्य मुनेर्नामाभावात् । त्रिष्वादित्यं द्रुपदेषु बद्ध इत्यादिवदलिङ्गादृष्यन्तरलिङ्गाभावाच्च । उपलक्षणं चैतत् । ऋष्यन्तरज्ञापकप्रमाणाभावादित्यर्थः । अन्यो

१. तादृशः – पा० ।

मधुच्छन्दसः । किञ्च । तदु माधुच्छन्दसमित्यादि वा 'वायवायाही'-त्यादिसूक्तानां मधुच्छन्दसा दृष्टत्वमुच्यते । ततोऽपि स एवात्र द्रष्टाऽभ्युपगन्तव्यः । एवं तर्ह्यतिप्रसङ्ग इत्यत आह **श्रुतीति** । श्रुतिलिङ्गयोरन्यता । अन्यज्ञापकं श्रुतिलिङ्गादि यावद्भवेत्तावदेव पूर्वा प्रमा सामान्यप्रमाणं ज्ञापकं भवेत् । एतदुक्तं भवति । तदु माधुच्छन्दसमित्यादि सामान्यवचनम् । तच्चापवादाभावे प्रमाणम् । अपवादे तु सङ्कोचमर्हति । न चात्रापवादकं श्रुत्यादिकमस्तीति । अथ व्याचिख्यासितानामृचामृषिमाह **शतर्ग्भिरिति** । विशेषणसमासोऽयम् । न द्विगुः । समासान्तो विधिरनित्यः । वह्निनामानमित्युपलक्षणम् । एवं चेत्कस्य नूनमित्यतः प्राक्तनीनामृष्यन्तरं वक्तव्यं प्रसज्येतेत्यत आह **ताभ्य इति** । शतसङ्ख्याभ्य उत्तरा एकोनचत्वारिंशदपि स मेधातिथिर्दृक् द्रष्टा यासां तास्तद्दृशः । तर्हि कथं तस्य शतर्चित्वमित्यत आह **अन्यत्रेति** । अन्यत्र गा इत्यानुपूर्व्यन्तरत्वमुक्तम् । तपस्यन्नित्यवस्थान्तरत्वम् । कदाचनेति कालान्तरत्वम् । स मेधातिथिः । किमतो यद्येवमित्यत आह **कालेति** । कालान्तरत्वं स्थानान्तरत्वं च दर्शनस्य चेत्तर्हि शतसङ्ख्यातोऽभ्यधिकमपि तदन्तर्भूतमेव भवेत् । कालस्थानान्तरत्वमित्युपलक्षणम् । अन्यस्थानगतत्वमन्यदृष्टत्वं च ग्राह्यम् । अत्र युक्तिमाह **अन्येति** । अत्रापि कालान्तरत्वादिकमुपादेयम् । ताः कालान्तरे देशान्तरेऽवस्थान्तरे च दृष्टा ऋष्यन्तरेण वा दृष्टा आनुपूर्व्यन्तरस्थाश्च इतोपगताः अत्र विद्यमाना अप्यविद्यमानकल्पा यतः अतः सङ्ख्यान्तर्भावमेष्यन्ति । तासु विद्यमानास्वपि शतमित्येवोच्यत इति यावत् । एकदेशकालावस्थासु तेनैव ऋषिणा दृष्टा मूलवेदे चैकानुपूर्वीस्था हि शतर्चित्वे विवक्षिता इति ॥ ११० ॥

## टिप्पणी

**उत वेति** । अथ वेत्यर्थः । **ततोऽपीति** । सहस्रादपीत्यर्थः । सुपां सुलुगित्यादिना जसः पूर्वसवर्णदीर्घ इत्युपेत्याह **भूयसी भूयस्य इति** ।

ओजसेत्यत्र ओजःशब्दः ज्ञानानन्दादिसर्वगुणोपलक्षक इत्युपेत्याह **ओजःप्रभृतिभिरिति** । **अभ्यनूषतेति** । णु स्तुताविति लुग्विकरणे परस्मैपदित्वेन पठिताद्धातोः छान्दसव्यत्ययेन लुङात्मनेपद अमित्यमागगशासनमिति वा छान्दसत्वेन वा सिचः इडाभावे षत्वे धातूकारस्य छान्दसे दीर्घे णो न इति धातुणकारस्य नत्व अडागमे अभीत्युपसर्गपूर्वत्वे यणादेशे अभ्यनूषतेति रूपमिति ज्ञेयम् । छन्दसि लुङ् लङ् लिट् इति लुङः सार्वकालिकत्वोक्तेः प्रकृते सार्वकालिको लुङित्यभिप्रेत्य योजनामाह **सदा स्तुवन्तीति** ।

उपपत्तिं तूत्तरत्र वक्ष्यतीत्युपपत्तिकथनपरम् ऋक्संहितायाः स्वाध्यायादित्यादिभाष्यं विवरितुमवतारयति **नन्वेवमिति** । **स्थानान्तरगते ऋचाविति** । अष्टावृच इत्युक्तप्रकारेण शतर्चित्वप्रसिद्धेर्गतिमुक्त्वेत्यर्थः । **एतासामिति** । इन्द्रं विश्वेत्याद्यष्टानामित्यर्थः । **माधुच्छन्दस इति** । मधुच्छन्दसः पुत्र इत्यर्थः । **तथाशब्दः समुच्चय इति** । ऋक्संहितासमुच्चय इत्यर्थः । **प्रत्येकमिति** । ऋक्संहितायाः प्रत्येकं मानात् स्वाध्यायात् मानादित्यादिरूपेणेत्यर्थः । तथा मानादित्यस्य स्वस्थान एव योजनेत्यभिप्रेत्याह **तथेति** । ऋक्संहिताद्यपेक्षया मानान्तरादित्यर्थः ।

**शुनःशेपो ह्यह्वदित्यादिवदिति** । शुनःशेपो ह्यह्वद्गृहीत इत्यादौ शुनःशेपस्य ऋषित्वज्ञापकशुनःशेपशब्दवत् । मधुच्छन्दसः पुत्रस्य जेतृनामकस्य ऋषित्वज्ञापकशब्दाभावादित्यर्थः । 'शब्दादेव प्रमितः' इत्यधि-

करणे श्रुतिसमुद्दिष्टं लिङ्गं तल्लक्षणं स्मृतमित्यादि तत्त्वप्रदीपोक्त वचनानुसारेणात्र श्रुतिशब्दो नामपरो न वेदपर इत्युपेत्याह **नामाभावादिति** ।

न च वाच्यं जेतारमपराजितमिति जेतृशब्दश्रवणादिन्द्रं विश्वेत्यादीनामष्टानामृचां मधुच्छन्दसः पुत्रो जेतृनामको ऋषिरिति । अत्र जेतृशब्दस्य जयशीलार्थकत्वेन जेतारं त्वमिन्द्रमितीन्द्रविशेषणत्वेन जेतृनामकऋषिपरत्वाभावादिति । **त्रिष्विति** । त्रिष्वादित्यं द्रुपदेषु बद्ध इत्यत्र त्रिषु द्रुपदेषु द्रोः वृक्षस्य यूपस्य पदेषु स्थानेषु तथा त्रिषु द्रुपदेषु द्रुतं प्राप्तेषु विक्रिययूपबन्धनसंज्ञपनोद्यमेषु बद्धत्वं शुनःशेपस्य ऋषित्वज्ञापकं लिङ्गमस्ति नत्वन्यस्य नाम ज्ञापकं लिङ्गमस्तीति भावः ।

ननु यूपे बद्धत्वादिकं छागपश्वादिसाधारणत्वादलिङ्गमिति वाच्यम् । आदित्यतमह्वयदित्यादित्याह्वानकर्तृत्वलिङ्गेन तथा अवगते हेलो वरुण नमोभिरवयज्ञेभिरीमहे तविर्भिरिति नमस्कारहविरादियुक्तयज्ञैर्वरुणप्रसादप्रार्थनलिङ्गेन च सहपठितस्य यूपबन्धनादेश्छागपश्वादिसाधारणत्वाभावादिति । अत एवादिपदं प्रयुक्तमिति ज्ञेयम् । व्यक्तमेतद् द्वितीयाध्याये कस्य नूनमित्यादि व्याख्यावसरे भाष्यटीकयोर्ब्राह्मणवाक्योदाहरणेति ज्ञेयम् ।

**तदु माधुच्छन्दसमित्यादिनेति** । तदित्यनेन गायत्रीछन्दस्कं सर्वऋक्शतं गृह्यते तदु गायत्रमेव कुर्यात् ब्रह्म वै गायत्री ब्रह्मैतदहः ब्रह्मणैव तद्ब्रह्म प्रतिपाद्यत इति पूर्ववाक्ये गायत्री छन्दस्कानां प्रकृतत्वादिति ज्ञेयम् । माधुच्छन्दसं मधुच्छन्दसा दृष्टमित्यर्थः । आदिपदेन तद्यन्माधुच्छन्दसं शंसन्तीत्यादेर्ग्रहणम् । **स एवेति** । मधुच्छन्दा एवात्र इन्द्रं विश्वेत्याद्यष्टसु ऋक्षु ऋषित्वेनाङ्गीकार्य इत्यर्थः ।

**एवं तर्हीति** । गायत्रीछन्दस्कानां सर्वेषां मधुच्छन्दसा दृष्टत्वाङ्गीकारे मेधातिथिशुनःशेपहिरण्यस्तूपादिदृष्टानामपि गायत्रीच्छन्दस्कानां माधुच्छन्दसत्वप्रसङ्गादित्यर्थः । **सङ्कोचमर्हतीति** । अपवादविषयपरिहारेणोत्सर्गस्य प्रवृत्तेरिति भावः । **न चात्रेति** । अत्र इन्द्रं विश्वेत्याद्यष्टानामृचां मधुच्छन्दसा दृष्टत्वाङ्गीकारे अपवादमन्यप्रापकं श्रुत्यादिकं नास्तीत्यर्थः ।

ननु तद्धितार्थोत्तरपदसमाहारे चेति शतशब्दस्य ऋक्शब्देन समाहारसमासे सङ्ख्यापूर्वो द्विगुरिति द्विगुसंज्ञायां द्विगुरेकवचनमित्येकवद्भावे ऋक्पूरब्धूपथामानक्ष इति समासान्ताकारप्रत्यये तृतीयैकवचने शतर्चेनेति, समासान्ताभावपक्षे शतर्चेति निर्देशः स्यात्, कथं भाष्ये शतर्ग्भिरिति निर्देश इत्यत आह **विशेषणसमासोऽयमिति** । शतसङ्ख्यायुक्ताश्च ताः ऋचश्चेति विगृह्य विशेषणं विशेष्येण बहुलमिति समास इति भावः ।

नन्वेवमपि पूर्वोक्तसूत्रेण समासान्तविधौ शतर्चैरिति निर्देशः स्यादित्यत आह **समासान्तो विधिरनित्य इति** । द्वित्रिभ्यां पाद्दन् मूर्धसु बहुव्रीहावित्यादिसूत्रेषु समासान्तविधेरनित्यत्वज्ञापनादिति भावः । **वह्निनामानमित्युपलक्षणमिति** । अग्निं दूतमित्याग्नेयसूक्तान्तरपठितेषु अग्निसूक्तं, वैश्वदेव, ऋतव्य, ऐन्द्र, ऐन्द्रावरुणादिसूक्तेषु विद्यमानानां तत्तद्देवतावाचिनाम्नामुपलक्षणमित्यर्थः ।

**एवं चेदिति** । शतर्ग्भिरुत्तराभिरित्युक्तरीत्या अग्निं दूतमित्यारभ्य या सुरथा रथीतमेत्यन्तानां शतानामृचां मेधातिथिदृष्टत्वाङ्गीकारे या वां कशेत्याद्यानां कस्य नूनमित्यत प्राक्तनानामृचां रूपान्तरं वक्तव्यं प्रसज्येतेत्यर्थः । **एकोनचत्वारिंशदपीति** ।

करणे श्रुतिसमुद्दिष्टं लिङ्गं तल्लक्षणं स्मृतमित्यादि तत्त्वप्रदीपोक्त वचनानुसारेणात्र श्रुतिशब्दो नामपरो न वेदपर इत्युपेत्याह **नामाभावादिति**।

न च वाच्यं जेतारमपराजितमिति जेतृशब्दश्रवणादिन्द्रं विश्वेत्यादीनामष्टानामृचां मधुच्छन्दसः पुत्रो जेतृनामको ऋषिरिति । अत्र जेतृशब्दस्य जयशीलार्थकत्वेन जेतारं त्वमिन्द्रमितीन्द्रविशेषणत्वेन जेतृनामकऋषिपरत्वाभावादिति । **त्रिष्विति**। त्रिष्वादित्यं द्रुपदेषु बद्ध इत्यत्र त्रिषु द्रुपदेषु द्रोः वृक्षस्य यूपस्य पदेषु स्थानेषु तथा त्रिषु द्रुपदेषु द्रुतं प्राप्तेषु विक्रिययूपबन्धनसंज्ञपनोद्यमेषु बद्धत्वं शुनःशेपस्य ऋषित्वज्ञापकं लिङ्गमस्ति नत्वन्यस्य नाम ज्ञापकं लिङ्गमस्तीति भावः ।

ननु यूपे बद्धत्वादिकं छागपश्वादिसाधारणत्वादलिङ्गमिति वाच्यम् । आदित्यतमह्वयदित्यादित्याह्वानकर्तृत्वलिङ्गेन तथा अवगते हेलो वरुण नमोभिरवयज्ञेभिरीमहे तविर्भिरिति नमस्कारहविरादियुक्तयज्ञैर्वरुणप्रसादप्रार्थनलिङ्गेन च सहपठितस्य यूपबन्धनादेश्छागपश्वादिसाधारणत्वाभावादिति । अत एवादिपदं प्रयुक्तमिति ज्ञेयम् । व्यक्तमेतद् द्वितीयाध्याये कस्य नूनमित्यादि व्याख्यावसरे भाष्यटीकयोर्ब्राह्मणवाक्योदाहरणेति ज्ञेयम् ।

तदु **माधुच्छन्दसमित्यादिनेति**। तदित्यनेन गायत्रीछन्दस्कं सर्वऋक्शतं गृह्यते तदु गायत्रमेव कुर्यात् ब्रह्म वै गायत्री ब्रह्मैतदहः ब्रह्मणैव तद्ब्रह्म प्रतिपाद्यत इति पूर्ववाक्ये गायत्री छन्दस्कानां प्रकृतत्वादिति ज्ञेयम् । माधुच्छन्दसं मधुच्छन्दसा दृष्टमित्यर्थः । आदिपदेन तद्यन्माधुच्छन्दसं शंसन्तीत्यादेर्ग्रहणम् । **स एवेति**। मधुच्छन्दा एवात्र इन्द्रं विश्वेत्याद्यष्टसु ऋक्षु ऋषित्वेनाङ्गीकार्य इत्यर्थः ।

**एवं तर्हीति** । गायत्रीछन्दस्कानां सर्वेषां मधुच्छन्दसा दृष्टत्वाङ्गीकारे मेधातिथिशुनःशेपहिरण्यस्तूपादिदृष्टानामपि गायत्रीच्छन्दस्कानां माधुच्छन्दसत्वप्रसङ्गादित्यर्थः । **सङ्कोचमर्हतीति** । अपवादविषयपरिहारेणोत्सर्गस्य प्रवृत्तेरिति भावः । **न चात्रेति** । अत्र इन्द्रं विश्वेत्याद्यष्टानामृचां मधुच्छन्दसा दृष्टत्वाङ्गीकारे अपवादमन्यप्रापकं श्रुत्यादिकं नास्तीत्यर्थः ।

ननु तद्धितार्थोत्तरपदसमाहारे चेति शतशब्दस्य ऋक्शब्देन समाहारसमासे सङ्ख्यापूर्वो द्विगुरिति द्विगुसंज्ञायां द्विगुरेकवचनमित्येकवद्भावे ऋक्पूरब्धूपथामानक्ष इति समासान्ताकारप्रत्यये तृतीयैकवचने शतर्चनेति, समासान्ताभावपक्षे शतर्चेति निर्देशः स्यात्, कथं भाष्ये शतर्ग्भिरिति निर्देश इत्यत आह **विशेषणसमासोऽयमिति** । शतसङ्ख्यायुक्ताश्च ताः ऋचश्चेति विगृह्य विशेषणं विशेष्येण बहुलमिति समास इति भावः ।

नन्वेवमपि पूर्वोक्तसूत्रेण समासान्तविधौ शतर्चैरिति निर्देशः स्यादित्यत आह **समासान्तो विधिरनित्य इति** । द्वित्रिभ्यां पाद्दन् मूर्धसु बहुव्रीहावित्यादिसूत्रेषु समासान्तविधेरनित्यत्वज्ञापनादिति भावः । **वह्निनामानमित्युपलक्षणमिति** । अग्निं दूतमित्याग्नेयसूक्तान्तरपठितेषु अग्निसूक्तं, वैश्वदेव, ऋतव्य, ऐन्द्र, ऐन्द्रावरुणादिसूक्तेषु विद्यमानानां तत्तद्देवतावाचिनाम्नामुपलक्षणमित्यर्थः ।

**एवं चेदिति** । शतग्भिरुत्तराभिरित्युक्तरीत्या अग्निं दूतमित्यारभ्य या सुरथा रथीतमेत्यन्तानां शतानामृचां मेधातिथिदृष्टत्वाङ्गीकारे या वां कशेत्याद्यानां कस्य नूनमित्यत प्राक्तनानामृचां रूपान्तरं वक्तव्यं प्रसज्येतेत्यर्थः । एकोनचत्वारिंशदपीति ।

नन्वग्निं दूतमित्यादि द्वादशार्चमाग्नेयं सूक्तं सुसमिद्धो न इत्यादि द्वादशार्चमाप्रीसूक्तम् । एभिरग्नेत्यादि द्वादशार्चं वैश्वदेवं सूक्तम् । इन्द्र-सोममित्याद्यपि द्वादशार्चं ऋतव्यं सूक्तम् । आत्वा वहन्तु हरय इत्यादि नवर्चं ऐन्द्रसूक्तम् । इन्द्रावरुणयोरहमित्यादिनवर्चमैन्द्रावरुणं सूक्तम् । [1]सोमानं स्वरणमित्यादि नवर्चं सूक्तम् । ब्रह्मणस्पत्यादिदेवताकम् । प्रतित्यं चारुमध्वरमित्यादि नवर्चमाग्निमारुतं सूक्तम् । अयं देवाय जन्मन इत्याद्यष्टर्चमार्भवं सूक्तम् । इहेन्द्राग्नीत्यादिषडर्चमैन्द्राग्नं सूक्तम् ।

प्रातर्यजेत्याद्येकविंशत्यृचं सूक्तं नानादैवत्यम् । भीवाः सोमास इत्यादि चतुर्विंशत्यृचं सूक्तं नानादैवत्यम् । [2]तथाग्निं दूतमित्यारभ्य कस्य नूनपर्यन्तं विद्यमानानामृचां[3] त्रिचत्वारिंशत्वात् । सम्यग्न इति ऋग्व्या-ख्यानानन्तरं टीकायां व्याख्याता मेधातिथिदृष्टाऋचः व्याचिख्यासिताना-मृषिमाह शुनःशेप इतीति । त्रिचत्वारिंशदधिकशतानां मेधातिथिदृष्ट-त्वस्य वक्ष्यमाणत्वाच्च प्रकृतेऽपि टीकायां त्र्यधिकचत्वारिंशदपीति वाच्ये कथमेकोनचत्वारिंशदपीत्युक्तमिति चेत्, अत्रोच्यते ।

यद्यप्यग्निं दूतमित्यारभ्य कस्य नूनमित्यतः प्राक्तनानां मेधातिथि-दृष्टत्वम्, तथापि अप्सु मे सोमोऽब्रवीत्, आपः प्रणीत भेषजम्, इदमापः प्रवहत, आपोद्यान्वाचारिषमिति ऋक्चतुष्टयस्य न मेधातिथिदृष्टत्वम् किन्तु सिन्धुद्वीपऋषिणाम्बरीषऋषिणा च दृष्टत्वम् ऋग्वेदेषु सन्ध्या-

---

१. सोमानं स्वरणमित्यादि ब्रह्मणस्पत्यादिदेवताकं - क ।
२. अग्निं दूतमित्यारभ्य कस्य नूनमिति पर्यन्तेषु द्वादशसूक्तेषु विद्यमानानामृचां - क ।
३. त्रिचत्वारिंशदधिकशतत्वेन यावांकशेत्यारभ्य कस्यन् न पर्यन्तं विद्यमानानामृचां)

वन्दनादौ प्रसिद्धम् । तथा चासाधारण्येन मेधातिथिमात्रदृष्टत्वप्रसिद्धि-विवक्षया एकोनचत्वारिंशदित्युक्तमिति ।

केचित्तु आत्वा कण्वा सहूषता [1]ईलते त्वामवश्यव कण्वास इति सोमानं स्मरणमिति अयं देवाय जन्मने स्त्वोमो विप्रेभिरिति ऋक्चतुष्टयस्य ऋष्यन्तरेणापि दृष्टत्वात् तद्व्यतिरिक्तात्वाभिप्रायेण एकोनचत्वारिंशदि-त्युक्तमिति वदन्ति ।

अत्र पक्षे ईळते त्वामवस्यव इत्यस्यामृचि भाष्ये आत्मस्त्वं वा बहु-वचो बहवो मुनयोऽत्र वेत्युक्तरीत्या कण्वाः कण्वासः । विप्रेभिरिति बहुवचनस्य ऋष्यन्तरदृष्टत्वज्ञापनस्य सद्भावेन आत्वा ईलते अयं देवायेति ऋक्त्रयस्य ऋष्यन्तरदृष्टत्वाङ्गीकारेऽपि सोमानं स्वरणमित्यस्यामृचि ऋष्यन्तरदृष्टत्वज्ञापकाभावात् कक्षीवत्परस्य विवक्षितो मुनिः सोऽपीति भाष्यटीकयोर्मेधातिथिपरत्वेन व्याख्यानात् । तस्माद् पूर्वोक्तपक्षद्वयेऽपि[2] स्वरस इति वदन्ति । तादृश इत्यत्र तत्पदार्थविवरणपूर्वकं समासं दर्शयति [3]सः सः मेधातिथिः ऋग्दृष्टेति । क्विन्प्रत्ययस्य कुरितिसूत्रे क्तिनः कुरित्युक्तेऽपि प्रत्ययग्रहणे सर्वत्र तदन्तविधिरिति क्विन्प्रत्ययान्त-स्येति सिद्ध्यति । तथापि प्रत्ययग्रहणं बहुव्रीहिविज्ञानार्थं क्विन्प्रत्ययो यस्माद्धातोर्विहितः स धातुः क्विन्प्रत्ययस्य कुत्वमिति ।

तथा च तद्गुणसंविज्ञानबहुव्रीह्याश्रयणेन क्तिन्प्रत्ययेऽसत्यपि यत्र क्वचित् क्तिन्प्रत्ययान्ततया दृष्टस्य धातोः प्रत्ययान्तरेऽपि कुत्वं भवतीति वृत्त्यादावुक्तत्वेन त्यदादिषु दृशोऽनालोचने कञ्चेति चकारेण दृशेः क्तिनो

---

१. ईळते - क ।  ३. सः मेधातिथिरिति ऋग्दृष्टेति - क ।

२. तस्माद् पूर्वोक्तपक्ष एव स्वरस इति वदन्ति - क ।

विधानेन प्रकृते पश्यतीति कर्त्रर्थे क्विप्चेति सूत्रेण दृशेः क्विप्प्रत्यये तस्य सर्वापहारिलोपे शकारस्य कुत्वेन ककारे दृक्शब्दनिष्पत्तिरिति ज्ञेयम् ।

स्थानान्तरत्वमिति । देशान्तरत्वमित्यर्थः । अन्यस्थानगतत्वमिति । आनुपूर्व्यन्तरगतत्वमित्यर्थः । कालान्तरत्वादिकमिति । आदिपदेन देशान्तरत्वमवस्थान्तरत्वं च[1] ग्राह्यम् । नन्वधिकानामृचां विद्यमानत्वादितोऽपगतत्वं कथमित्यत आह अत विद्यमाना अपीति । तास्विति । अधिकास्वित्यर्थः । शतर्चित्वप्रसिद्धौ नियामकं निष्कृष्य दर्शयति एकदेशेत्यादिना ॥ ११० ॥

## सूक्तम् – १२

**द्वादशर्चम् । मेधातिथिः काण्वः ।**
**अग्निः, ६ प्रथमपादस्य (निर्मथ्याहवनीयौ) अग्नी । गायत्री ।**

**मंत्रः – १११**

(अ.१, सू.१२, मं.१)

**अ॒ग्निं दू॒तं वृ॑णीमहे॒ होता॑रं वि॒श्ववे॑दसम् ।**
**अ॒स्य य॒ज्ञस्य॑ सु॒क्रतु॑म् ॥**

**पदपाठः**

**अ॒ग्निम् । दू॒तम् । वृ॒णी॒म॒हे॒ । होता॑रम् ।**
**वि॒श्वऽवे॑दसम् । अ॒स्य । य॒ज्ञस्य॑ । सु॒ऽक्रतु॑म् ॥**

---

१. स्थानान्तरत्वं च - क ।

### भाष्यम्

**यज्ञभागार्थमत्रस्थो देवैः[1] सम्प्रेषितो यतः ।**
**दूतोऽग्निर्वासुदेवश्च तत्तत्प्रार्थितकृद्यतः ।**
**विश्ववेदाः स सर्वज्ञो यज्ञज्ञो यज्ञसुक्रतुः ॥ १११ ॥**

### टीका

**द्वादशर्चमेतदाग्नेयं सूक्तम् ।**

**अत्राग्नाविष्णवोर्दूतशब्दं घटयति यज्ञेति । यतोऽग्निर्यज्ञभागार्थं देवैः सम्प्रेषितस्ततो दूतः । सन्देशेन यः प्रेष्यते स हि दूत उच्यते । अत्रस्थोऽग्निस्थो वासुदेवश्च तत्तत्प्रार्थितकृद्यतोऽतो दूत इव दूतः । विश्वं वेत्तीति विश्ववेदाः । विदेः कर्तर्यसुन् । स विष्णुः । अग्नौ तूपचारत इति भावः । यज्ञस्य सुक्रतुमित्यस्य व्याख्यानं यज्ञज्ञ इति । क्रतुशब्दस्य ज्ञानवाचित्वात् । एवं योजना । वयं दूतं होतारं विश्ववेदसमस्य प्रमाणप्रमितस्य यज्ञजातस्य सुक्रतुं सम्यक् ज्ञानिनमग्निं वृणीमहे प्रार्थयामह इति यावत् ॥ १११ ॥**

### टिप्पणी

विदेरिति । विश्वशब्दोपपदात् विद् ज्ञान इति धातोः कर्तर्यौणादिकेऽसुन्प्रत्यये नकारोकारयोर्लोपे धातोरुपधागुणे विश्वदेवस्शब्दनिष्पत्तिरिति भावः । ननु यः सर्वज्ञः सर्वविदित्यादिप्रमाणैः विष्णोः सार्वज्ञ्यस्य निरवधिकत्वावगमेऽप्यग्नौ कथं निरवधिकसर्वज्ञत्वमित्यत आह **अग्नौ त्विति** । ऋचं व्याचष्टे **वयं दूतमित्यादिना** । अग्निमीळ इत्यत्रोक्तरीत्या होतृशब्दः अग्नौ विष्णौ च योज्यः ॥ १११ ॥

---

१. देवसम्प्रेषितो – पा० ।

मंत्रः – ११२

(अ.१, सू.१२, मं.२)

अग्निमग्निं हवीमभिः सदा हवन्त विश्पतिम् ।
हव्यवाहं पुरुप्रियम् ॥

पदपाठः

अग्निम्ऽअंग्निम् । हवीमऽभिः । सदा । हवन्त ।
विश्पतिम् । हव्यऽवाहम् । पुरुऽप्रियम् ॥

भाष्यम्

**अग्निनामा जामदग्न्यो भगवान् सम्प्रकीर्तितः ।**
**तस्य रूपबहुत्वेन वीप्सा चैवोपपद्यते ।**
**हवीमभिर्ऋगाह्वानैराह्वयन्तः प्रजापतिम् ॥ ११२ ॥**

टीका

अत्राग्नीनामनेकत्वादग्निमग्निमिति वीप्सायां द्विरुक्तिर्युज्यते परमेश्वरे तु कथमित्याशङ्कां परिहरन् कश्चिद्विशेषं चाह अग्निनामेति । तन्मूला द्विरुक्तिश्चोपपद्यत एव । ऋत्विजो विशां प्रजानां पतिं विश्पतिम् । हव्यं वहतीति हव्यवाट् तं हव्यवाहं पुरुप्रियं पूर्णसुखमग्निमग्निं हवीमभिः ऋग्रूपैराह्वानैः ऋचां योग्यतया सम्बन्धः । सदा हवन्त आह्वयन्त आहूतवन्तः ॥ ११२ ॥

## टिप्पणी

वीप्सायां द्विरुक्तिरिति । नित्यवीप्सयोरिति सूत्रेण वीप्सार्थे पदस्य द्विरुक्तिविधानादिति भावः । परमेश्वरे त्विति । नेह नानेत्यादि प्रमाणैः परमेश्वररूपेषु भेदस्य निषिद्धत्वे वीप्सानुपपत्तेरिति शङ्काभिप्रायो द्रष्टव्यः ।

तन्मूलेति । वीप्सामूलेत्यर्थः । वीप्सा चैवेत्यत्र चशब्दसमुच्चितमर्थं दर्शयन् एवकारो भिन्नक्रम इत्युपेत्य योजनामाह द्विरुक्तिश्चोपपद्यत एवेति । परमेश्वररूपेषु भेदाभावेऽपि भेदप्रतिनिधिविशेषबलाद्बहुत्वोपपत्तिरिति भावः । पूर्णसुखमिति । पुरुशब्दस्य पूर्णवाचितया प्रसिद्धत्वात् प्रियशब्दस्य तस्य प्रियमेव शिर इत्यादौ सुखविशेषवाचितया प्रसिद्धत्वादिति भावः । आह्वानैरिति । आह्वानसाधनैरित्यर्थः । ननु हवामभिरित्यस्य आह्वानसाधनपरत्वं कथमित्यत आह ऋचामिति । ॥ ११२ ॥

**मंत्रः – ११३**

(अ.१, सू.१२, मं.३)

**अग्ने देवाँ इहा वह जज्ञानो वृक्तबर्हिषे ।**
**असि होता न ईड्यः ॥**

**पदपाठः**

**अग्ने । देवान् । इह । आ । वह । जज्ञानः । वृक्तऽबर्हिषे । असि । होता । नः । ईड्यः ॥**

भाष्यम्

**जज्ञानो व्यज्यमानस्तु वृक्तं [१]प्रस्तुतमुच्यते ।**
**यजमानो वृक्तबर्हिः ॥ ११३ ॥**

टीका

हे अग्ने ! जज्ञानो जायमानोऽस्मद्यज्ञे व्यज्यमानस्त्वं वृक्तबर्हिषे वृक्तं प्रस्तृतमुच्यते । वृक्तं प्रस्तृतं बर्हिर्येनासौ वृक्तबर्हिर्यजमानस्तस्मै तत्प्रयोजनाय । देवानिह यज्ञे आवह यतस्त्वं होताऽसि नोऽस्माकमीड्यश्चासि ॥ ११३ ॥

टिप्पणी

वृक्तं प्रस्तृतमिति । वृजी वर्जन इति धातोः क्तप्रत्यये श्वीदितो निष्ठायामिति इडाभावे चोः कुरिति कुत्वे वृक्तशब्दनिष्पत्तौ धातूनामनेकार्थत्वेन तस्य प्रस्तृतार्थत्वमिति भावः ॥ ११३ ॥

मंत्रः – ११४
(अ.१, सू.१२, मं.४)

**ताँ उशतो वि बोधय यदग्ने यासि दूत्यम् ।**
**देवैरा सत्सि बर्हिषि ॥**

पदपाठः

तान् । उशतः । वि । बोधय । यत् । अग्ने ।
यासि । दूत्यम् । देवैः । आ । सत्सि । बर्हिषि ॥

---

१. प्रस्तृत – पा० ।

भाष्यम्

**बोधयेशेच्छतः सुरान् ।**

**देवैः सहोपविशसि ॥ ११४ ॥**

टीका

**हे अग्ने ! ईश ! यद्यस्माद्दूत्यं दूतस्य भावं कर्म वायासि प्रतिपद्यसे । देवानां दूतो यतस्तस्मादुशतः आगन्तुमिच्छतस्तान्सुरान् विबोधय विज्ञापय । अमुष्य यज्ञो युष्माभिर्गन्तव्य इति । ततश्च देवैः सह बर्हिष्यासत्सि आसीदसि उपविशसि उपवेक्ष्यसि ॥ ११४ ॥**

टिप्पणी

दूतस्य भावः कर्म वेति सख्युर्यः इति सूत्रे दूतवणिग्भ्यां चेति वक्तव्यमिति वार्तिकेन दूतशब्दाद्भावकर्मणोरर्थयोर्यप्रत्यये यस्येति चेत्यकारलोपे दूत्यशब्दनिष्पत्तिरिति भावः । आङ्पूर्वात् षद्लृ विशरणगत्यवसादनेष्विति धातोर्लटि मध्यमपुरुषैकवचने सिपि शब्विकरणे बहुलं छन्दसीति विकरणलोपे न लुमताङ्गस्येति प्रत्ययलक्षणनिषेधेन पाघ्रेत्यादिना प्राप्तस्य सीदादेशस्याप्राप्तौ धातुषकारस्य सत्त्वे दकारस्य चर्त्वे आसत्सीति रूपमित्युपेत्य योजनामाह आसत्सि आसीदसीति । अत्र लट्प्रत्ययः व्यत्ययेन लृडर्थे वर्तत इत्युपेत्य भाष्यपदसंयोजनपूर्वकं तद्विवृणोति उपविशसि उपवेक्ष्यसीति ॥ ११४ ॥

मंत्रः – ११५
(अ.१, सू.१२, मं.५)

**घृताहवन दीदिवः प्रति ष्म रिषतो दह ।**
**अग्ने त्वं रक्षस्विनः ॥**

पदपाठः

**घृतऽआहवन । दीदिऽवः । प्रति । स्म । रिषतः ।**
**दह । अग्ने । त्वम् । रक्षस्विनः ॥**

भाष्यम्

**यस्य ते सुघृतं हविः ।**
**रिषतो नाशकान् रक्षोजनान् प्रतिदहैव च ॥ ११५ ॥**

टीका

घृतं सुघृतं यज्ञयोग्यं हवनं हविर्यस्य ते तव स त्वं घृताहवनः । हे घृताहवन ! दीदिवः यङ्लुगन्तादीव्यतेरसुन् । देदीप्यमानाग्रे त्वं रिषतः अन्तर्णीतण्यर्थोऽयम् । नाशकान् रक्षस्विनः रक्षांसि येषां सन्ति तान्रक्षसां सम्बन्धिनो जनान्यज्ञघ्नान् प्रतिदहस्म प्रतिदहैव । ॥ ११५ ॥

टिप्पणी

अत्र प्रति स्म इत्यनयोः व्यवहिताश्चेति क्रियापदेनान्वयः । अव्ययानामनेकार्थत्वेन स्मशब्द एवार्थक इति प्रदर्शनाय भाष्ये प्रतिदहैव

चेत्युक्तमित्युपेत्य योजनामाह **प्रतिदहैवेति** । भाष्ये प्रयुक्त चशब्दस्याग्निकर्तृकाणां पूर्वोक्तव्यापाराणां समुच्चयार्थकत्वस्य स्पष्टत्वाट्टीकायां नानूदितमिति ज्ञेयम् ॥ ११५ ॥

**मंत्रः – ११६**

(अ.१, सू.१२, मं.६)

**अग्निनाग्निः समिध्यते कविर्गृहपतिर्युवा ।**
**हव्यवाड् जुह्वास्यः ॥**

**पदपाठः**

अग्निना । अग्निः । सम् । इध्यते । कविः ।
गृहऽपतिः । युवा । हव्यऽवाट् । जुहुऽआस्यः ॥

**भाष्यम्**

**यस्यास्ये हूयते सोऽग्निः परेशेन समिध्यते ।**
**अथवाऽऽहवनीयोऽग्निर्मथितेन समिध्यते ॥ ११६ ॥**

**टीका**

हविर्हूयते स जुह्वास्यः । जुहु हवनाधिकरणमास्यं यस्येति । कविः सर्वज्ञो गृहाणां पतिर्गृहपतिः । युवा तरुणो हव्यवाट् अग्निना परेशेन त्वया समिध्यते सन्दीप्तो भवति । अग्न्यादीनां दीप्त्यादिगुणप्रदस्त्वमिति यावत् । अथवा प्रसिद्धाग्निविषये जुह्वास्यः आहवनीयोऽग्निर्मथितेन गार्हपत्येनाग्निना सह समिध्यते । अन्यत्समानम् । ॥ ११६ ॥

**टिप्पणी**

अत्राग्निशब्द अग्न्यादीनामुपलक्षकः समिध्यत इत्यत्र दीप्त्यर्थक इति धातुरपि[1] दीप्त्यादीनामुपलक्षक इत्युपेत्य योजनामाह अग्न्यादीनां दीप्त्यादिगुणप्रद इति । अन्यदिति । इतरपदानां योजनं समानमित्यर्थः । ॥ ११६ ॥

**मंत्रः – ११७**

(अ.१, सू.१२, मं.७)

**कविमग्निमुपं स्तुहि सत्यधर्माणमध्वरे ।**
**देवममीवचातनम् ॥**

**पदपाठः**

कविम् । अग्निम् । उपं । स्तुहि । सत्यऽधर्माणम् । अध्वरे । देवम् । अमीवऽचातनम् ॥

**भाष्यम्**

**सत्यधर्मा सद्गुणभृद्दुःखघ्नोऽमीवचातनः ।**
**चातनं कालनं वा स्यात् ॥ ११७ ॥**

**टीका**

अमीवचातनपदे व्याख्याति सत्यधर्मेति । सत्याः साधवो धर्मा गुणा यस्यासौ सत्यधर्मा सद्गुणभृदित्यर्थः । अमीवं दुःखम् । तच्चा- तयति नाशयतीत्यमीवचातनो दुःखघ्नः । यद्वा चातनं कालनमपसारणं

१. दीप्त्यर्थकेन्धीधातुरपि - क ।

स्यात् । ततश्चामीवचातनो दुःखस्यापसारयिता । फलतस्त्वेक एवार्थः । कविं सर्वज्ञम् । सत्यधर्माणममीवचातनमग्निं देवमध्वरे उपस्तुहीति स्वात्मानं स्वान्तर्यामिणं होतृगं प्रति वोच्यते ॥ ११७ ॥

## टिप्पणी

**सत्यधर्मेति** । धर्मादनिच् केवलादिति समासान्तोऽनिच्प्रत्यय इति ज्ञेयम् । चातयति नाशयति चते चदे याचन इति धातुर्याचनार्थतया शब्विकरणे पठ्यते । तथापि धातूनामनेकार्थत्वेन नाशार्थकात् चतेर्ण्यन्तात् ल्युटि चातनशब्दनिष्पत्तिरिति भावः ।

पक्षद्वयेऽप्यर्थभेदोऽस्ति किमित्याकाङ्क्षायामाह **फलतश्चैक एवार्थ इति** । उपस्तुहीति मध्यमपुरुषप्रयोगस्य विषयं त्रेधा दर्शयति **स्वात्मानमित्यादिना** । अत्र स्वशब्देन मन्त्रद्रष्टा मेधातिथिर्ग्राह्यः । होतृगमिति । होतृस्थं तदन्तर्यामिणमित्यर्थः । होतृकमिति पाठे होतैव होतृकः, तं प्रतीत्यर्थः ॥ ११७ ॥

**मंत्रः – ११८**

(अ.१, सू.१२, मं.८)

**यस्त्वामंग्ने हविष्पतिर्दूतं देव सपर्यति ।**
**तस्यं स्म प्राविता भंव ॥**

**पदपाठः**

**यः । त्वाम् । अग्ने । हविःऽपंतिः । दूतम् । देव । सपर्यति । तस्यं । स्म । प्रऽअविता । भव ॥**

**टिप्पणी**

अत्राग्निशब्द अग्न्यादीनामुपलक्षकः समिध्यत इत्यत्र दीप्त्यर्थक इति धातुरपि[1] दीप्त्यादीनामुपलक्षक इत्युपेत्य योजनामाह **अग्न्यादीनां** दीप्त्यादिगुणप्रद इति । अन्यदिति । इतरपदानां योजनं समानमित्यर्थः । ॥ ११६ ॥

**मंत्रः – ११७**

(अ.१, सू.१२, मं.७)

**कविमग्निमुपं स्तुहि सत्यधर्माणमध्वरे ।**
**देवममीवचातनम् ॥**

**पदपाठः**

कविम् । अग्निम् । उपं । स्तुहि । सत्यऽधर्माणम् । अध्वरे । देवम् । अमीवऽचातनम् ॥

**भाष्यम्**

**सत्यधर्मा सद्गुणभृद्दुःखघ्नोऽमीवचातनः ।**
**चातनं कालनं वा स्यात् ॥ ११७ ॥**

**टीका**

अमीवचातनपदे व्याख्याति **सत्यधर्मेति** । सत्याः साधवो धर्मा गुणा यस्यासौ सत्यधर्मा सद्गुणभृदित्यर्थः । अमीवं दुःखम् । तच्चा-तयति नाशयतीत्यमीवचातनो दुःखघ्नः । यद्वा चातनं कालनमपसारणं

१. दीप्त्यर्थकेन्धीधातुरपि - क ।

स्यात् । ततश्चामीवचातनो दुःखस्यापसारयिता । फलतस्त्वेक एवार्थः । कविं सर्वज्ञम् । सत्यधर्माणममीवचातनमग्निं देवमध्वरे उपस्तुहीति स्वात्मानं स्वान्तर्यामिणं होतृगं प्रति वोच्यते ॥ ११७ ॥

## टिप्पणी

**सत्यधर्मेति** । धर्मादनिच् केवलादिति समासान्तोऽनिच्प्रत्यय इति ज्ञेयम् । चातयति नाशयति चते चदे याचन इति धातुर्याचनार्थतया शब्विकरणे पठ्यते । तथापि धातूनामनेकार्थत्वेन नाशार्थकात् चतेर्ण्यन्तात् ल्युटि चातनशब्दनिष्पत्तिरिति भावः ।

पक्षद्वयेऽप्यर्थभेदोऽस्ति किमित्याकाङ्क्षायामाह **फलतश्चैक एवार्थ इति** । उपस्तुहीति मध्यमपुरुषप्रयोगस्य विषयं त्रेधा दर्शयति **स्वात्मानमित्यादिना** । अत्र स्वशब्देन मन्त्रद्रष्टा मेधातिथिर्ग्राह्यः । होतृगमिति । होतृस्थं तदन्तर्यामिणमित्यर्थः । होतृकमिति पाठे होतैव होतृकः, तं प्रतीत्यर्थः ॥ ११७ ॥

## मंत्रः – ११८

(अ.१, सू.१२, मं.८)

**यस्त्वाम॑ग्ने ह॒विष्प॑तिर्दू॒तं दे॑व स॒पर्य॑ति ।**
**तस्य॑ स्म प्रावि॒ता भ॑व ॥**

### पदपाठः

**यः । त्वाम् । अ॒ग्ने॒ । ह॒विःऽप॑तिः । दू॒तम् । दे॒व॒ । स॒पर्य॑ति । तस्य॑ । स्म॒ । प्र॒ऽअ॒वि॒ता । भ॒व॒ ॥**

**टीका**

**हे अग्ने ! देव ! यो हविष्पतिर्यजमानो दूतं त्वां सपर्यति पूजयति स्म । तस्य यजमानस्य प्राविता प्रकर्षेण रक्षिता भव ॥ ११८ ॥**

**टिप्पणी**

अस्याः ऋचः स्पष्टार्थत्वेन भाष्यकृता व्याख्यानं न कृतमित्यभिप्रेत्य टीकाकृत्स्वयं व्याचष्टे हे **अग्न** इत्यादिना[१] सपरुशब्दस्य कण्ड्वादिषु पठितत्वेन कण्ड्वादिभ्यो यगिति सूत्रेण सपरशब्दाद् यक्प्रत्यये सनाद्यन्ता धातवः इति धातुसंज्ञायां लडादिकार्ये सपर्यहीति रूपं पूजा नमस्यापचितिः सपर्या चार्हणाः समा इत्यमरोक्तेस्तस्य पूजार्थकत्वं स्मशब्दस्य तु पूजा रक्षयोः हेतुहेतुमद्भावस्फोरकतया सपर्यतीति क्रियापदेनान्वय इत्येतत्सर्वं मनसि निधाय योजनामाह **सपर्यति मनसि स्मेति** । प्रपूर्वादव रक्षण इति धातोः कर्तरि तृचि तस्येडागमे स्वादिकार्ये प्राविवेति रूपमित्यभिप्रेत्य योजनामाह **प्राविता प्रकर्षेण रक्षितेति** ॥ ११८ ॥

**मंत्रः – ११९**

(अ.१, सू.१२, मं.९)

**यो अ॒ग्निं दे॒ववी॑तये ह॒विष्मा॑ँ आ॒विवा॑सति ।**
**तस्मै॑ पावक मृळय ॥**

**पदपाठः**

**यः । अ॒ग्निम् । दे॒वऽवी॑तये । ह॒विष्मा॑न् ।**
**आ॒ऽविवा॑सति । तस्मै॑ । पा॒व॒क॒ । मृ॒ळ॒य॒ ॥**

---

१. हे अग्न इति - क ।

**भाष्यम्**

**देववीतिस्तु तद्गतिः ।**
**आवासयति यस्त्वां च तं त्वं मृळय सर्वदा ॥ ११९ ॥**

**टीका**

**देववीतिपदं व्याख्याति देववीतिस्त्विति । तद्गतिर्देवानां गतिः । यज्ञं प्रति देवानामागमनम् । देवताप्राप्तिरूपं फलं वा । वीगतिव्याप्ति-प्रजनकान्त्यसनखादनेषु तस्यै देववीतये । यो हविष्मान्यजमानोऽग्निं त्वाम् आविवासति । आवासयत्याधत्ते । पूजयति च । हे पावक ! त्वं तस्मै तं यजमानं सर्वदा मृळय सुखय ॥ ११९ ॥**

**टिप्पणी**

भाष्ये तद्गतिरित्यत्र तच्छब्दः प्रकृतदेवपर इत्युपेत्य योजनामाह **तद्गतिः देवानां गतिरिति** । देववीतय इत्यत्र देवानां वीतिरिति विग्रह-वाक्यस्य षष्ठी कर्तरि कर्मणि चेत्यभिप्रेत्य पक्षद्वयलब्धमर्थं क्रमेण दर्शयति **देवताप्राप्तिरूपमिति** । यजमानस्य देवताप्राप्तिरूपफलं वा देववीतिशब्दार्थ इत्यर्थः । तद्गतिरित्यत्रापि तेषां गतिरिति षष्ठी कर्तरि कर्मणि चेति ध्येयम् ।

गतिशब्देनैकार्थकत्वप्रदर्शनाय वीतिशब्दे प्रकृतिभूतधातुं पठति **वी गतीति** । वीधातुः प्रजनकान्त्यशनखादनेष्वर्थेषु वर्तत इत्यर्थः । गतशब्दा-र्थस्य गमनप्राप्तिरूपत्वादिति भावः । भाष्ये गतिग्रहणं प्रजनकान्त्याद्यर्थ-स्याप्युपलक्षणमिति प्रदर्शनाय समग्रधात्वर्थप्रदर्शनं टीकायां कृतमिति ज्ञेयम् । तथा च गत्याद्यर्थकाद् वी धातोः भावे स्त्रियां क्तिन्निति क्तिन्-

प्रत्यये वीतिशब्दनिष्पत्तौ चतुर्थ्येकवचने ङिति ह्रस्वश्चेति नदीसंज्ञायां विकल्पितत्वेन आण् नद्या इत्याडागमप्राप्तेर्घेर्ङितीति गुणेऽयादेशे वीतय इति रूपमिति भावः ।

एवं देववीतिपदविवरणपरं तद्गतिपदं व्याख्याय देववीतय इति चतुर्थी विभक्तिलब्धमर्थं दर्शयति **तस्यै इति** । तद्गत्यै इत्यर्थः । आङ वीत्युपसर्गद्वयपूर्वकात् वस निवास इति धातोः णिचि छान्दसणिलोपे आविवासतीति रूपमित्यभिप्रेत्य योजनामाह **आवासयतीति** । **आधत्त इति** । अग्न्याधानं करोतीत्यर्थः । **पूजयति चेति** । धातूनामनेकार्थत्वादिति भावः । तस्म इति चतुर्थीव्यत्ययेन द्वितीयार्थे वर्तत इत्यभिप्रेत्य योजनामाह **तस्मै तमिति** ॥ ११९ ॥

**मंत्रः – १२०**

(अ.१, सू.१२, मं.१०)

**स नः पावक दीदिवोऽग्ने देवाँ इहा वह ।**
**उप यज्ञं हविश्च नः ॥**

**पदपाठः**

सः । नः । पावक । दीदिऽवः । अग्ने । देवान् ।
इह । आ । वह । उप । यज्ञम् । हविः । च । नः ॥

**भाष्यम्**

[1]**त्वत्पूजाविषये देवानावहेन्द्रियमानिनः ॥ १२० ॥**

१. त्वम् – पा० ।

### टीका

अस्य बाह्ये स्फुटत्वादध्यात्मं व्याख्याति त्वत्पूजेति। पुनातीति पावकः। हे पावकाग्ने ! दीदिवः स त्वन्नोऽस्मदीयं यज्ञं नः हविश्च प्रति त्वत्पूजारूपयज्ञादिविषये तत्सिद्ध्यर्थमिति यावत्। इह शरीरे देवानिन्द्रियाभिमानिन उपावह विशेषतः सन्निहितान्कुरु ॥ १२० ॥

### टिप्पणी

अस्य बाह्य इति। अस्य ऋग्गतपदसमुदायस्य प्रसिद्धयज्ञादिरूपार्थे स्पष्टत्वादित्यर्थः। यद्वा अस्य ऋगर्थस्येत्यर्थः। दीदिव इति। देदीप्यमान इत्यर्थः। दीव्यतेर्यङ् लुगन्तादिकारप्रत्ययः राजन्तमध्वराणामित्यस्यामृचि भाष्यटीकयोरेवमेव दीदिवशब्दव्याख्यानादिति ज्ञेयम्। तत्सिद्ध्यर्थमिति। भगवत्पूजारूपयज्ञादिसिद्ध्यर्थमित्यर्थः ॥ १२० ॥

### मंत्रः – १२१

(अ.१, सू.१२, मं.११)

**स नः स्तवान आ भर गायत्रेण नवीयसा।**
**रयिं वीरवतीमिषम् ॥**

### पदपाठः

**सः। नः। स्तवानः। आ। भर। गायत्रेण।**
**नवीयसा। रयिम्। वीरऽवतीम्। इषम् ॥**

### भाष्यम्

**गायत्रेण स्तूयमानो दृश्यमानेन नो रयिम्।**
**पुत्रयुक्तामिषं चैव वीर्ययुक्तामथावह ॥ १२१ ॥**

टीका

हे अग्ने ! नवीयसा अतिनूतनेन गायत्रेण साम्नाम् अपौरुषेयत्वाद्वेदस्य इदानीमेव दृश्यमानेन व्यज्यमानेन स्तवानः स्तूयमानः स त्वन्नोऽस्मभ्यं रयिं वित्तं वीरवतीं पुत्रयुक्ताम् अथवा वीरं वीर्यं तद्युक्तामिषमन्नं चाभर आवह देहीति यावत् ॥ १२१ ॥

टिप्पणी

नवायसेत्यत्र नवशब्दादीयसून्प्रत्यय इत्युपेत्य तदर्थं दर्शयति **अतिनूतनेनेति**। तथैव व्याख्याने कर्तव्ये व्यज्यमानार्थकेन दृश्यमानेति पदेन व्याख्यानं किमर्थं भाष्ये क्रियत इत्यत आह **अपौरुषेयत्वाद्वेदस्येति**। भाष्ये भावप्राधान्येन वीरशब्दो वीर्यपरतया व्याख्यात इत्युपेत्य योजनान्तरमाह **अथवेति**॥ १२१ ॥

मंत्रः – १२२

(अ.१, सू.१२, मं.१२)

**अग्ने॑ शु॒क्रेण॑ शो॒चिषा॒ विश्वा॑भिर्दे॒वहू॑तिभिः ।**
**इ॒मं स्तोमं॑ जुषस्व नः ॥**

पदपाठः

अग्ने॑ । शु॒क्रेण॑ । शो॒चिषा॑ । विश्वा॑भिः ।
दे॒वहू॑तिऽभिः । इ॒मम् । स्तोम॑म् । जु॒षस्व॒ । नः॒ ॥

भाष्यम्

**ज्वलता तेजसा विश्वदेवाह्वानैर्वृणु स्तुतिम् ॥ १२२ ॥**

### टीका

हे अग्ने ! शुक्रेण शुभ्रेण ज्वलतेति यावत् । शोचिषा तेजसा युक्तस्त्वं विश्वाभिः सर्वाभिर्देवहूतिभिर्देवाह्वानैः सह नोऽस्माकमिमं स्तोमं स्तुतिं जुषस्व वृणु ॥ १२२ ॥

### टिप्पणी

अग्ने शुक्रेण देवाह्वानै सहेति । त्वमेव देवाह्वानमपि कृत्वा इमं स्तोमं जुषस्वेत्यर्थः ॥ १२२ ॥

## सूक्तम् – १३

द्वादशर्चम् । मेधातिथिः काण्वः ।
आप्रीसूक्तं (अग्निरूपा देवताः प्रत्यृचं भिन्नाः) १ इध्मः समिद्धोऽग्निर्वा,
२ तनीनपात्, ३ नराशंसः, ४ इळः, ५ बर्हिः, ६ द्वारो देवीः,
७ नक्ता उषा च देव्यौ, प्रचेतसौ दैव्यौ होतारौ,
९ तिस्रो देव्यः सरस्वतीळाभारत्यः, १० त्वष्टा,
११ वनस्पतिः, १२ स्वाहाकृतयः । गायत्री ।

### मंत्रः – १२३

(अ.१, सू.१३, मं.१)

**सुसंमिद्धो न आ वह देवाँ अग्ने हविष्मते ।**
**होतः पावक यक्षि च ॥**

### पदपाठः

सुऽसंमिद्धः । नः । आ । वह । देवान् । अग्ने ।
हविष्मते । होतरिति । पावक । यक्षि । च ॥

**टीका**

**हे अग्ने ! नवीयसा अतिनूतनेन गायत्रेण साम्नाम् अपौरुषेयत्वाद्वेदस्य इदानीमेव दृश्यमानेन व्यज्यमानेन स्तवानः स्तूयमानः स त्वन्नोऽस्मभ्यं रयिं वित्तं वीरवतीं पुत्रयुक्ताम् अथवा वीरं वीर्यं तद्युक्तामिषमन्नं चाभर आवह देहीति यावत् ॥ १२१ ॥**

**टिप्पणी**

नवायसेत्यत्र नवशब्दादीयसून्प्रत्यय इत्युपेत्य तदर्थं दर्शयति **अतिनूतनेनेति**। तथैव व्याख्याने कर्तव्ये व्यज्यमानार्थकेन दृश्यमानेति पदेन व्याख्यानं किमर्थं भाष्ये क्रियत इत्यत आह **अपौरुषेयत्वाद्वेदस्येति**। भाष्ये भावप्राधान्येन वीरशब्दो वीर्यपरतया व्याख्यात इत्युपेत्य योजनान्तरमाह **अथवेति**॥ १२१ ॥

**मंत्रः – १२२**

(अ.१, सू.१२, मं.१२)

**अग्ने॑ शु॒क्रेण॑ शो॒चिषा॒ विश्वा॑भिर्दे॒वहू॑तिभिः ।**
**इ॒मं स्तोमं॑ जुषस्व नः ॥**

**पदपाठः**

अग्ने॑ । शु॒क्रेण॑ । शो॒चिषा॑ । विश्वा॑भिः ।
दे॒वहू॑तिऽभिः । इ॒मम् । स्तोम॑म् । जु॒षस्व॒ । नः॒ ॥

**भाष्यम्**

**ज्वलता तेजसा विश्वदेवाह्वानैर्वृणु स्तुतिम् ॥ १२२ ॥**

### टीका

हे अग्ने ! शुक्रेण शुभ्रेण ज्वलतेति यावत् । शोचिषा तेजसा युक्तस्त्वं विश्वाभिः सर्वाभिर्देवहूतिभिर्देवाह्वानैः सह नोऽस्माकमिमं स्तोमं स्तुतिं जुषस्व वृणु ॥ १२२ ॥

### टिप्पणी

**अग्ने शुक्रेण देवाह्वानै सहेति** । त्वमेव देवाह्वानमपि कृत्वा इमं स्तोमं जुषस्वेत्यर्थः ॥ १२२ ॥

## सूक्तम् – १३

द्वादशार्चम् । मेधातिथिः काण्वः ।
आप्रीसूक्तं (अग्निरूपा देवताः प्रत्यृचं भिन्नाः) १ इध्मः समिद्धोऽग्निर्वा,
२ तनीनपात्, ३ नराशंसः, ४ इळः, ५ बर्हिः, ६ द्वारो देवीः,
७ नक्ता उषा च देव्यौ, प्रचेतसौ दैव्यौ होतारौ,
९ तिस्रो देव्यः सरस्वतीळाभारत्यः, १० त्वष्टा,
११ वनस्पतिः, १२ स्वाहाकृतयः । गायत्री ।

### मंत्रः – १२३

(अ.१, सू.१३, मं.१)

**सुसंमिद्धो न आ वह देवाँ अंग्ने हविष्मंते ।**
**होतंः पावक यक्षि च ॥**

**पदपाठः**

सुऽसंमिद्धः । नः । आ । वह । देवान् । अग्ने ।
हविष्मंते । होतरिति । पावक । यक्षि । च ॥

### भाष्यम्

**अस्मद्धविष्मते देवानाहूय यज चादरात् ॥ १२३ ॥**

### टीका

**द्वादशर्चमेतदाप्रीसूक्तम्। प्रत्यृचं भिन्नदेवताकम्।**

**हे होतः ! पावकाग्ने सुसमिद्धः अतिसुदीप्तस्त्वं नो हविष्मते अस्मद्धविष्मते अस्मद्यजमानाय तादर्थ्ये चतुर्थी । देवानावह आहूय यक्षि च यज च । देवानावहेति बहुवारमुच्यते । तस्य तात्पर्यमाह आदरादिति ॥ १२३ ॥**

### टिप्पणी

आप्रीसूक्तमिति। अतिशयेन देवताप्रीतिजनकत्वादाप्रीसूक्तमित्युच्यत इत्यर्थः। तथैवानुक्रमणिकादावुक्तेरिति ज्ञेयम्। होतः पावकः अग्ने इति एतानि त्रीणि पदानि पूर्वं व्याख्यातत्वात् अत्र न व्याख्यातानीति ज्ञेयम् ।

ननु "कर्मणा यमभिप्रैति स सम्प्रदानम्" इत्युक्त सम्प्रदानार्थे चतुर्थी सम्प्रदान इति चतुर्थीविधानात् प्रकृते यजमानस्य सम्प्रदानत्वाभावात् कथं हविष्मत इति चतुर्थीत्यत आह तादर्थ्ये चतुर्थीति । तादर्थ्ये चतुर्थी वक्तव्येति वार्तिकोक्तेरिति भावः । यज देवपूजासङ्गतिकरणदानेष्विति धातोर्लोणमध्यमपुरुषैकवचने सिपि छान्दसत्वेन सेर्ह्यपिच्चेति हेरभावे व्यत्ययो बहुलमिति छान्दसव्यत्ययेन शपो लुकि व्रश्चादिना जकारस्य षत्वे षढोः कः सीति कत्वे प्रत्ययसकारस्य षत्वे यक्षीति रूपमित्यभिप्रेत्य योजनामाह यक्षि यज चेति ॥ १२३ ॥

मंत्रः – १२४

(अ.१, सू.१३, मं.२)

**मधुमन्तं तनूनपाद्यज्ञं देवेषु नः कवे ।**
**अद्या कृणुहि वीतये ॥**

**पदपाठः**

**मधुऽमन्तम् । तनूऽनपात् । यज्ञम् । देवेषु । नः ।**
**कवे । अद्य । कृणुहि । वीतये ॥**

**भाष्यम्**

**तनूभ्यो वाक्ततो देवो [१]व्यक्तस्तेन तनूनपात् ॥ १२४ ॥**

**टीका**

तनूनपादित्यग्निविशेषस्य प्रसिद्धं नाम । तद्भिष्णौ योजयति तनूभ्य इति । वाक् जाता तदाश्रयत्वात् ततो वाचो देवः परमेश्वरो व्यक्तो यज्ञ इति तत्पुत्र उच्यते । तेन तनूनपात् नपाच्छब्दस्य पौत्रपर्यायत्वात् । हे कवे ! तनूनपात् ! त्वं वीतये यजमानस्य देवताप्राप्त्यै नोऽस्मदीयं मधुमन्तं मधु स्वादु हविरादि तद्वन्तं यज्ञम् अद्यैव देवेषु कृणुहि कुरु । देवान् प्रापय ॥ १२४ ॥

**टिप्पणी**

वागित्यत्रापेक्षितशेषं पूरयति जातेति । ननु वाचः तनूजातत्वं कथमित्यतस्तदुपपादयति तदाश्रयत्वादिति । तन्वाश्रयत्वादित्यर्थः ।

---

१. ज्ञेयस्तेन – पा० ।

**तत्पुत्र इति** । वाक्पुत्र इत्यर्थः । ननु परमेश्वरस्य तनुजातवाक्पुत्रत्वेऽपि तनूनपात्वं कथमित्यत आह **नपाच्छब्दस्येति** । **हे कव इति** । सर्वज्ञ इत्यर्थः ॥ १२४ ॥

**मंत्रः – १२५**

(अ.१, सू.१३, मं.५)

**नराशंसमिह प्रियमस्मिन्यज्ञ उप ह्वये ।**
**मधुजिह्वं हविष्कृतम् ॥**

**पदपाठः**

नराशंसम् । इह । प्रियम् । अस्मिन् । यज्ञे । उप । ह्वये । मधुऽजिह्वम् । हविःऽकृतम् ॥

**भाष्यम्**

**नरैः स्तुत्यो नराशंसो वह्नेरन्याऽथवा तनूः ॥ १२५ ॥**

**टीका**

नराशंसपदं विष्णावग्नौ च व्याख्याति **नरैरिति** । नरैरित्युपलक्षणम् । शंसु स्तुतौ । नरैराशंस्यत इति नराशंसो विष्णुः । अथवा वह्निरिति वक्तव्ये वह्नेरन्या तनूरिति वदताऽस्मिन्सूक्ते सुसमिद्धादयोऽपि पृथगग्निविशेषा इति सूचितम् । इह सर्वप्राणिनाम् । प्रियं मधुमती जिह्वा यस्य तं मधुजिह्वं हविष्कृतं हविषः कर्तारं नराशंसं अग्निमस्मिन्यज्ञेऽहमुपह्वये आह्वयामि ॥ १२५ ॥

**टिप्पणी**

**नरैरित्युपलक्षणमिति**। नरपदं देवादीनामप्युपलक्षणमित्यर्थः। विष्णो-र्ब्रह्मादिभिर्वन्द्यत्वादिति भावः। **अथवा वह्निरितीति**। अथवा वह्निर्नराशंस इति वक्तव्ये वह्नेरन्या तनूर्नराशंसमिति वदता भाष्यकृता अस्मिन्सूक्ते सुसमिद्धादिशब्दवाच्या अपि पृथगग्निविशेष इति सूचितमित्यर्थः ॥ १२५ ॥

**मंत्रः – १२६**

(अ.१, सू.१३, मं.४)

**अग्ने॑ सु॒खत॑मे॒ रथे॑ दे॒वाँ ई॑ळि॒त आ व॑ह ।**
**असि॑ हो॒ता मनु॑र्हितः ॥**

**पदपाठः**

अग्ने॑ । सु॒खऽत॑मे । रथे॑ । दे॒वान् । ई॒ळि॒तः ।
आ । व॒ह॒ । असि॑ । होता॑ । मनुः॑ऽहितः ॥

**भाष्यम्**

**मनूनां च हितत्वेन मनुर्हित इतीरितः ॥ १२६ ॥**

**टीका**

अत्र मनुर्हितपदं व्याख्याति **मनूनां चेति**। अनेन मनुशब्दपर्यायो मनुस्शब्दोऽयमित्युक्तं भवति। चतुर्थ्यर्थे षष्ठी। हे अग्ने! ईळितः स्तुतस्त्वं सुखतमे रथे सुखतमेनातिशयेन सुखकारिणा रथेन देवानावह यस्मात्त्वं होताऽसि। मनुषां मनुभ्यो देवेभ्यो हितश्चासि। अध्यात्मं देहो रथः। तत्र यथाश्रुतैव सप्तमी ॥ १२६ ॥

## टिप्पणी

अनेनेति। मनुर्हित इत्यत्र मनूनां चेति षष्ठ्यन्ततया मनुशब्दस्य विग्रहकथनेनेत्यर्थः। **मनुस्शब्दोऽयमिति**। मन ज्ञान इति धातोरौणादिके उसिप्रत्यय इकारलोपे मनुस्शब्दनिष्पत्तेरिति भावः। ननु चतुर्थी सम्प्रदान इति सूत्रे हितयोगे चतुर्थी वक्तव्येति वार्तिकेन हितयोगे चतुर्थीविधानाद् भाष्ये मनुभ्य इति वक्तव्ये मनूनां चेति कथमुक्तमित्यत आह **चतुर्थ्यर्थे षष्ठीति**।

सुखतमरथे इत्यत्र सप्तमी व्यत्ययेन तृतीयार्थे वर्तत इत्यभिप्रेत्य योजनामाह **सुखतमेनेति**। **मनुष्यमिति**। ज्ञानिनमित्यर्थः। मनूनां चेत्यत्र श्रुतचशब्दः श्रुतशब्देनान्वेतीत्यभिप्रेत्य योजनामाह **हितश्चासीति**। **तत्रेति**। अध्यात्मपक्ष इत्यर्थः। **यथाश्रुतैवेति**। सुखतमे रथे देहे देवान् इन्द्रियाभिमानिन आवहेति। सप्तम्या अधिकरणत्वमेवार्थो न तु पूर्वोक्तरीत्या व्यत्ययेन करणत्वमर्थ इति भावः॥ १२६॥

**मंत्रः – १२७**

(अ.१, सू.१३, मं.५)

**स्तृणीत बर्हिरानुषग्घृतपृष्ठं मनीषिणः।**
**यत्रामृतस्य चक्षणम्॥**

**पदपाठः**

**स्तृणीत। बर्हिः। आनुषक्। घृतऽपृष्ठम्।**
**मनीषिणः। यत्र। अमृतस्य। चक्षणम्॥**

भाष्यम्

**आनुषक् सर्वतो देवस्थानं बर्हिः स्तृणीत च ।**
**शुद्धस्य विष्णोर्यत्स्थानं घृतपृष्ठं हि तन्मनः ।**
**यत्र स्याद्दर्शनं विष्णोर्नित्यामरणधर्मिणः ॥ १२७ ॥**

टीका

हे मनीषिणो ! बुद्धिमन्तः ऋत्विजो यत्र स्थानेऽमृतस्य देवतासमुदायस्य चक्षणं दर्शनं भवति । चक्षिङः ख्याञभावश्छान्दसः । छन्दस्युभयथेति वा प्रकृत्यन्तरं वा । तद्घृतपृष्टं घृतस्थानात्पश्चिमतो वर्तमानं देवस्थानं देवस्थाने आनुषक् सर्वतो बर्हिः । स्तृणीत विस्तारयत । अध्यात्मं व्याचष्टे शुद्धस्येति । घृतः शुद्धो विष्णुः पृष्ठे यस्योपरि तद्घृतपृष्ठमित्यर्थः । यत्र मनसि । अत्र बृहत्त्वाद्बर्हिर्वेदवाक्यम् । तत् स्तृणीतेति तेन मनः संयोजयत । अत्र बर्हिर्देवता ॥ १२७ ॥

टिप्पणी

चक्षणं दर्शनमिति । चक्षिङ् व्यक्तायां वाचीति धातुगणे पाठेऽपि धातूनामनेकार्थत्वाद् दर्शनार्थकत्वमत्र ग्रहणमिति भावः । ननु चक्षिङः भावार्थे ल्युट्प्रत्यय अनादेशो तस्मिन् परतः चक्षिङः ख्याञिति सूत्रविहितः ख्याञादेशः कस्मान्न भवतीत्यत आह चक्षिङः ख्याञभावः छान्दस इति । तस्मिन् सूत्रे बहुलं संज्ञाछन्दसोरिति वक्तव्यमित्युक्तवार्तिकेन वा असनयोश्च प्रतिषेधो वक्तव्य इत्युक्तवार्तिकेन वा ख्याञादेशाभावो ज्ञेय इति भावः । उदाहृतं च वृत्त्यादौ असि प्रत्यय अनप्रत्यये च नृचक्षा रक्षः विचक्षण इति । धातूनामनेकार्थत्वादेव नृचक्षा रक्ष इत्यत्र हिंसार्थो धातुरित्युक्तं वृत्ताविति ज्ञेयम् ।

छन्दस्युभयथेति वेति । आर्धधातुकं शेष इत्यार्धधातुकसंज्ञाधिकारे छन्दस्युभयथेति सूत्रे वृत्त्यादौ छन्दसि विषये उभयथा सार्वधातुकमार्धधातुकं च भवतीत्युक्तत्वेन प्रकृते अनप्रत्ययस्यार्धधातुकसंज्ञाभावात् सार्वधातुक इत्यधिकारविहितः ख्याञादेशो न प्रवर्तत इति भावः । तथा च चक्षिङो ङकारेकारयोर्लोपे प्रत्ययनकारस्य णत्वे सति विचक्षणमिति रूपमिति ज्ञेयम् ।

प्रकृत्यन्तरं चेति । चक्ष दर्शन इति दर्शनार्थकतया चक्षधातोर्विवक्षितत्वेन तस्य ख्याञादेशाप्राप्तेरिति भावः । उणादयो बहुलमिति सूत्रे वृत्त्यादौ प्रत्ययतः प्रकृतेश्च तदूह्यम् । संज्ञासु धातुरूपाणि प्रत्ययाश्च ततः परे । कार्याद् विद्यादनुबन्धादेतच्छास्त्रमुणादिषु इति प्रकृतिप्रत्ययादीनां प्रयोगानुसारेणोह्यत्वोक्तेरिति ज्ञेयम् । अस्यामृचि देवतायाः स्पष्टप्रतीतेस्तामाह अत्र बर्हिर्देवतेति ॥ १२७ ॥

**मंत्रः – १२८**

(अ.१, सू.१३, मं.६)

**वि श्रंयन्तामृतावृधो द्वारो देवीरसश्चतः ।**
**अद्या नूनं च यष्टवे ॥**

**पदपाठः**

**वि । श्रयन्ताम् । ऋतऽवृधः । द्वारः । देवीः ।**
**असश्चतः । अद्य । नूनम् । च । यष्टवे ॥**

### भाष्यम्

**ऋतरूपेण हरिणा समृद्धा या ऋतावृधः ।**
**द्वारो देव्यः श्रियो दास्यः श्रयन्तामिह नो मखे ।**
**मानसे बाह्ययज्ञे वा ह्यसङ्गत्वादसश्चतः ।**
**अद्याहनि तथा नूनमद्यैव यजनार्थतः ।**
**द्वारभूतः स भगवानपि साक्षान्मुमुक्षतः ।**
**स्त्रीरूपश्च सः ॥ १२८ ॥**

### टीका

ऋतरूपेण यथार्थज्ञानरूपेण हरिणा वृधो वृद्धाः समृद्धा यास्ता ऋतवृधः । असङ्गत्वादसश्चतः सश्चतिः सङ्गार्थः । ततः क्विप् । द्वारोदेवीर्द्वारो देव्यः श्रियो दास्योऽद्यास्मिन्नहनि तथा नूनं निश्चितम् । अद्यैवेति यावत् । यष्टवे यष्टुम् । यजनार्थतः यजनं चासावर्थः प्रयोजनं च तस्मै विश्रयन्तां नो मानसे मखे बाह्ययज्ञे वा वर्तन्ताम् । भगवद्विषये योजयति **द्वारभूत** इति । मुमुक्षतः साक्षाद्वारभूत इत्यनेन मोक्षस्य मुख्यसाधनमित्युक्तं भवति । देवशब्दः प्रागेव व्याख्यातः । तस्माद्भगवानपि द्वारो देव्यः । कथं स्त्रीलिङ्गादिप्रयोगः स्त्रीरूपश्च सः । चशब्दाद्बहुरूपश्च । ततो बहुवचनं च युज्यते । ऋतवृध इति नित्यवृद्ध इति प्रागेव व्याख्यातम् ॥ १२८ ॥

### टिप्पणी

सश्चतिरिति । सश्चधातुः सङ्गार्थक इत्यर्थः । ततः क्विबिति । सश्चधातो क्विप्प्रत्यये तस्य सर्वापहारिलोपे धातोरदन्तत्वेन ह्रस्वस्य पिति कृति

तुगिति तुगागमे वा छान्दसत्वेनातगागमे वा सति सश्चत्विति शब्दनिष्पत्तौ नञ्समासे प्रथमाबहुवचने असश्चत इति रूपमिति भावः ।

ऋचि नूनं चेति श्रुतचशब्दस्तथाशब्दार्थतया भाष्ये व्याख्यायत इत्यन्वयलब्धपर्यवसितार्थकथनायाद्यैवेत्युक्तमित्यभिप्रेत्य योजनामाह तथेति ।

मुमुक्षत इति । मोक्षमिच्छतः पुरुषस्येत्यर्थः । भगवतो द्वारत्वोक्त्या तस्यामुख्यसाधनत्वं प्रतीयते । अतस्तां निवारयितुं भाष्ये साक्षादित्युक्तमित्यभिप्रेत्य तदुक्तिलब्धमर्थं दर्शयति साक्षात् द्वारभूतमित्यनेनेति ।
। यज्ञस्य देवमृत्विजमित्यत्र व्याख्यात इत्यर्थः । स्त्रीलिङ्गादिप्रयोग इति । आदिपदेन बहुवचनप्रयोगो ग्राह्यः । प्रागेव व्याख्यातमिति । ऋतेन मित्रावरुणा वृतावित्यस्यामृचि नित्यवृद्धः स भगवानिति भाष्ये ऋतशब्दस्य नित्यपर्यायत्वमुपेत्य ऋतवृधपदं व्याख्यातमित्यर्थः ।

विवृतं च तत्र टीकायामृतमनुगतं सर्वकाल इति ऋतशब्दो नित्यपर्याय इति । अत्र ऋतवृध इति पदस्य वृधु वृद्धाविति धातोः क्विबन्ततया निष्पन्नस्य बहुवचनान्तत्वात् तदनुसारेण टीकायां नित्यवृद्धा इतीति बहुवचनान्तानुवादः कृत इति ज्ञेयम् । ऋतावृद्ध इत्यत्र तु संहितायां दैर्घ्यस्य पदे ह्रस्वत्वस्य तात्पर्यं तत्रैव भाष्यटीकयोरुक्तरीत्या ध्येयम् । विस्तरस्तु ऋगर्थमञ्जर्यां द्रष्टव्यः ॥ १२८ ॥

**मंत्रः – १२९**

(अ.१, सू.१३, मं.७)

**नक्तोषासा सुपेशसाऽस्मिन्यज्ञ उप ह्वये ।**
**इदं नो बर्हिरासदे ॥**

**पदपाठः**

**नक्तोषसा । सुऽपेशसा । अस्मिन् । यज्ञे । उप । ह्वये । इदम् । नः । बर्हिः । आऽसदे ॥**

**भाष्यम्**

**नक्ता स्यान्नाक्तो यस्मात् स सर्वतः ।**
**उषाः प्रकाशरूपत्वात् सुभद्रे ते उपह्वये ।**
**अस्मिन् बर्हिषि संस्थित्यै ॥ १२९ ॥**

**टीका**

रात्रिदेवता उषा इत्यपररात्रिकृज्ज्योतिदेवतेति प्रसिद्धम् । शब्दद्वयं विष्णौ योजयति **नक्तेति** । यस्मात्स विष्णुः सर्वेण पापादिना नाक्तो न सङ्गतस्तस्मान्नक्ता स्यात् । अञ्जतेः क्तः । नसमासः (नञ्समासः) । शकन्ध्वादित्वात्पररूपम् । स्त्रीरूपत्वात्स्त्रीलिङ्गत्वमित्युक्तमेव । वश-कान्तावित्यस्मात्कसुन् प्रकाशरूपत्वादुषाः अहं सुपेशसौ सुरूपे सुभद्रे नक्ता च उषाश्च ते नक्तोषसौ नोऽस्माकमस्मिन्यज्ञे इदं बर्हिरस्मिन्बर्हिषि आसदे आसदनाय सम्पदादित्वात्क्विप् । संस्थित्यै उपह्वये उपाह्वयामि ॥ १२९ ॥

**टिप्पणी**

प्रसिद्धमिति । प्रसिद्धत्वादेव तत्र निर्वचनापेक्षा नास्तीति भावः । पापादिनेति । आदिपदेन ह्रस्वादेर्ग्रहः । अञ्जतेरिति । इक्श्तिपौ धातुनिर्देशे वक्तव्यावित्युक्तेः श्तिप्रत्ययस्य धातुनिर्देशमात्रार्थकत्वेन कर्त्रर्थकत्वा-भावात् कर्तरि शबित्यतः कर्तरीत्यनुवर्त्य कर्तृवाचीनि सार्वधातुके परतः

विहितस्य श्नविकरणस्याप्राप्तेः । सुखमुखोच्चारणार्थमाकारस्योच्चरितत्वे-नाञ्जतेरिति निर्देश उपपन्न इति ज्ञेयम् । तेन अनक्तेरिति निर्देशः कर्तव्यो न त्वञ्जतेरिति निर्देश इति वा न चोद्यावकाश इति ज्ञेयम् । अञ्जेक्त इति पाठे तु इक्प्रत्ययेन निर्देश इति ज्ञेयम् । अस्मिन् पक्षे रञ्जेश्च भञ्जेश्च चिणीत्यादाविवानुकरणशब्दत्वादनिदितामिति नलोपे नास्तीति ज्ञेयम् ।

तथा च अञ्जू व्यक्तिमृक्षणकान्तिगतिष्वति श्नम्विकरणे पठिताद्धातोर्भवि क्तप्रत्यये ककारलोपे धातूकारस्य लोपे अनिदितामिति नकारलोपे जकारस्य कुत्वेन गकारे तस्य चर्त्वेन ककारे स्वरति सूति सूयति धूञूदितो वेति विकल्पितेट्वेन यस्य विभाषेति इट् प्रतिषेधे अक्तशब्दनिष्पत्तौ नञ्समासे सति न अक्तेति स्थितौ सवर्णदीर्घापवादकतया शकन्ध्वादिषु पररूपं वाच्यमिति पररूपत्वे च सति नञ्शब्दनिष्पत्तिरिति भावः ।

भाष्यटीकयोर्नाक्त इति निर्देशस्तु सवर्णदीर्घाश्रयणेनेति ज्ञेयम् । ननु नञ्समासे सति नलोपो नञ इति नकारलोपे तस्मान्नुडचीति नुडागमे सत्यनक्तेति निर्देशः स्यात् । कथं नक्तेति निर्देश इति चेदुच्यते— स्त्रैणार्थ इत्यत्र स्त्रीपुंसाभ्यां नञ्स्नञौ भवनादिति सूत्रप्राप्तस्य नञ्प्रत्ययस्य नलोपाभावार्थं नलोपो नञ इति सूत्रे रात्रेः कृति विभाषेति सूत्रादनुवृत्ताया विभाषायाः व्यवस्थितविभाषात्वस्य न्यासकारेणोक्तत्वात् प्रकृतेऽपि नलोपा-भावाद्युपपत्तेरिति । यद्वा नञ्समास इति टीकावाक्यस्य नञर्थकनशब्देन समास इत्यर्थो ज्ञेयः । तथा च नैकध्यं नैकध्येत्यादाविव अमानो नाः प्रतिषेध इति निषेधार्थकेन नशब्देन सुप्सुपेति समासे पूर्ववत्पररूपत्वे सति नक्तेति रूपमिति ज्ञेयम् । विस्तृतमेतच्चन्द्रिकायां, तट्टीकायां च नारायणशब्द-व्याख्यावसर इति तत्रैवानुसन्धेयम् ।

वशाकान्तावित्यस्माद्धातोरौणादिके कसुन्प्रत्यये ककारनकारोकाराणां लोपे ग्रहिज्येति सम्प्रसारणे पूर्वरूपत्वे व्रश्चादिना शकारस्य षत्वे उषस्-शब्दनिष्पत्तिरिति भावः ।

**सम्पदादित्वादिति** । स्त्रियां क्तिन्निति सूत्रे सम्पदादिभ्यः क्विब्वक्तव्य इति वार्तिकेन सम्पद् विपदित्यादिरूपसिद्ध्यर्थं क्विपो विधानात् प्रकृते-ऽऽङ्पूर्वात् षद्लृ विशरण गत्यवसादनेष्विति धातोः भावे क्विप्प्रत्यये तस्य सर्वापहारिलोपे धातुषकारस्य सत्वे आसद्शब्दनिष्पत्तौ चतुर्थ्येकवचने आसद इति रूपमिति भावः ॥ १२९ ॥

**मंत्रः – १३०**

(अ.१, सू.१३, मं.८)

**ता सुजिह्वा उप ह्वये होतारा दैव्या कवी ।**
**यज्ञं नो यक्षतामिमम् ॥**

**पदपाठः**

**ता । सुऽजिह्वौ । उप । ह्वये । होतारा । दैव्या ।**
**कवी इति । यज्ञम् । नः । यक्षताम् । इमम् ॥**

**भाष्यम्**

**होतारौ देवगावपि ।**
**मथ्यमानोऽपरश्चैव वह्नी तद्वोऽथवा हरिः ।**
**आत्मान्तरात्मरूपेण द्विरूपो वा व्यवस्थितः ।**
**देवेषु यजतां यज्ञमस्मदीयमिमं सदा ॥ १३० ॥**

### टीका

**अत्र दैव्यौ होतारौ नाम कावित्यत आह होताराविति । अपिपदेनोपह्वय इत्यनेनान्वयं सूचयति । मथ्यमानो गार्हपत्यः । अपरः आहवनीयः । तद्गो वह्निद्वयगतः द्विरूपो व्यवस्थितोऽध्यात्मं शोभना जिह्वा ययोस्तौ सुजिह्वौ कवी दैव्यौ देवगौ दूतत्वेन देवसम्बन्धिनौ होतारौ वह्नी उपह्वये आगत्य च नः इममस्मदीयं यज्ञं यक्षतां देवेषु सदा यजतां प्रयच्छताम् ॥ १३० ॥**

### टिप्पणी

अपिपदेनेति । न केवलं पूर्वोक्तेन नक्तोषसा उपह्वये किन्तु होतारो देवगावपि उपह्वय इत्येवमन्वयं सूचयतीत्यर्थः । केचित्तु न केवलं यजतामित्यनेन सम्बन्धः किन्तूपह्वय इत्यनेनापि सम्बन्ध इति वर्णयन्ति । तद्गतोऽथवा हरितरिति वह्निद्वयगतरूपद्वयस्य वह्नयोरेवाधिकरणत्वकथनवदात्मान्तरात्मरूपेण द्विरूपस्य हरेरधिकरणानुक्तेः रूपद्वयस्य कुत्र व्यवस्थितत्वमित्याकाङ्क्षायां भाष्यपदसंयोजनपूर्वकं तत्रापेक्षितशेषं पूरयति **द्विरूपो व्यवस्थितोऽध्यात्ममिति** । विभक्त्यर्थेऽव्ययीभावसमासः । शरीर इत्यर्थः । गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् इत्यधिकरणभाष्यादावुक्तप्रमाणैः द्विरूपस्य हरेः सर्वप्राणिहृदयगुहास्थत्वं ज्ञेयम् । ऋचं व्याचष्टे **शोभनेत्यादिना** । **कवीति** । सर्वज्ञावित्यर्थः । **देवसम्बन्धिनाविति** । देवाद्यञञौ वक्तव्याविति वार्तिकेन प्राग्दीव्यतीयेष्वर्थेषु देवशब्दाद्यञ्प्रत्ययस्याञ्प्रत्ययस्य च विधानेन प्रकृते देवस्येमाविति सम्बन्धार्थे देवशब्दाद्यञ्प्रत्यये ञकारलोपे आदिवृद्धौ यस्येति चेत्यकारलोपे दैव्यशब्दनिष्पत्तेस्तस्य देवसम्बन्ध्यर्थपरत्वमिति भावः । सम्बन्धविवरणं दूतत्वेनेति कृतमिति ज्ञेयम् ।

' होताराविति । होतारं रत्नधातममित्यत्रोक्तरीत्या होतृशब्दार्थो ज्ञेयः । यजतेर्लोटि प्रथमपुरुषद्विवचने तसि लोटो लङ्वदिति तस्य ङिद्वद्भावेन तामादेशो शब्विकरणे तस्मिन्परतः सिब्बहुलं लोटीति बहुलग्रहणात् लोट्यपि सिपि सति व्रश्चादिना जकारस्य षत्वे षढोः कः सीति षस्य कत्वे आदेशप्रत्यययोरिति सकारस्य षत्वे च यक्षतामिति रूपमित्यभिप्रेत्य योजनामाह यक्षतां वेदेषु सदा यजतामिति । यजिरत्र दानार्थ इत्यभिप्रेत्याह यच्छतामिति । दाण दान इति धातोर्लोटि प्रथमपुरुषद्विवचने शब्विकरणे पाघ्रेत्यादिना यच्छादेशे प्रेत्युपसर्गपूर्वकत्वे प्रयच्छतामिति रूपमिति ज्ञेयम् ॥ १३० ॥

**मंत्रः – १३१**

(अ.१, सू.१३, मं.९)

**इळा सरस्वती मही तिस्रो देवीर्मयोभुवः ।**
**बर्हिः सीदन्त्वस्रिधः ॥**

**पदपाठः**

इळा । सरस्वती । मही । तिस्रः । देवीः ।
मयःऽभुवः । बर्हिः । सीदन्तु । अस्रिधः ॥

**भाष्यम्**

**इळेड्यत्वाद्धरिः श्रीर्वा भूरूपा सैव[1] चापरा ।**
**मही तु भारती नाम वायव्या ब्रह्मणोऽपरा ।**
**तद्गतस्तादृशै रूपैः पृथक्स्थो वा हरिस्तथा ॥ १३१ ॥**

---

१. चैव सापरा – पा० ।

## टीका

सरस्वतीशब्दस्य प्राक् भगवद्विषयतया व्याख्यातत्वान्महती तन्मही चेति महीशब्दस्यापि व्याख्यास्यमानत्वादिळाशब्दं व्याचष्टे **इळेति**। ईड स्तुतौ कर्मण्यकारप्रत्ययः धातोर्ह्रस्वता च। देवतान्तर-विषयतया चेळादिशब्दत्रयं व्याख्याति **श्रीर्वेति**। श्रीर्वा इळा ईड्य-त्वादेव अपरा चेळा सरस्वतीभ्यामन्या मही च सा श्रीरेव तत्कथम्। भूरूपा। महीशब्देन भारती च विवक्षितेत्याह **मही त्विति**। भारती च महीनामेति तुशब्दश्चशब्दार्थः। इळाव्यावृत्त्यर्थो वा। भारतीशब्दस्य ब्रह्माण्यामपि प्रसिद्धत्वाद्विवेकार्थमाह **वायव्येति**। वायुभार्या। ब्रह्मणो भार्याऽपरा इळामहीभ्यामन्या सरस्वतीत्यर्थः। स्त्रीलिङ्गं बहुवचनं च हरौ घटयति **तद्वत इति**। लक्ष्म्यादिगतः। तादृशैस्त्र्याकारैः तथा स्त्रीलिङ्गबहुवचनविषय इत्यर्थः। इळासरस्वतीमहीत्येता मयोभुवः सुखाश्रयभूता अस्त्रिधोऽविनाशास्तिस्रो देवीर्देव्यो बर्हिः बर्हिषि सीदन्तु उपविशन्तु॥ १३१॥

## टिप्पणी

भाष्ये सरस्वतीशब्दमहीशब्दयोः व्याख्यामकृत्वा इलाशब्दमात्रस्य व्याख्याने किं बीजमित्याकाङ्क्षायां तद्दर्शयति **सरस्वतीशब्दस्येति**। पावका नः सरस्वतीत्यत्र भगवद्विषयतया व्याख्यातत्वादित्यर्थः। महती तन्महतीति द्वितीयाध्याये कस्य नूनमित्यस्यामृचि भाष्ये सा चादितिर्महती तन्महती चेति महीशब्दस्य भगवद्विषयतया व्याख्यास्यमानत्वादित्यर्थः।

विवृतं च टीकायां यस्मान्महती तस्मान्मही च स्त्रीरूपः स इत्यर्थः इति। यद्यपि [1]एवा ह्यस्य सूनृतेत्यस्यामृचि भाष्ये वेदेता महती तथेति तथेति महीशब्दो व्याख्यातः, तथापि तत्र एवमेवास्य वाणी चेति भगवत्सम्बन्धी-

1. ७८।

वाणीपरतया व्याख्यानेन भगवत्परत्वेनाव्याख्यानादित्यभिप्रेत्य व्याख्यास्यमानत्वादित्युक्तमिति ज्ञेयम् । द्वितीयाध्याये कस्य नूनमित्यतः पूर्वभाविन्यां महीद्यौः पृथिवी च नेत्यस्यामृचि भाष्ये स्वयं वा भगवानिति महीशब्दस्य भगवत्परतया व्याख्यानेऽपि तत्र महीशब्दनिर्वचनानुक्तेः कस्य नूनमित्यत्रैव निरुच्यमानत्वात् तत्रत्यभाष्यवचनमेव प्रदर्शितमिति ज्ञेयम् ।

ईड स्तुताविति धातोः कर्मण्यणादिक अकारप्रत्यये धातोरीकारस्य ह्रस्वत्वे डस्य ळत्वे स्त्रियां टापि सति इळाशब्दनिष्पत्तिरिति भावः । सैव चेत्यत्र चशब्दो भिन्नक्रम इत्युपेत्य योजनामाह **अपरा चेति** । **श्रीरेवेति** । एवशब्दइळामहीशब्दार्थयोः श्रीभूदेव्योरभेदसूचकस्सन्महीशब्दस्यान्यपरत्वव्यावृत्त्यर्थः । भारत्या अपि महीशब्दार्थतया व्याख्यानादिति ज्ञेयम् । **तत्कथमिति** । श्रियः केन रूपेण महीशब्दार्थत्वमित्याकाङ्क्षायां भूरूपेणेति प्रतिपादनाय भाष्ये भूरूपेणेत्युक्तमिति भावः ।

**वायुभार्येति** । यद्यपि सास्यदेवतेति सूत्रे वृत्त्यादौ देयस्य हविरादेः स्वामिनी देवतेत्युक्तत्वेन तादृशदेवतार्थे विहितस्य वाय्वृतुपितृषसो यदिति यत्प्रत्ययस्याप्राप्तिस्तथापि तद्धिता इति बहुवचन अर्थान्तरेऽपि प्रत्ययान्तस्वज्ञापितत्वेन प्रकृते वायोर्भार्या इति भार्याभर्तृभावलक्षणसम्बन्धार्थे वायोरिति षष्ठ्यन्तात् यत्प्रत्यये यकारप्रत्यये वा सति प्रतिपदिकसंज्ञायां सुपो धातुप्रातिपदिकयोरिति षष्ठ्येकवचनस्य लुकि प्रत्यय तकारलोपे यचि भमिति भसंज्ञायाम् ओर्गुण इति गुणे इत्यवादेशे स्त्रियां टापि वायव्येति रूपमिति भावः । यद्वा वायव्यशब्दस्य देवतासम्बन्धार्थकत्वेऽपि सास्यदेवतेत्यधिकारे सोमाट्यणिति सूत्रे दुर्घटवृत्तापेतयुपाप्सि निवेशसौम्य इति माघश्लोकादौ विद्यमाने सौम्यशब्दे देवतार्थकप्यण्प्रत्ययस्य कथं प्राप्तिरित्याशङ्क्य देवता हि यथा तृप्तिहेतुस्तथा सौम्यशब्दितसुकुमारोऽपि

तृप्तिहेतुत्वादुपचारेण सौम्य इत्युच्यत इति समाधानस्योक्तेः प्रकृतेऽपि वायुशब्दितहविरादेस्तृप्तिहेतुत्वाद् वायुभार्याऽपि तृप्तिहेतुरित्युपचाराद् वायव्यपदेशेनोच्यत इति समाधानं द्रष्टव्यम् । अत एव वायुसम्बन्धिनी-त्यनुक्त्वा वायुभार्येत्युक्तमिति ज्ञेयम् ।

भाष्ये ब्रह्मण इत्यनन्तरं भार्यापदमध्याहृत्य योजनामाह **ब्रह्मणो भार्याऽपरेति** । सरस्वतीशब्दस्य महीशब्दात्पूर्वभावित्वेऽपि महीशब्दे वक्तव्यविशेषसद्भावेनाभ्यर्हितत्वान्महीशब्दव्याख्यानं प्रथमतः कृतमिति ज्ञेयम् । **ऋचं व्याचष्टेत्यादिना** ॥ १३१ ॥

**मंत्रः – १३२**

(अ.१, सू.१३, मं.१०)

**इह त्वष्टारमग्रियं विश्वरूपमुप ह्वये ।**
**अस्माकमस्तु केवलः ॥**

**पदपाठः**

इह । त्वष्टारम् । अग्रियम् । विश्वऽरूपम् । उप ।
ह्वये । अस्माकम् । अस्तु । केवलः ॥

**भाष्यम्**

**त्वष्टा तेजस्त्वतो विष्णुर्बलत्वाद्वा समीरितः ।**
**विश्वरूपकरत्वाच्च विश्वरूपोऽथ पूर्तितः ॥ १३२ ॥**

**टीका**

त्वष्टृविश्वरूपशब्दौ भगवति योजयति **त्वष्टेति** । त्विषधातो-र्दीप्तिवद्बलमपि वाच्यं भवतीत्याशयेन बलत्वाद्वेत्युक्तम् । यद्वा त्विष-

**दीप्तावित्यत्रैव दीप्तिपदेन तेजसो बलस्य च ग्रहणम्। त्विषेर्देवताया-मकारश्चोपधाया अनिट्त्वं चेति तृन्। विश्वरूपकरत्वादित्यनेन विश्वानि रूपाणि यस्मादिति निर्वक्ति अथ पूर्तित इति। विश्वं पूर्णं रूपमस्येति। अहमग्रियमग्रे भवं प्रधानं विश्वरूपं त्वष्टारं इह यज्ञे उपह्वये स त्वष्टाऽस्माकं केवलोऽस्तु अस्माकमेव पालयितास्तु॥ १३२॥**

## टिप्पणी

**वाच्यमिति**। अभिधेयमित्यर्थः। धातूनामनेकार्थत्वाद् बलपरतयापि व्याख्यातमिति भावः। **दीप्तिपदेनेति**। यथा वश कान्तावित्यत्र कान्तिशब्दस्य 'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः। एवं चैव हलन्तानां यथा वाचा निशा दिशे'त्यादविच्छार्थकत्वं केतुं कृण्वन्नित्यस्यामृचि समुषद्भिरजा यथा इत्यत्र नक्तोषासेत्यत्र च प्रकाशार्थकत्वमुषद्भिस्संप्र-काशद्भिरित्युषः। प्रकाशरूपत्वादिति भाष्ये व्याख्यानात् तत्र टीकायां वश कान्ताविति धातुनिष्पन्नत्वकथनात् तथा प्रकृतेऽपि दीप्तिः प्रकाशः स च तेजश्शब्दितकान्तिरूपः बलरूपश्चेत्यर्थद्वयस्य धातुगणपाठादेव प्राप्तिरिति भावः।

त्वष्टशब्दस्य त्विषधातुनिष्पन्नत्वप्रकारं दर्शयति **त्विषेरिति**। तृतीयाध्यायस्य द्वितीयपादे नृन्निति सूत्रविहिततृन्प्रकरणे त्विषेर्देवताया-मिकरश्चोपधाया अपि टत्वं चेति वार्तिकम्। अस्यार्थः त्विष दीप्ताविति धातोर्देवतायामर्थे तृन्प्रत्ययो भवति इकारस्याकारो भवति। तृन्प्रत्यय-स्येडागमो न भवतीति। तथा च षकारस्य योगेन तकारस्य ष्टुत्वे त्वष्टशब्दनिष्पत्तिरिति भावः।

ननु सप्तमस्य द्वितीयपादे एकाचुपदेशेऽनुदात्तादिति सूत्रे शिषि पिषि शुष्यति पुष्यति त्विषिमित्यनिट्कारिकायां त्विष धातोरनिट्ककत्वेन

पाठादनिट्कत्वं चेति किमर्थमुक्तमिति चेदुच्यते— एतद्वार्तिकात् पूर्वं पठिततृन्विधौ ऋत्विक्षुचानुपसर्गस्येति वार्तिके पोतेत्यादाहृतत्वेन तस्मिन्नुदाहरणे चेडभावार्थं पूर्वोत्तरपठितवार्तिकशेषत्वेन मध्येऽनिट्त्वं चेत्युक्तमिति समाधानस्य पदमञ्जरीमहाभाष्यादावुक्तेरिति ऋचं व्याचष्टे अहमित्यादिना । अग्रे भवमिति । चतुर्थाध्यायस्य चतुर्थपादे भवेच्छन्दसीत्यधिकारे 'अग्राद्यत्' घच्छौ चेति अग्रशब्दात् घप्रत्ययविधानात् प्रकृते उग्रे भव इत्यर्थे घकारे आयनेयीनीयियः फढखछघां प्रत्ययादीनामित्यनेन इयादेशे अग्रियशब्दनिष्पत्तिरिति भावः ॥ १३२ ॥

**मंत्रः – १३३**

(अ.१, सू.१३, मं.११)

**अव॑ सृजा वनस्पते॒ देव॑ दे॒वेभ्यो॑ ह॒विः ।**
**प्र दा॒तुर॑स्तु॒ चेत॑नम् ॥**

**पदपाठः**

अव॑ । सृ॒ज॒ । व॒न॒स्प॒ते॒ । देव॑ । दे॒वेभ्यः॑ । ह॒विः ।
प्र । दा॒तुः । अ॒स्तु॒ । चेत॑नम् ॥

**भाष्यम्**

**वननीयपतित्वेन वनस्पतिरितीरितः ।**
**ज्ञानं तु चेतनम् ॥ १३३ ॥**

**टीका**

वनस्पतिशब्दं हरौ योजयित्वा चेतनशब्दार्थमाह वननीयेति । वननीयाः सम्भजनीयाः वनतेः कर्मण्यसुन् । वनसां पतिः वनस्पतिः ।

**यद्वा वनोऽकारः । पारस्करप्रभृतित्वात्समासे सुट् । तेन वनानां पतिर्वनस्पतिः । हे वनस्पते ! देव ! त्वं देवेभ्यो हविरवसृज देहि । तेन च प्रदातुर्यजमानस्य चेतनं ज्ञानमस्तु । चिती संज्ञाने भावे ल्युट् ॥ १३३ ॥**

**टिप्पणी**

भाष्यस्य पूर्वोत्तरार्धयोः विषयभेदं दर्शयति **वनस्पतिशब्दमिति** । वनस्पतिचेतनशब्दार्थावाहेत्युक्ते विषयभेदो न दर्शितः स्यादतः हरौ योजयित्वेत्युक्तमिति ज्ञेयम् । **वनतेरिति** । वन सम्भक्ताविति धातोः कर्मण्यौणादिकेऽसुन्प्रत्यये सति नकारस्योकारस्य च लोपे सति वन-शब्दनिष्पत्तिरिति भावः । **तत इति** । वनतेः कर्मण्यकारप्रत्यय इत्यर्थः । अस्मिन् पक्षे सकारस्य कथं प्राप्तिरित्यत आह **पारस्करप्रभृतित्वा-दिति** ॥ १३३ ॥

॥ श्रीकृष्णार्पणमस्तु ॥

**मंत्रः – १३४**

(अ.१, सू.१३, मं.१२)

**स्वाहा॑ य॒ज्ञं कृ॑णोत॒नेन्द्रा॑य॒ यज्व॑नो गृ॒हे ।**
**तत्र॑ दे॒वाँ उप॑ ह्वये ॥**

**पदपाठः**

**स्वाहा॑ । य॒ज्ञम् । कृ॒णो॒त॒न॒ । इन्द्रा॑य ।**
**यज्व॑नः । गृ॒हे । तत्र॑ । दे॒वान् । उप॑ । ह्व॒ये ॥**

भाष्यम्

स्वाहा [1]स्वभागगतिमान् स्मृतः ।
अव्ययत्वादमोषश्च[2] ॥ १३४ ॥

टीका

स्वाहाशब्दं भगवति त्रेधा व्याचष्टे स्वाहेति । स्वभागं प्रति गतिमानित्यनेन स्वशब्दे कर्मण्युपपदे आङ्पूर्वादोहाग्गतावित्यस्मात्कर्तर्यकारः प्रत्ययः ततः स्त्रियां टाबित्युक्तं भवति । अव्ययत्वाच्च स्वाहेत्यनेन सुष्ठ्वासमन्तान्न हीयत इति व्युत्पादितं भवति । ओहात्त्याग इत्यस्य कर्मणीदं रूपम् । अमोषश्च स्वाहेत्यनेन सुष्ठ्वासमन्तान्न ह्रियत इति । हरतेः कर्मणि डः । स्वाहादेवी यज्वनो यजमानस्य गृहे वर्तमानं यज्ञमिन्द्राय कृणोतन करोतु । इन्द्रं प्रापयत्विति यावत् । उत्तमप्रयाजाख्ये यज्ञे स्वाहा यक्ष्यमाणा न तत्रेन्द्रसम्बन्धोऽस्तीत्यस्मिन्मते इन्द्राय इन्द्रस्य सम्बन्धिनो यज्वनो गृहे यज्ञं कृणोतन प्रवर्तयत्विति योज्यम् । किञ्च तत्र यज्ञे देवानुपह्वये ॥ १३४ ॥

॥ श्रीकृष्णार्पणमस्तु ॥

* * *

१. स्वभागगमनं स्मृतम् – पा० । २. ददोषश्च – पा० ।

॥ श्रीमन्मूलरामो विजयते ॥

॥ श्रीमत्परिमळाचार्यो विजयते ॥

### श्रीराघवेन्द्रतीर्थश्रीपादविरचिता

# श्रीरामचारित्रमञ्जरी

### श्रीलक्ष्मीनारायणाचार्यकृतव्याख्यासंवलिता

—*—

वन्देऽहं जानकीजानिं जगज्जन्मादिदं विभुम् ।
जगच्चेष्टकवाय्वादिपतिं सर्वज्ञमच्युतम् ॥ १ ॥

येन प्रकाशिता मूलरामायणकथा परा ।
तं वन्दे श्रीहनूमन्तं वैराग्यादिगुणार्णवम् ॥ २ ॥

रामपादाम्बुजासक्तं रामान्तिककथारतम् ।
रामदासपदासक्तं राघवेन्द्रगुरुं भजे ॥ ३ ॥

लक्ष्मीनारायणाख्योऽहं गुरुपादप्रसादतः ।
विवृणोमि यथाबोधं श्रीरामचारित्रमञ्जरीम् ॥ ४ ॥

इह खलु संसारे क्लेशासन्तप्तानलसान् सज्जनानुद्दिधीर्षुः परमकारुणिको श्रीराघवेन्द्रमुनिः तेषामखिलक्लेशनिवृत्तिविशिष्टपरमानन्दावाप्तये तदुपायभूतां सङ्ग्रहरामायणाद्युक्तरामायणकथां सङ्ग्रह्णाति **श्रीमान्** इति ।

**श्रीमान्पूर्व[1] प्रजातो दशरथनृपते रामनामाऽथ नीतो**
**विश्वामित्रेण मन्त्राहृदनुजसहितस्ताटकां घातकोऽस्त्रम्।**
**ब्रह्माद्यं प्राप्य हत्वा निशिचरनिकरं यज्ञपालो विमोच्या-**
**हल्याशापं च भंक्त्वा शिवधनुरुपयञ्जानकीं नः प्रसीदेत् ॥ १ ॥**

श्रीः ज्ञानादिसम्पत् अस्य अस्तीति —**श्रीमान्**। श्रीः लक्ष्मीः अस्यास्तीति वा। अनेन लक्ष्म्या अप्यवतारः सूचितो भवति। **पूर्वं** यो नारायणः दशरथनृपतेः दशरथाख्यश्चासौ नृपतिश्च, तस्मात्। कौसल्यायामिति शेषः। **रामनामा**— राम इति नाम यस्य सः तथा। **प्रजातः** = प्रादुर्भूतः। 'जनेरकर्मकत्वात्, गत्यर्थाकर्मक' इत्यादिना कर्तरि क्तः। **अथ** — अवतारानन्तरं, अनुजसहितः – अनुजेन लक्ष्मणेन सहितः। **विश्वामित्रेण** — विश्वामित्राख्यऋषिणा, यज्ञरक्षार्थं सिद्धाश्रमं प्रतीति शेषः। **नीतः** — प्रापितः। **मन्त्राहृत्** — मन्त्रौ आहरतीति स्वीकरोतीति मन्त्राहृत्। विश्वामित्रेणेत्यत्राप्यन्वयः। तदनुग्रहार्थं तदुक्तं मन्त्रं स्वीकर्तेत्यर्थः। **ताटकां** — ताटकाख्यराक्षसीम्। **घातकः** — हतवान्। **ब्रह्माद्यं** — ब्रह्मसम्बन्धि ब्रह्म। तद्देवताकम्। तदेव आद्यं यस्य आग्नेया तम्, ब्रह्माद्यमस्त्रं प्राप्य। **निशिचरनिकरम्**— निशिचराणां – सुबाहुप्रभृतिराक्षसानाम्, निकरः – समूहः, तम्। हत्वा। **यज्ञपालः** — यज्ञरक्षकः। **अहल्याशापं च** — अहल्यायाः – गौतेमभार्यायाः शापं, **विमोच्य** — मोचयित्वा, **शिवधनुः** — शिवस्य – रुद्रस्य धनुः, भङ्क्त्वा, **जानकीं** — जनकस्यापत्यं स्त्री जानकी, ताम्। **उपनयन्**— विवाहं कुर्वन्, **नः**= अस्माकम्, **प्रसीदेत्**= प्रसन्नो भवेत्। षदॢ विशरणगत्यवसादनेषु लिङ् परस्मैपदं प्रथमपुरुषैकवचनम्॥

---

१. पा० – श्रीमान्विष्णुः।

अनेन— पूर्वं क्षीरसमुद्रशायी नारायणः रावणादिराक्षसपीडितब्रह्मादिदेवैः भूभारहरणार्थं प्रार्थितः तान् 'शाखामृगादिभावेनोत्पद्यध्वम्' इत्यनुज्ञाप्य पुत्रार्थिना दशरथेन इष्टः तद्भार्यायां कौसल्यायां प्रादुर्भूतः। सुमित्रायां लक्ष्मणशत्रुघ्नौ जातौ। कैकेय्यां भरतो जातः। एते चत्वारः कुमाराः दशरथस्य गृहेऽभ्यवर्धन्त। तदा विश्वामित्रो रामावतारं श्रुत्वा दशरथगृहं प्राप्तवान्। अनन्तरं रामः दशरथेनानुज्ञातः सलक्ष्मणो विश्वामित्रेण नीयमानः मार्गे तदुक्तं कामितार्थप्रदबलातिबलनामकमन्त्रद्वयं स्वीकृत्य सिद्धाश्रमसमीपे विद्यमानां लोकोपद्रवकारिणीं ताटकां हत्वा सिद्धाश्रमं प्राप्य विश्वामित्रोक्तमन्त्रजातं गृहीत्वा विश्वामित्रयज्ञसमये तद्विघातार्थं प्राप्तदैत्यान् हत्वा यज्ञं समाप्य, विश्वामित्रोक्तसीतास्वयंवरं श्रुत्वा विदेहदेशं प्रति गमनसमये मार्गस्थगौतमाश्रमे इन्द्रकृतधर्षणापराधनिमित्तेन पत्या गौतमेन शप्तां शिलीकृतां स्वदर्शनेन मानुषतां प्राप्तां पत्या संयोज्य, विदेहनगरं गत्वा राजादिभिः कृतां पूजां स्वीकृत्य सीतास्वयंवरार्थमिन्द्रं प्रति तपः कृत्वा जनकेन नीतं 'य इदं धनुः पूरयेत् तस्मै कन्यां प्रदास्यामी'ति प्रतिज्ञाया स्थापितं धनुर्लीलया पूरयित्वा सीतादत्तमालां कण्ठे गृहीत्वा अयोध्यायाः स्वपित्रादीनाहूय विवाहमकरोदित्यादिकथा सूचिता ॥ १ ॥

**आयन् रामः सभार्योऽध्वनि निजसहजैर्भार्गवेष्वासरोपा-**
**[1]त्तद्र्पं हत्वा सुरारिं पुरग उत नुतस्तापसैर्भूपपृष्टैः।**
**कल्याणानन्तधर्मोऽगुणलवरहितः प्राणिनामन्तरात्मे-**
**त्याद्युक्तश्चाभिषेके पुरजनमहितो मह्यतां मे वचोभिः ॥ २ ॥**

---

१. द्धत्वा तद्र्पं पा० ।

**आयन्निति ।** सभार्यः— भार्यया सीतया सहितः सभार्यः । निजसहजैः – निजाश्च ते सहजाश्च, तैः – लक्ष्मणादिभ्रातृभिः सहेति शेषः । रामः आयन् – गच्छन् । अयोध्यां प्रतीति शेषः । अध्वनि – मार्गे । भार्गवेष्वासरोपात्— भृगोरपत्यं भार्गवः – परशुरामः, तस्य इष्वासः धनुः, 'कोदण्ड-कार्मुकं इष्वासोऽप्यथे'त्यमरः, तस्य रोपात् – पूरणात्, तद्गं – तस्मिन् परशुरामे स्थितं, सुरारिं— सुराणां – इन्द्रादीनां, अरिं – शत्रुं, तपोमयाख्यमहासुरं हत्वा, पुरगः – अयोध्यां गतः । उत – अनन्तरं, अभिषेके – राज्याभिषेकविषये, भूपपृष्टैः— भूपेन – दशरथेन 'राज्याभिषेकविषये रामो युष्माकं सम्मतः किम्' इत्युक्तैः, तापसैः – वसिष्ठादिभिः, नुतः – स्तुतः ।

स्तुतिप्रकारमेवाह **कल्याणेति**। न विद्यते अन्तो येषां ते अनन्ताः कल्याणाः, निर्दोषाः धर्माः यस्य सः तथोक्तः । समासान्तविधेरनित्यत्वाद्वा, उपपदस्य केवलत्वाभावाद्वा, धर्मशब्दस्य 'धर्मादनिच्-केवलादि'त्यनिच् न भवति । अगुणलवरहितः— गुणविरुद्धाः – अगुणाः – दोषाः, तेषां, लवो – लेशः, तेन रहितः, दोषलेशोऽपि तस्मिन्नास्तीति अर्थः । प्राणिनां – सर्वजीवानां, अन्तरात्मा – अन्तर्नियामक इत्यादि-वचनैरुक्तः । पुरजनमहितः – अयोध्यायां विद्यमानजनैः पूजितः । मे – मम, वचोभिः, मह्यतां – पूज्यताम् । मह पूजायाम्, कर्मणि लोड् आत्मनेपदम् ।

भावः—अनेन रामः सीतास्वयंवरानन्तरम् अयोध्यां प्रति गमनसमये स्वस्य नारायणत्वस्थापनाय 'इदं धनुरागृह्य विकर्षसि त्वं, तदा साक्षान्नारायणोऽसि' इत्युक्तः परशुरामेण दत्तं धनुः पूरयित्वा चतुर्मुखवरात् परशुरामस्थितं तेन बहिर्निष्कासितम् असुरं हत्वा अयोध्यां गत्वा सर्वैः स्तुत इत्यादिकथा सूचिता ॥ २ ॥

**कैकेयीप्रीतिहेतोस्ससहजनृपजो वल्कली यानरण्यं**
**गङ्गातारी गुहार्च्यः कृतरुचिरजटो गीष्पतेः पुत्रमान्यः ।**
**तीर्त्वा कृष्णां प्रयातोऽवतु निजममलं चित्रकूटं प्रपन्नं**
**स्वाम्बाभिर्भ्रातरं तं श्रुतजनकगतिस्सान्त्वयन्व्युप्ततीर्थः ॥ ३ ॥**

**कैकेयीति** । कैकेय्याः – दशरथभार्यायाः भरतमातुः, प्रीतिहेतोः – प्रीत्यर्थम् । ससहजनृपजः— सहजः – लक्ष्मणः, नृपजा – सीता, ताभ्यां सहितः, तथा रामः । वल्कली – वल्कलमस्यास्तीति वल्कली । 'वल्कं वल्कलमस्त्रियां' इत्यमरः । चीरधारी । अरण्यं – वनं, यान् – गच्छन्, गङ्गातारी – गङ्गां तरतीति गङ्गातारी । तदनु गुहार्च्यः गुहेन प्लवतारकेण अर्च्यः पूज्यः । कृतरुचिरजटः— कृता रुचिरा – मनोहरा जटा येन सः, तथा गीष्पतेः – बृहस्पतेः । पुत्रमान्यः— पुत्रेण भरद्वाजेन मान्यः – पूजितः । पुत्रशब्दस्य नित्यसापेक्षत्वात्समासः । कृष्णां – यमुनाम् । तीर्त्वा – उल्लङ्घ्य । निजं – स्वकम् । अमलं – निर्मलम् । चित्रकूटं – चित्रकूटाख्यपर्वतम् । प्रयातः – प्राप्तः । स्वाम्बाभिः – मातृभिः सहेति शेषः । तं – चित्रकूटपर्वतम् । प्रपन्नं – प्राप्तम् । तं – रामं, प्रपन्नं – शरणं गतमिति वा । निजममलमित्यतः वा अन्वयः । भ्रातरं – भरतम् । सान्त्वयन् – लालयन् । श्रुतजनकगतिः— श्रुता जनकस्य – पितुः गतिः येन स तथोक्तः । दशरथमृतिं श्रुतवानित्यर्थः । व्युप्ततीर्थः— व्युप्तं – पितुरुद्देशेन दत्तं 'पितृदानं निवापः स्यात्' इत्युक्तेः, तीर्थं – जलं येन (यस्य) स तथोक्तः । 'निपानागमयोस्तीर्थमृषिजुष्टं जले गुरौ' इत्यमरः । पितृतर्पणादिकं कृतवानित्यर्थः । अवतु – रक्षतु । मामिति शेषः । निजमित्यस्य अत्राप्यन्वयः । तद्भक्तमित्यर्थः । अव रक्षणे लोट् परस्मैपदं प्रथमपुरुषैकवचनम् ॥

**आयन्निति।** सभार्यः— भार्यया सीतया सहितः सभार्यः । निजसहजैः – निजाश्च ते सहजाश्च, तैः – लक्ष्मणादिभ्रातृभिः सहेति शेषः । रामः आयन् – गच्छन् । अयोध्यां प्रतीति शेषः । अध्वनि – मार्गे । भार्गवेष्वासरोपात्— भृगोरपत्यं भार्गवः – परशुरामः, तस्य इष्वासः धनुः, 'कोदण्ड-कार्मुकं इष्वासोऽप्यथे'त्यमरः, तस्य रोपात् – पूरणात्, तद्गं – तस्मिन् परशुरामे स्थितं, सुरारिं— सुराणां – इन्द्रादीनां, अरिं – शत्रुं, तपोमयाख्यमहासुरं हत्वा, पुरगः – अयोध्यां गतः । उत – अंनन्तरं, अभिषेके – राज्याभिषेकविषये, भूपपृष्टैः— भूपेन – दशरथेन 'राज्याभिषेकविषये रामो युष्माकं सम्मतः किम्' इत्युक्तैः, तापसैः – वसिष्ठादिभिः, नुतः – स्तुतः ।

स्तुतिप्रकारमेवाह **कल्याणेति।** न विद्यते अन्तो येषां ते अनन्ताः कल्याणाः, निर्दोषाः धर्माः यस्य सः तथोक्तः । समासान्तविधेरनित्यत्वाद्वा, उपपदस्य केवलत्वाभावाद्वा, धर्मशब्दस्य 'धर्मादनिच्-केवलादि'त्यनिच् न भवति । अगुणलवरहितः— गुणविरुद्धाः – अगुणाः – दोषाः, तेषां, लवो – लेशः, तेन रहितः, दोषलेशोऽपि तस्मिन्नास्तीति अर्थः । प्राणिनां – सर्वजीवानां, अन्तरात्मा – अन्तर्नियामक इत्यादि-वचनैरुक्तः । पुरजनमहितः – अयोध्यायां विद्यमानजनैः पूजितः । मे – मम, वचोभिः, मह्यतां – पूज्यताम् । मह पूजायाम्, कर्मणि लोड् आत्मनेपदम् ।

भावः— अनेन रामः सीतास्वयंवरानन्तरम् अयोध्यां प्रति गमनसमये स्वस्य नारायणत्वस्थापनाय 'इदं धनुरागृह्य विकर्षसि त्वं, तदा साक्षान्नारायणोऽसि' इत्युक्तः परशुरामेण दत्तं धनुः पूरयित्वा चतुर्मुखवरात् परशुरामस्थितं तेन बहिर्निष्कासितम् असुरं हत्वा अयोध्यां गत्वा सर्वैः स्तुत इत्यादिकथा सूचिता ॥ २ ॥

**कैकेयीप्रीतिहेतोस्ससहजनृपजो वल्कली यानरण्यं**
**गङ्गातारी गुहार्च्यः कृतरुचिरजटो गीष्पतेः पुत्रमान्यः।**
**तीर्त्वा कृष्णां प्रयातोऽवतु निजममलं चित्रकूटं प्रपन्नं**
**स्वाम्बाभिर्भ्रातरं तं श्रुतजनकगतिस्सान्त्वयन्व्युप्ततीर्थः ॥ ३ ॥**

**कैकेयीति** । कैकेय्याः – दशरथभार्यायाः भरतमातुः, प्रीतिहेतोः – प्रीत्यर्थम्। ससहजनृपजः— सहजः – लक्ष्मणः, नृपजा – सीता, ताभ्यां सहितः, तथा रामः । वल्कली – वल्कलमस्यास्तीति वल्कली । 'वल्कं वल्कलमस्त्रियां' इत्यमरः । चीरधारी । अरण्यं – वनं, यान् – गच्छन्, गङ्गातारी – गङ्गां तरतीति गङ्गातारी । तदनु गुहार्च्यः गुहेन प्लवतारकेण अर्च्यः पूज्यः । कृतरुचिरजटः— कृता रुचिरा – मनोहरा जटा येन सः, तथा गीष्पतेः – बृहस्पतेः । पुत्रमान्यः— पुत्रेण भरद्वाजेन मान्यः – पूजितः । पुत्रशब्दस्य नित्यसापेक्षत्वात्समासः । कृष्णां – यमुनाम् । तीर्त्वा – उल्लङ्घ्य । निजं – स्वकम् । अमलं – निर्मलम् । चित्रकूटं – चित्रकूटाख्यपर्वतम् । प्रयातः – प्राप्तः । स्वाम्बाभिः – मातृभिः सहेति शेषः । तं – चित्रकूटपर्वतम् । प्रपन्नं – प्राप्तम् । तं – रामं, प्रपन्नं – शरणं गतमिति वा । निजममलमित्यतः वा अन्वयः । भ्रातरं – भरतम् । सान्त्वयन् – लालयन् । श्रुतजनकगतिः— श्रुता जनकस्य – पितुः गतिः येन स तथोक्तः । दशरथमृतिं श्रुतवानित्यर्थः । व्युप्ततीर्थः— व्युप्तं – पितुरुद्देशेन दत्तं 'पितृदानं निवापः स्यात्' इत्युक्तेः, तीर्थं – जलं येन (यस्य) स तथोक्तः । 'निपानागमयोस्तीर्थमृषिजुष्टं जले गुरौ' इत्यमरः । पितृतर्पणादिकं कृतवानित्यर्थः । अवतु – रक्षतु । मामिति शेषः । निजमित्यस्य अत्राप्यन्वयः । तद्भक्तमित्यर्थः । अव रक्षणे लोट् परस्मैपदं प्रथमपुरुषैकवचनम् ॥

अनेन रामस्य राज्याभिषेके मन्थरया बोधितया कैकेय्या पतिदत्त-वरद्वयबलात् रामः चतुर्दशवर्षाणि वने वसतु, मत्सुतो भरतो राज्यमवेदिति विच्छिन्ने सति रामः रावणसंहारादिसुरकार्यसिद्धये मातापितृभ्यामनुज्ञातः सहगतान् पित्रादीन् (पित्रादिसर्वजनान्) सज्जनाननुज्ञाप्य लक्ष्मणसीतासहितः गङ्गां तीर्त्वा वटक्षीरेण जटां धृत्वा गुहादिना कृतां पूजां स्वीकृत्य चित्रकूटे सुखेन स्थितवान् । रामवियोगदुःखात् दशरथे मृते वसिष्ठादिभिः कैकेय्यादेशात् (कैकेयदेशात्) आकारितो भरतः शत्रुघ्नेन सहितः अयोध्यां प्राप्य सर्वं श्रुत्वा पितृकार्यं कृत्वा रामवनवासक्लेशेन तन्निवृत्तये रामं द्रष्टुं मात्रादिसर्वजनैस्सह राममार्गेणैव चित्रकूटं प्राप्य रामं शरणं प्राप्तवानित्यादिकथा सूचिता ॥ ३ ॥

**दत्वास्मै पादुके स्वे क्षितिभरणकृतौ प्रेष्य तं काकनेत्रं**
**व्यस्याराध्योऽत्रिनाम्ना वनमथ समितो दण्डकं तापसेष्टम् ।**
**कुर्वन् हत्वा विराधं खलकुलदमनं याचितस्तापसाग्रै-**
**स्तेषां दत्वाऽभयं स्वानसिधनुरिषुधीन्यानगस्त्यात्स पायात् ॥४॥**

**दत्वेति** । सः – रामः, क्षितिभरणकृतौ— क्षितेः – भूमेः भरणं – तस्य, कृतौ – करणविषये, स्वे – स्वकीये । पादुके – पादपीठे, अस्मै – भरताय, दत्वा, तं – भरतं, प्रेष्य – अनुज्ञाप्य, काकनेत्रं— काकस्य नेत्रं नेत्रस्थं, काकस्य नेत्रं वासस्थानं यस्येति वा, तं (असुरं), व्यस्य – निरस्य, अथ – चित्रकूटवासानन्तरं, अत्रिनाम्ना – अत्रिनामकऋषिणा । आराध्य – पूजितः । दण्डकं – दण्डकारण्यं वनम् । समितः – प्राप्तः । तापसेष्टं— तापसस्य – शरभङ्गनामकऋषेः, इष्टं स्वपदप्राप्तिलक्षणाभीष्टम् । कुर्वन्, विराधं – विराधनामकराक्षसं हत्वा, खलकुलदमनं— खलानां – दुष्टानां रावणादिदैत्यानां, कुलं – समूहः, तस्य दमनं

– निग्रहं, तापसाग्रैः – तापसश्रेष्ठैः, याचितः, तेषां तापसानाम् अभयं दत्वा, स्वान् – स्वकीयान्, असिधनुरिषुधीन्— असिः – खड्गः, धनुः – शार्ङ्गम्, इषुधिः, तूणीरः, 'तूणोपासङ्गतूणीरनिषङ्गा इषुधिर्द्वयोः' इत्यमरः । असिश्च धनुश्च इषुधिश्च, तान् । अगस्त्यात्, यान् – प्राप्नुवन् । पातु – रक्षतु । पा रक्षणे लोट् परस्मैपदं प्रथमपुरुषैकवचनम् ॥

अनेन भरतेन राज्यरक्षार्थं पुनः पुनः प्रार्थितोऽपि रामः 'चतुर्दशवर्षानन्तरम् अयोध्यां प्रविशामि' इत्युक्त्वा राज्यरक्षार्थं पादुके दत्वा तमनुज्ञाप्य तत्रावस्थानसमये तुरङ्गनामकासुराविष्ट इन्द्रसुतो जयन्तः वायसरूपी सीतास्तने तुण्डेन क्षतं व्यधात् । तदा तृणेन तदाविष्टमसुरं नेत्रेण सह हत्वा इन्द्रसुतमनुज्ञाप्य चित्रकूटात् अत्रेराश्रमं प्राप्य तत्कृतपूजां स्वीकृत्य दण्डकवनं प्राप्य तत्र अग्निप्रवेशेन स्वलोकं जिगमिषुणा जीर्णाङ्गेन शरभङ्गेन प्रार्थितस्तदभीष्टं कृत्वा वित्तेश्वरेण ऊर्वशीसङ्गदोषाच्छप्तं तुम्बुरुनामधेयं स्वभक्तं भक्षार्थं तदंसकमितोऽपि सहानुजेन तं मोचयित्वा अनुज्ञाप्य तद्देहं बिले स्थापयित्वा (स्थित्वा) रावणादिहननार्थं तत्रत्यऋषिभिः प्रार्थितो, रामार्थमेवेन्द्रेणागस्त्याय दत्तं धनुरादिकं गृहीतवानित्यादिकथा सूचिता ॥ ४ ॥

**आसीनः पञ्चवट्यामकुरुत विकृतां राक्षसीं यो द्विसप्त-**
**क्रव्यादानप्यनेकानथ खरमवधीद्दूषणं च त्रिशीर्षम् ।**
**मारीचं मार्गरूपं दशवदनहृतामाकृतिं भूमिजाया**
**अन्विष्यन्नार्तगृध्रं स्वगतिमथ नयन्मामवेत् ग्रन्कबन्धम् ॥ ५ ॥**

**आसीन इति** । यः – रामः । पञ्चवट्यां – पञ्चवटीनामकपुण्यभूमौ । आसीनः – स्थितः । राक्षसीं – शूर्पणखाम् । विकृतां – विकृताकारां विकर्णनासां अकुरुत – अकरोत् । डुकृञ् करणे लङात्मने-

पदम् । अनन्तरं, द्विसप्त-क्रव्यादान्— क्रव्यं – मांसं, अदन्ति – भक्षयन्तीति क्रव्यादाः । 'मांसं पललं क्रव्यमामिषम्' इत्यमरोक्तेः । द्विसप्तसङ्ख्यायुक्ताश्च ते क्रव्यादाश्च, तान् । द्विसप्तेति पदान्तरं वा । अनेकानपि—- चतुर्दशसङ्ख्याकप्रधानराक्षसापेक्षया चतुर्दशसङ्ख्याकानन्यान् बहूनपि राक्षसान् । खरं – खरनामकराक्षसम् । दूषणं – दूषणनामकं राक्षसम् । त्रिशीर्षं – त्रीणि शीर्षाणि यस्य स तथोक्तः, तं, त्रिशिरोनामकराक्षसञ्च, अवधीत् – हतवान् । हन हिंसगत्योः लुङि वधादेशः । मार्गरूपं— मृगस्येदं मार्गं, मार्गं रूपं यस्य स तथा, तम् । चित्रसारङ्गरूपं, मारीचं – मारीच-नामकराक्षसम्, अवधीदित्यत्राप्यन्वयः । दश वदनानि यस्य सः दशवदनः – रावणः । तेन हृतां – आहृतां, भूमिजायाः – सीतायाः, आकृतिं – प्रतिकृतिं, अन्विष्यन् – मार्गयन्, अथ – अनन्तरं, आर्तगृध्रं— आर्तः – श्रान्तः स चासौ गृध्रश्च, तं – जटायुम् । स्वगतिं – स्वस्य गतिं – पदप्राप्तिं, नयन् – प्रापयन्, कबन्धं – कबन्धनामकराक्षसञ्च, घ्नन् – संहरन्, माम् अवेत् । अव रक्षणे लिङ् परस्मैपदम् ॥

अनेन पञ्चवट्यां स्थितो रामः तदा रावणानुजां शूर्पणखाख्यां दशाननेन प्रामादिकेन विधिना पत्यौ हते सति रावणाज्ञया स्वानुकूलपतिं निमार्गमाणां, खरदूषणयोर्बलेन राममुपेत्य 'त्वं मे पतिर्भव' इत्युक्तवतीं लक्ष्मणेन विकर्णनासां कारयित्वा तत्प्रेरितान् सबलान् खरदूषणादीन् हत्वा शूर्पणखाप्रेरितेन रावणेन प्रार्थितं मारीचं चित्रसारङ्गरूपं सीतासमीपे विचरन्तं दूरे हत्वा तदा स्वापहारार्थं आगतं रावणं दृष्ट्वा कैलासपर्वतं जिगमिषन्त्या सीतया निर्मितां प्रतिकृतिं रावणापहृतां विचरन् सीतापहारिरावणयुद्धेन शान्तं गृध्रं स्वपदं नीत्वा सुरेन्द्रभृत्यं दनुनामकं गन्धर्वं कबन्धदेहाद्विमोचितवान् इत्यादिकथा सूचिता ॥ ५ ॥

**पम्पातीरं स गच्छन्निह कृतवसतिर्भक्तितुष्टः शबर्यै**

**दत्वा मुक्तिं प्रकुर्वन् हनुमत उदितं प्राप्तसुग्रीवसख्यः ।**

**सप्त च्छित्वाऽथ तालान्विधिवरबलिनो वालिभित्सूर्यसूनुं**

**कुर्वाणो राज्यपालं समवतु निवसन्माल्यवत्कन्दरेऽसौ ॥ ६ ॥**

**पम्पातीरमिति** । असौ रामः, पम्पातीरं – पम्पायाः पुण्यनद्याः तीरं, गच्छन्, इह – पम्पातीरे, कृतवसतिः— कृता वसतिः – वासो येन स तथोक्तः, भक्तितुष्टः – भक्त्या सन्तुष्टः, शबर्यै – शबरीनामकस्वभक्तायै, मुक्तिं – स्वपदप्राप्तिरूपां दत्वा, हनुमत उदितं वचनं, भावे निष्ठा, कुर्वन्, प्राप्तसुग्रीवसख्यः— प्राप्तं सुग्रीवस्य सख्यं येनेति वा, प्राप्तः सुग्रीवस्य सख्यमिति वा स तथा । अस्मिन्पक्षे 'प्राप्तापन्ने चेति' तत्पुरुष-समासः । अथ – अनन्तरं, विधिवरबलिनः— विधेः – चतुर्मुखस्य, वरेण बलिनः, अच्छेद्यान्, सप्त – सप्तसङ्ख्याकान्, तालान् – ताल-वृक्षस्वरूपान् दैत्यान्, छित्वा, वालिभित्— वालिनं भिनत्तीति वालि-भित् – वालिहन्ता । सूर्यसूनुं – सूर्यस्य सूनुं – कुमारं, राज्यपालं – किष्किन्धाख्यराज्यपालं, कुर्वाणः – कुर्वन्, माल्यवत्कन्दरे— माल्य-वतः तन्नामकपर्वतस्य, कन्दरे – प्रदेशविशेषे, 'दरी तु कन्दरो वास्त्री'-त्यमरः । निवसन् – वासं कुर्वन्, समवतु – रक्षतु (रक्ष्यतामिति शेषः) ॥

अनेन रामः पम्पातीरे मतङ्गस्याश्रमे इन्द्रसमीपे कृतातिदर्पहितोः शच्या शप्तायै अप्सरस्त्रियै अग्निप्रवेशेन स्वपदमिच्छत्यै तथा कृत्वा प्रदेशान्तरं गत्वा ऋष्यमूकपर्वते हनूमन्तं दृष्ट्वा 'कोऽसी'ति स्वेनोक्ते हनूमता उक्तं 'अहं सुग्रीवसख्यः(खः) वायुनन्दनस्त्वत्सेवक' इत्यादि-वचनं श्रुत्वा हनुमदुक्तप्रकारेण अग्निसमीपे सुग्रीवेण सीतान्वेषणादिकार्ये प्रतिज्ञां कारयित्वा स्वयं वालिहननादिकार्ये प्रतिज्ञां कृत्वा वालिहननादा

पदम् । अनन्तरं, द्विसप्त-क्रव्यादान्— क्रव्यं – मांसं, अदन्ति – भक्षयन्तीति क्रव्यादाः । 'मांसं पललं क्रव्यमामिषम्' इत्यमरोक्तेः । द्विसप्तसङ्ख्यायुक्ताश्च ते क्रव्यादाश्च, तान् । द्विसप्तेति पदान्तरं वा । अनेकानपि—- चतुर्दशसङ्ख्याकप्रधानराक्षसापेक्षया चतुर्दशसङ्ख्याकानन्यान् बहूनपि राक्षसान् । खरं – खरनामकराक्षसम् । दूषणं – दूषणनामकं राक्षसम् । त्रिशीर्षं – त्रीणि शीर्षाणि यस्य स तथोक्तः, तं, त्रिशिरोनामकराक्षसञ्च, अवधीत् – हतवान् । हन हिंसगत्योः लुङि वधादेशः । मार्गरूपं— मृगस्येदं मार्गं, मार्गं रूपं यस्य स तथा, तम् । चित्रसारङ्गरूपं, मारीचं – मारीच-नामकराक्षसम्, अवधीदित्यत्राप्यन्वयः । दश वदनानि यस्य सः दशवदनः – रावणः । तेन हृतां – आहृतां, भूमिजायाः – सीतायाः, आकृतिं – प्रतिकृतिं, अन्विष्यन् – मार्गयन्, अथ – अनन्तरं, आर्तगृध्रं— आर्तः – श्रान्तः स चासौ गृध्रश्च, तं – जटायुम् । स्वगतिं – स्वस्य गतिं – पदप्राप्तिं, नयन् – प्रापयन्, कबन्धं – कबन्धनामकराक्षसञ्च, घ्नन् – संहरन्, माम् अवेत् । अव रक्षणे लिङ् परस्मैपदम् ॥

अनेन पञ्चवट्यां स्थितो रामः तदा रावणानुजां शूर्पणखाख्यां दशाननेन प्रामादिकेन विधिना पत्यौ हते सति रावणाज्ञया स्वानुकूलपतिं निर्मार्गमाणां, खरदूषणयोर्बलेन राममुपेत्य 'त्वं मे पतिर्भव' इत्युक्तवतीं लक्ष्मणेन विकर्णनासां कारयित्वा तत्प्रेरितान् सबलान् खरदूषणादीन् हत्वा शूर्पणखाप्रेरितेन रावणेन प्रार्थितं मारीचं चित्रसारङ्गरूपं सीतासमीपे विचरन्तं दूरे हत्वा तदा स्वापहारार्थं आगतं रावणं दृष्ट्वा कैलासपर्वतं जिगमिषन्त्या सीतया निर्मितां प्रतिकृतिं रावणापहृतां विचरन् सीतापहारिरावणयुद्धेन शान्तं गृध्रं स्वपदं नीत्वा सुरेन्द्रभृत्यं दनुनामकं गन्धर्वं कबन्धदेहाद्विमोचितवान् इत्यादिकथा सूचिता ॥ ५ ॥

**पम्पातीरं स गच्छन्निह कृतवसतिर्भक्तितुष्टः शबर्यै**
**दत्वा मुक्तिं प्रकुर्वन् हनुमत उदितं प्राप्तसुग्रीवसख्यः ।**
**सप्त च्छित्वाऽथ तालान्विधिवरबलिनो वालिभित्सूर्यसूनुं**
**कुर्वाणो राज्यपालं समवतु निवसन्माल्यवत्कन्दरेऽसौ ॥ ६ ॥**

**पम्पातीरमिति** । असौ रामः, पम्पातीरं – पम्पायाः पुण्यनद्याः तीरं, गच्छन्, इह – पम्पातीरे, कृतवसतिः— कृता वसतिः – वासो येन स तथोक्तः, भक्तितुष्टः – भक्त्या सन्तुष्टः, शबर्यै – शबरीनामकस्वभक्तायै, मुक्तिं – स्वपदप्राप्तिरूपां दत्वा, हनुमत उदितं वचनं, भावे निष्ठा, कुर्वन्, प्राप्तसुग्रीवसख्यः— प्राप्तं सुग्रीवस्य सख्यं येनेति वा, प्राप्तः सुग्रीवस्य सख्यमिति वा स तथा । अस्मिन्पक्षे 'प्राप्तापन्ने चेति' तत्पुरुष-समासः । अथ – अनन्तरं, विधिवरबलिनः— विधेः – चतुर्मुखस्य, वरेण बलिनः, अच्छेद्यान्, सप्त – सप्तसङ्ख्याकान्, तालान् – ताल-वृक्षस्वरूपान् दैत्यान्, छित्वा, वालिभित्— वालिनं भिनत्तीति वालि-भित् – वालिहन्ता । सूर्यसूनुं – सूर्यस्य सूनुं – कुमारं, राज्यपालं – किष्किन्धाख्यराज्यपालं, कुर्वाणः – कुर्वन्, माल्यवत्कन्दरे— माल्य-वतः तन्नामकपर्वतस्य, कन्दरे – प्रदेशविशेषे, 'दरी तु कन्दरो वास्त्री'-त्यमरः । निवसन् – वासं कुर्वन्, समवतु – रक्षतु (रक्ष्यतामिति शेषः) ॥

अनेन रामः पम्पातीरे मतङ्गस्याश्रमे इन्द्रसमीपे कृतातिदर्पहेतोः शच्या शप्तायै अप्सरस्त्रियै अग्निप्रवेशेन स्वपदमिच्छत्यै तथा कृत्वा प्रदेशान्तरं गत्वा ऋष्यमूकपर्वते हनूमन्तं दृष्ट्वा 'कोऽसी'ति स्वेनोक्ते हनूमता उक्तं 'अहं सुग्रीवसख्यः(खः) वायुनन्दनस्त्वत्सेवक' इत्यादि-वचनं श्रुत्वा हनुमदुक्तप्रकारेण अग्निसमीपे सुग्रीवेण सीतान्वेषणादिकार्ये प्रतिज्ञां कारयित्वा स्वयं वालिहननादिकार्ये प्रतिज्ञां कृत्वा वालिहननादा

बलपरीक्षार्थं सुग्रीवेण प्रार्थितः, वालिना पत्राण्यपि छेत्तुमशक्यत्वात् व्रह्मत्वं प्राप्तुं तपः कुर्वाणान् विषमान् वृक्षरूपान् दैत्यान् एकेनेषुणा छित्वा वालिनं हत्वा सुग्रीवं किष्किन्धापतिं कृत्वा वर्षाकालं दृष्ट्वा माल्यवत्कन्दरे न्यवसदित्यादिकथा सूचिता ॥ ६ ॥

**नीत्वा मासान् कपीशानिह दशहरितः प्रेष्य सीतां [1] विचित्या-**
**ऽऽयात श्रीमद्धनूमद्गिरमथ समनुश्रुत्य गच्छन्कपीन्द्रैः ।**
**सुग्रीवाद्यैरसङ्ख्यैर्दशमुखसहजं मानयन्नब्धिवाचा**
**दैत्यघ्नः सेतुकारी रिपुपुररुदवेद्वानरैर्वैरिघाती ॥ ७ ॥**

नीत्वेति । असौ रामः, इह – माल्यवत्कन्दरे, मासान्नीत्वा, कपीशान् – कपिश्रेष्ठान्, दशहरितः – दशदिशः प्रति, प्रेष्य – अनुज्ञाप्य, सीतां विचित्य – विचार्य, आयातश्रीमद्धनूमद्गिरं— श्रीरस्यास्तीति श्रीमान्, स चासौ हनूमांश्च श्रीमद्धनूमान्, आयातः – आगतश्चासौ श्रीमद्धनूमांश्च स तथा, तस्य गिरं – वचनं, समनुश्रुत्य – सम्यक् श्रुत्वा, अथ – अनन्तरं, सुग्रीवाद्यैः – सुग्रीव आद्यो येषां ते, तैः, असङ्ख्यैः – न विद्यते सङ्ख्या येषां ते, तैः, अपरिमितैः कपीन्द्रैः – कपिश्रेष्ठैः सहित इति शेषः । गच्छन् – दक्षिणां दिशमिति शेषः । दशमुखसहजं— दश मुखानि यस्य सः रावणः, तस्य सहजं – भ्रातरं – विभीषणं, मानयन् – सम्मानयन्, अब्धिवाचा— अब्धेः – समुद्रस्य वाचा – वचनेन, दैत्यघ्नः – दैत्यान् हन्तीति दैत्यघ्नः । सेतुकारी – सेतुं करोतीति सेतुकारी । रिपुपुररुत्— रिपोः – रावणस्य, पुरं – लङ्कां, रुणद्धि – आवृणोतीति रिपुपुररुत् । वानरैः – कपिभिः, वैरिघाती— वैरीन् – शत्रून् घातयतीति वैरिघाती । अवेत् – रक्षेत्, मामिति शेषः ॥

---

१. विचिन्त्या – पा० ।

अनेन रामः माल्यवत्कन्दरे चतुरो मासान्नीत्वा लक्ष्मणेनाहूतेन सुग्रीवेण नानादिक्षु विदिक्षु स्थितान् कपीनाहूय सर्वदिक्षु विदिक्षु सीता विमृग्यतामिति प्रेष्य स्वाज्ञया स्वाङ्गुलीकमादाय कपीन्द्रैरङ्गदादिभिः सह दक्षिणां दिशं गत्वा महेन्द्रपर्वतं प्राप्य तांस्तत्र संस्थाप्य समुद्रमुल्लङ्घ्य लङ्कां प्राप्य तत्र वने अशोकमूले विद्यमानां सीताकृतिं दृष्ट्वा तस्यै अङ्गुलीयकं दत्वा ततश्चूडामणिं सङ्गृह्य तां नत्वा वनं विशकलय्य अक्षपूर्वकान् राक्षसान् हत्वा स्वपुच्छवह्निना लङ्कां दग्ध्वा रत्नाकरं तीर्त्वा महेन्द्रपर्वतं प्राप्य कपीन्द्रान्नन्दयित्वा तैः सह स्वपादाम्बुजं प्राप्य चूडामणिं दत्तवतो हनूमतः वचनं श्रुत्वा कपीन्द्रैः सह दक्षिणसमुद्रतीरं प्राप्य रामपक्षपातीति रावणेन त्यक्तं विभीषणेन परिगृह्य अब्ध्यभिमानि-वरुणकृतपूजां स्वीकृत्य तद्वचनेन समुद्रस्थानाभीरजन्मनो दैत्यान् संहरन् वानरैस्सेतुं कारयित्वा तन्मार्गेण गत्वा लङ्कां प्रतियुध्य वानरैः राक्षसानघातयदित्यादिकथा सूचिता ॥ ७ ॥

**भग्नं कृत्वा दशास्यं गुरुतरवपुषं कुम्भकर्णं निहत्य[1]**
**प्रध्वस्ताशेषनागं पदकमलनतं तार्क्ष्यमानन्द्य रामः ।**
**सर्वानुज्जीवयन्तं गिरिधरमनघश्चाञ्जनेयं कपीन्स्वान्**
**विज्ञानास्त्रेण रक्षन् समवतु दमयन् लक्ष्मणाच्छक्रशत्रुम् ॥८॥**

रामः, दशास्यं— दश आस्यानि – मुखानि यस्य तं रावणम् । भग्नं – पराजितं कृत्वा, गुरुतरवपुषं— गुरुतरम् अतिबृहद्वपुः शरीरं यस्य तं – कुम्भकर्णम् । निहत्य – हत्वा । प्रध्वस्ताशेषनागं— प्रध्वस्ताः – नाशिताः अशेषाः समस्ताः नागाः येन स तथा तम् । पदकमलनतं— पदे कमले इव पदकमले, 'उपमितं व्याघ्रादिभिः' इति समासः, तयोर्नतं – प्रह्वीभूतं, तार्क्ष्यं

१. निगृह्य – पा० ।

– गरुडं, आनन्द्य – सन्तोष्य, सर्वान् – समस्तान्, कपीन्, उज्जीवयन्तं – जीवयन्तं, गिरिधरं— गिरिं – गन्धमादनपर्वतं, धरतीति धरः, तम् आञ्जनेयं च – अञ्जनाया अपत्यं पुमान् आञ्जनेयः – हनूमान्, तं च आनन्द्य, अनघः – न विद्यते अघः पापं तदुपलक्षित-बन्धनादिकं यस्य रामस्य सः – निर्दुष्टः। स्वान् – स्वकीयान्, कपीन् – वानरान्, विज्ञानास्त्रेण रक्षन् – पालयन्, लक्ष्मणात् शक्रशत्रुं— शक्रस्य – इन्द्रस्य, शत्रुं – इन्द्रजितं, दमयन् – संहरन्, समवतु – रक्षतु॥ ८॥

अनेन रामः रावणभटैः कपीनां युद्धसमये युद्धार्थं स्वसमीपं प्राप्तं रावणं पराजितं कृत्वा, रावणं प्रति "जीवनाशां त्यक्त्वा सकलभोगान् भुंक्त्वा पुनः युद्धार्थमायाहि" इत्युक्त्वा तं प्रेष्य रावणेन प्रबोधितं बहुकालं सुप्तोत्थितं युद्धार्थं स्वसमीपं प्राप्तं कुम्भकर्णं हत्वा रावणप्रेषितेन्द्रजिता नागपाशैस्त्रिवारं बद्धान् कपीन् प्रथमतो गरुडेन मोचयित्वा अनन्तरं हनूमताऽऽनीतगन्धमादनपर्वतस्यौषधैः मोचयित्वा पश्चात् स्वयमेव विज्ञानास्त्रेण मोचयित्वा लक्ष्मणेन रावणकुमारमिन्द्रजितमघातयदित्यादि कथा सूचिता ॥ ८ ॥

**क्रव्यादान् घ्नन्नसङ्ख्यानपि दशवदनं ब्रह्मपूर्वैस्सुरेशैः**
**पुष्पैराकीर्यमाणो हुतवहविमलामाप्य सीतां विधाय।**
**रक्षोनाथं स्वभक्तं स्वपुरमथ गतः पुष्पकस्थस्समस्तैः**
**साम्राज्ये चाभिषिक्तो निजजनमखिलं मानयन्मे गतिः स्यात् ॥९॥**

असङ्ख्यान् – अपरिमितान्, क्रव्यादान्— क्रव्यं – मांसम् अदन्तीति क्रव्यादाः, तान्, घ्नन् – संहरन्, दशवदनमपि – रावणमपि घ्नन्, ब्रह्मपूर्वैः— ब्रह्मा – चतुर्मुखः पूर्वो येषां तैः, सुरेशैः – सुरश्रेष्ठैः – इन्द्रादिभिः, पुष्पैराकीर्यमाणः – अभिषिच्यमानः, हुतवहविमलां—

हुतवहे अग्नौ, विमलां – निर्मलां, हुतवहेनेति वा, सीतामाप्य – प्राप्य, स्वभक्तं – स्वस्य भक्तं – विभीषणं, रक्षोनाथं – रक्षसां नाथं – स्वामिनं – लङ्काधिनाथमिति यावत्। विधाय – कृत्वा अथ – अनन्तरं, समस्तैः – स्वकीयैः सर्वैः, सहेति शेषः। पुष्पकस्थः – पुष्पकाख्यविमानस्थः, स्वपुरं – स्वस्य पुरं – अयोध्यां, प्राप्तः। साम्राज्ये अभिषिक्तश्च। अखिलं निजजनं मानयन्, मे गतिः प्राप्यः सर्वाभीष्टप्रदो वा स्यात् – भवेत्। अस भुवि लिङ् परस्मैपदम्॥

अनेन रामः इन्द्रजिद्धननानन्तरं रावणप्रेषितं तन्मूलबलं सर्वं हत्वा रावणं च हत्वा रावणवधेन सन्तुष्टैः ब्रह्मादिभिः पुष्पैः अभिषिच्यमानः अशोकमूले स्थितां सीताप्रतिकृतिमाहूय तस्याः पतिव्रता[1]स्थापनाय अग्नौ प्रक्षिप्य तां प्रतिकृतिं नाशयित्वा तदा कैलासादागताम् अग्निना समर्पितां सीतामाप्य विभीषणं लङ्काधिपतिं कृत्वा सर्वैः सह पुष्पकस्थः अयोध्यां प्राप्य वसिष्ठादिभिः सर्वैः साम्राज्ये अभिषिक्तः सर्वजनान् आनन्दयन् सीतायाः साकं सुखेन स्थितवान् इति कथा सूचिता॥ ९॥

**रक्षन्क्षोणीं समृद्धां नुत उत मुनिभिर्मानयन् वायुसूनुं**
**प्रेष्यादित्यात्मजादीन् व्यतनुत भरतं यौवराज्येऽनुमान्य।**
**कार्ये सौमित्रिमार्तश्वगदितकृदरिघ्नोऽथ शत्रुघ्नतो यो**
**हत्वाऽसौ दुष्टशूद्रं द्विजसुतगुबवेत्कुम्भजान् मालभारी॥ १०॥**

यः – रामः, समृद्धां – सकलकामैः पूर्णां, क्षोणीं – पृथ्वीं, रक्षन् – पालयन्, उत – अनन्तरं, मुनिभिः – अगस्त्यादिभिः मुनिभिः, नुतः – स्तुतः, वायुसूनुं— वायोः सूनुं – कुमारं हनूमन्तं, मानयन् – सम्मानयन्, आदित्यात्मजादीन्— आदित्यस्य आत्मजः कुमारः –

---

१. पा० – पातिव्रत्यधर्मस्थापनाय।

सुग्रीवः, स एव आदिः येषां ते, तान् । प्रेष्य – अनुज्ञाप्य, यौवराज्ये – युवराजत्वे, भरतं, व्यतनुत – अकरोत् । तनु विस्तारे लडात्मनेपदम् । कार्ये पौरजानपदस्थजनरक्षणादिकार्ये, सौमित्रिं— सुमित्रायाः अपत्यं पुमान् सौमित्रिः – लक्ष्मणः, तमनुमान्य – अनुज्ञाप्य, आर्तश्वगदितकृत्— आर्तः – दुःखितः, श्वा – सारमेयः, तेन गदितं – उक्तं करोतीति स तथा । अथ – अनन्तरं, शत्रुघ्नतः – शत्रुघ्नात्, अरिं – शत्रुं – लवणासुरं, हन्तीति – अरिघ्नः, असौ – रामः, दुष्टशूद्रं – दुष्टश्चासौ शूद्रश्च, तं, हत्वा – द्विजसुतगुप्— द्विजस्य – ब्राह्मणस्य सुतं गोपायतीति, स तथा, कुम्भजात् – अगस्त्यात्, मालभारी – मालां बिभर्तीति मालभारी । 'इष्टकेषिकामालानां चिततूलभारिषु' इति ह्रस्वता । अवेत् – रक्षेत् ॥

अनेन रामः साम्राज्याभिषेकानन्तरं सर्वसम्पत्समृद्धां पृथ्वीं रक्षन् अगस्त्यादिभिः स्तुतः हनूमते स्वकण्ठमालां दत्वा तमालिङ्ग्य सुग्रीवादीन् स्वस्वराज्यरक्षार्थं प्रेष्य यौवराज्ये भरतं कृत्वा पुरजनपदरक्षणादिविषये सौमित्रिमनुज्ञाप्य भिक्षुदण्डताडितशुना भिक्षुशिक्षार्थं प्रार्थितः तद्वचनेन भिक्षवे कालाञ्जराख्यदेवालयाधिपत्यं दत्वा लवणासुरपीडितैश्च्यवनादिमुनिभिः प्रार्थितो मधुनामकदैत्यसुतं मधुवनस्थं लवणनामकमसुरं शत्रुघ्नेन घातयित्वा, रुद्रपदेच्छया तपः कुर्वाणम् अधः शिरः मूर्धाऽङ्घ्रिलम्बमानं जङ्गनामकासुररूपं शम्बूकनामकं शूद्रं हत्वा तत्कृताधर्मेण[1] मृतं द्विजकुमारं जीवयित्वा अनन्नयज्ञकृता श्वेतनामकराज्ञा स्वस्य क्षुन्निवृत्त्यर्थं चतुर्मुखनियोगेन रामाय देहीत्युक्त्वा अगस्त्याय दत्तां मालाम् अगस्त्याश्रमं प्राप्य तस्माद् गृहीतवान् इत्यादिकथा सूचिता । ॥ १० ॥

---

१. पा० – अपराधेन ।

**यज्ञं तन्वंस्त्रिकोटीन् व्यतुदत भरताद्योऽसुरानीशवाक्या-**
**द्यास्यन्धामात्रिपुत्रं भुजिमथ स नयन्नात्मसूनू स्वराज्ये।**
**कृत्वा श्रीह्रीहनूमद्धृतविमलचलच्चामरच्छत्रशोभी**
**ब्रह्माद्यैः स्तूयमानो निजपुरविलसत्पादपद्मोऽवतान्माम् ॥११॥**

यः – रामः, यज्ञं – अश्वमेधाख्ययज्ञं, तन्वन् – कुर्वन्, त्रिकोटीन्— तिस्रः कोट्यः – कोटिसङ्ख्या येषां ते, तान्, असुरान्, भरतात्, व्यतुदत – अवधीत्। तुद व्यथने लङात्मनेपदम्। ईशवाक्यात्— ईशस्य – रुद्रस्य वाक्यात् – वचनात्, धाम – श्वेतद्वीपं, यास्यन् – गमिष्यन्, अथ – अनन्तरं, अत्रिपुत्रं – अत्रिनामकऋषेः पुत्रं – दूर्वाससं, भुजिं – भुक्तिं नयन्, प्रापयन्, आत्मसूनू— आत्मनः – स्वस्य सूनू – कुमारौ, स्वराज्ये – स्वराज्यपरिपालनादिकार्ये कृत्वा, श्रीह्रीहनूमद्धृतविमलचलच्चामरच्छत्रशोभी— श्रीश्च ह्रीश्च हनूमांश्च, तैः धृतानि विमलानि, चलती च ते चामरे च, छत्रं च तानि, तैः शोभी – प्रकाशमानः। ब्रह्माद्यैः— ब्रह्मा – चतुर्मुखः आद्यः येषां तैः, स्तूयमानः, निजपुरविलसत्पादपद्मः— निजे – स्वकीये पुरे – श्वेतद्वीपे विलसती पादपद्मे, यस्य स तथोक्तः। सः – रामः, माम् अवतात्। अव रक्षणे लोट् परस्मैपदम्॥

अनेन रामः कदाचित् सुग्रीवादिकपीन् नानादेशस्थसर्वभूपांश्च आहूय सर्वसम्पत्समृद्धम् अश्वमेधयज्ञं संवत्सरपर्यन्तं कृत्वा सर्वान् सन्तोष्य केकयदेशाधिपतिप्रेषितगिरसेनोक्तान्[1] शैलूषाख्यगन्धर्वपुत्रान् त्रिकूटसङ्ख्याकान् लोकबाधकान् असुरान् श्रुत्वा भरतं गन्धर्वनगरं प्रेष्य तान् घातयित्वा स्वपालितं भूलोकं ब्रह्मलोकाभं दृष्ट्वा आत्मसद्मविशेषार्थं देवैः प्रार्थितेन रुद्रेण स्वधामगमनार्थं प्रार्थितः तमनुज्ञाप्य,

१. पा० – गिरिसेनोक्त्या।

तदानीमागतं दूर्वाससं क्षुधितं मां सद्योजातेनान्नेन भोजयेति वदन्तं स्वपाणिपल्लवाच्चतुर्विधं षड्रसोपेतम् अन्नं सृष्ट्वा तं भोजयित्वा तेन स्तुतः तमनुज्ञाप्य स्वस्मात् सीतायां जातौ इन्द्रहुताशनौ कुशलवाख्यौ पुत्रौ क्रमात् साम्राज्ये यौवराज्ये (च) अभिषिच्य अयोध्यातः[1] तदुत्तरदिशं गच्छन् श्रीरिति ह्रीरिति रूपद्वयधारिण्या सीतया पक्षद्वये[2] वीजित-चामरद्वयेन हनूमद्धृतछत्रेण च प्रकाशमानः ब्रह्मादिभिः स्तूयमानः श्वेत-द्वीपं प्राप्य सीतया साकं सुखेन स्थितवानित्यादि कथा सूचिता ॥११॥

**इति श्रीश्रीरामचारित्रमञ्जरी लेशतः कृता।**
**राघवेन्द्रेण यतिना भूयाद्रामप्रसाददा॥ १२॥**

एवं समापितग्रन्थो राघवेन्द्रमुनिः स्वकृतग्रन्थस्य नाम कुर्वन् तस्यापि मूलत्वेन अत्युपादेयत्वज्ञापनाय स्वनाम कीर्तयन् स्वकीयानां तत्साध्यफलमाशास्ते इतीति। इतिशब्दः प्रकारवाची, एवंप्रकारेण राघवेन्द्रेण यतिना, लेशतः – सङ्क्षेपतः कृता, श्रीरामस्य चरित्राणि – कर्माणि, तेषां मञ्जरीव मञ्जरी, तत्प्रतिपादिकेति यावत्। रामप्रसाददा— रामस्य प्रसादं ददातीति सा तथा। भूयात् आशीर्लिङ्। एतद्ग्रन्थस्य वक्तॄणां श्रोतॄणां च रामः प्रसन्नः सर्वाभीष्टप्रदो भवतु इत्यर्थः ॥ १२ ॥

यत्प्रसादात्सम्पदः स्युर्ब्रह्मादीनां श्रियोऽपि च।
तस्मै नमो भगवते जानकीजानये सदा ॥
लक्ष्मीनारायणाख्येन गुरुपादप्रसादतः।
कृतेयं मञ्जरीमाला रामः प्रीणातु मे तया ॥

*इति श्रीमद्राघवेन्द्रतीर्थगुरुपादविरचिता श्रीश्रीरामचारित्रमञ्जरी श्रीलक्ष्मीनारायणाचार्यविरचितव्याख्यासमलङ्कृता समाप्ता ॥*



---

१. पा० – अयोध्यां। २. पा० – पार्श्वद्वये।

॥ श्रीः ॥

जगद्गुरुश्रीराघवेन्द्रतीर्थगुरुसार्वभौमविरचिता

# श्रीकृष्णचारित्रमञ्जरी

विद्वत्कुलललामश्रीलक्ष्मीनारायणाचार्यविरचितव्याख्यासंवलिता

—*—

कृष्णं कृत्स्नजगज्जन्मकर्तारं विभुमच्युतम् ।
रुक्मिणीसत्यभामाभ्यामाश्लिष्टं प्रणमाम्यहम् ॥ १ ॥

उपास्य यत्पदं धीराः लभन्ते ज्ञानसम्पदम् ।
तं वन्दे श्रीमदानन्दतीर्थार्यगुरुशेखरम् ॥ २ ॥

अस्मद्देशिकपादा ये साधवस्सततं मम ।
दृशं दिशन्तु सन्मार्गगामिनीं मुक्तिदायिनीम् ॥ ३ ॥

पदवाक्यप्रमाणज्ञान् सर्वशास्त्रविशारदान् ।
राघवेन्द्रगुरून्वन्दे वादिकण्ठीरवान्मम[1] ॥ ४ ॥

लक्ष्मीनारायणाख्योऽहं गुरुपादप्रसादतः ।
विवृणोमि यथाबोधं श्रीकृष्णचारित्रमञ्जरीम् ॥ ५ ॥

कर्तृकर्मक्रियादीनां यथायोगं प्रकाशये ।
अन्वयं बालबोधाय बुध्यन्तां तं विवेकिनः[2] ॥ ६ ॥

---

१. ता. पु. पाठः – सदा ।

२. ता. पु. पाठः – विचक्षणाः । क. पु. पाठः – विचक्षणाः ।

इह खलु संसारक्लेशसन्तप्तानलसान् सज्जनानुद्दिधीर्षुः परमकारुणिको राघवेन्द्रमुनिः, तेषामखिलक्लेशनिवृत्तिविशिष्टपरमानन्दावाप्तये तदुपायभूतां भागवतप्रतिपाद्यां श्रीकृष्णकथां झटिति बोधाय सङ्गृह्णाति 'विष्णुः' इति ।

**विष्णुर्ब्रह्मादिदेवैः क्षितिभरहरणे प्रार्थितः प्रादुरासी-**
**द्देवक्यां नन्दनन्दी शिशुवधविहितां पूतनां यो जघान ।**
**उत्थानौत्सुक्यकाले रथचरणगतं चासुरं पादघातै-**
**श्चक्रावर्तश्च मात्रा गुरुरिति निहितो भूतले सोऽवतान्माम् ।**
**॥ १ ॥**

**विष्णुः—** सर्वत्र व्याप्तो नारायणः, 'गतिश्च सर्वभूतानां प्रजानां चापि भारत । व्याप्ते मे रोदसी पार्थ ! कान्तिश्चाभ्यधिका मम ॥ अधिभूतनिविष्टश्च तदिच्छुश्चास्मि भारत । क्रमणाच्चाप्यहं पार्थ ! विष्णुरित्यभिसंज्ञितः ॥' इति मोक्षधर्मवचनोक्तदिशा विष्णुशब्दस्यानेकार्थत्वं ज्ञातव्यम् । **ब्रह्मादिदेवैः—** ब्रह्मा चतुर्मुख आदिर्येषां ते ब्रह्मादयः । ते च ते देवाश्च तैः । **क्षितिभरहरणे—** क्षितेः – भूमेः, भरो – भारः, तद्धरणे – तत्संहारविषये । तद्भारभूत-कंस-शिशुपाल-दन्तवक्त्र-जरासन्धादि-दुष्टनिग्रहार्थमिति यावत् । 'भृञ् भरण' इति ऋकारान्ताद् भौवादिकाद्धातोर्भावे घञ्, आत्मनेपदित्वेन 'ॠदोरप्' इत्यप्प्रत्यये 'सार्वधातुकार्धधातुकयोरि'ति गुणे भर इति रूपसिद्धेः । तथैव सप्तमस्थद्वितीयपादे 'सनीवन्तर्ध'[1] इत्यादि(४९)सूत्रे वृत्तिमञ्जर्योरुक्तेः । एवम् उत्तरत्र 'स्तनभरनमिता' इत्यत्र निर्वाहो द्रष्टव्यः । **प्रार्थितः –** याचितः,

---

1. 'सनीवन्तर्धभ्रस्जदंभुश्रिस्वृयूर्णुभरज्ञपिसनाम्' पा.सू. ७-२-४९ ।

**देवक्यां**— देवकस्यापत्यं स्त्री – देवकी, तस्याम् । वसुदेवादिति शेषः । **प्रादुरासीत्** – प्रादुर्बभूव । अस भुवि । प्रादुरित्युपसर्गसंज्ञकमव्ययम् । 'प्रकाशे प्रादुराविः स्यात्' इत्यव्ययवर्गे पाठात् । वैय्याकरणैरुपसर्गवशात् धातूनामनेकार्थत्वाङ्गीकारात् । लङ् परस्मैपदम् । **यः** – आविर्भूतः कृष्णः । **नन्दनन्दी**— नन्दं नन्दगोपं नन्दयति हर्षयतीति स तथा । **शिशुवधविहितां**— शिशूनां – बालानां, वधाय, विहिताम् – आज्ञप्ताम् । कंसेनेति शेषः ॥

पूतनां पूतनाख्यां राक्षसीम् । जघान अवधीत् । 'हन हिंसागत्योः' लिट् परस्मैपदम् । उत्थानौत्सुक्यकाले— उत्थानं देवदर्शनार्थं बहिर्निष्क्रमणाख्यं कर्म, तत्सम्बन्धि यदौत्सुक्यं कदा उत्थानं भविष्यति कदा द्रक्ष्याम इत्येवमन्तःकरणगतोऽनुरागविशेषः । तत्काले यदा चतुर्मासपर्याप्तवयस्कोऽभूत्, तदा तस्य बहिस्समीपदेशं प्रति प्रापणरूपं निष्क्रमणाख्यं कर्मासीत् । तस्मिन्दिने तस्य जन्मनक्षत्रं, तन्निमित्तमहोत्सवश्चासीत् । तस्मिन्समय इत्यर्थः ।

उक्तं च भागवते तथा भारततात्पर्यनिर्णये च— 'यदापदेवश्चतुरस्समासान् तदोपनिष्क्रामणमस्य चासीत्' इत्यादि । रथचरणगतं— रथचरणं चक्रं – 'चक्रं रथाङ्गं तस्यान्तो नेमिस्त्री स्यात्प्रधिः पुमान्' इत्यमरः । तस्मिन् गतं स्थितं, असुरं च शकटाक्षनामकदैत्यं च पादघातैः पादयोः प्रहारैः जघानेत्यन्वयः । मात्रा यशोदया, गुरुरिति वोढुमशक्य इति, भूतले भूम्यां निहितः, चक्रावर्तं च चक्रवदावर्तत इति चक्रावर्तः, तं मण्डलाकारवायुस्वरूपं तृणावर्तनामकदैत्यं, जघानेति पूर्वेणान्वयः । सः कृष्णः मामवतात् रक्षतु । 'अव रक्षणे' आशिषि लोट् परस्मैपदम् ।

अनेन पूर्वं समुद्रशायी श्रीमन्नारायणः ब्रह्मादिदेवैः सकलदुष्टनिग्रहार्थं अर्थितः, तस्मादुत्थाय तैः सह मेरुं प्राप्य, चतुर्मुखं प्रति यत्र त्वयोक्तोऽस्मि तत्र प्रादुर्भविष्यामि इत्युक्त्वा, तेन चतुर्मुखेन, ''अहं पुरा वरुणायामृतस्रवाः गाः प्रादाम्। ताः तत्पिता कश्यपः स्वपत्न्या अदित्या सुरत्या च प्रचोदितः अपाहरत्। तदपराधेन क्षत्रेषु गोजीवनको भवेति मया शप्तः कश्यपः भूमौ यदुकुले बहुगोधनाढ्यः वसुदेव इति ख्यातः शूरनामकाद्राज्ञः प्रजातः । तस्यैव भार्या अदितिश्च देवकीति बभूव । अन्या सुरतिस्तु रोहिणी बभूव। तौ देवकीवसुदेवौ त्वामेव सुतं इच्छन्तौ त्वदीयं तपस्तेपतुः। तथा यो द्रोणनामा वसुः, सः भार्यया धरया सह त्वत्पितृत्वं प्राप्तुं तपश्चकार। तस्यै स वरः मया दत्तः। स च शूरात् वैश्यकन्यायां गोकुले नन्दाख्यो जातः । तस्य भार्या यशोदेति जाता । अतः त्वं प्रथमं देवकीवसुदेवयोः तव स्वरूपं प्रदर्श्य ततः नन्दगोपगृहं व्रज'' इत्युक्तः तं प्रति तथेति चोक्त्वा, तान् देवान् विप्रक्षत्रादिभावेन भूतले उत्पद्यध्वमिति अनुज्ञाप्य, स्वयं देवक्यां वसुदेवात् जातः । ततः पूर्वं रोहिण्यां वसुदेवात् शेषो बलराम इति जातः। देवाः तत्र तत्र अजायन्त। अनन्तरं स्वाज्ञया कंसाद्भीतेन शौरिणा नन्दगोपगृहं प्राप्तः, पुत्रोत्सवादिना[१] नन्दादीनतोषयत् । तदा देवकीप्रसवं श्रुत्वा कंसः वसुदेवगृहं प्राप्य देवक्याश्शयने स्थितां तत्समय एव नन्दगोपगृहे जातां वसुदेवेनानीतां शिशुरूपां दुर्गां दृष्ट्वा, तद्धननार्थमुद्युक्तः तया आक्षिप्तः 'तव शत्रुः यत्र क्व च जातः' इत्युक्तः, पश्चात्तापात् सभार्यं वसुदेवं प्रसाद्य, स्वगृहं प्राप्य मन्त्रिभिरालोच्य, जातमात्रान् कुमारान् निहन्तुं स्वजनानादिशत्। तदा शिशुहननार्थं चारयन्तीं स्वस्वरूपमाच्छाद्य शुभ-

---

१. क. पु. पाठः – महोत्सवादिना ।

रूपधरां नन्दगृहं प्राप्तां कंसधात्रीं पूतनां स्वहननार्थं विषोल्बणं स्तनं पाययन्तीं असुभिः सह स्तनं पीत्वा, तां हत्वा, तद्देहस्थां ताटकां नरकं नीत्वा, तुम्बुरुसङ्गदोषेण वित्तेश्वरशप्तां तत्सम्प्रविष्टां स्वभुक्तस्तनेन पूतामूर्वशीं तद्देहात् मोचयित्वा स्वर्गं प्रति प्रेष्य कदाचित् औत्थान-महोत्सवे वादित्रगीतमन्त्रवाचनपूर्वकं मात्रा यशोदया कृताभिषेचनं प्राप्य, शकटस्याधश्शायितः स्तनार्थी रुदन्, बन्धुजनपूजादौ व्यास-क्तया यशोदया अज्ञातः, पादाभ्यां चक्रं पातयित्वा, तद्गतं स्वहननार्थ-मुद्युक्तं शकटाक्षनामकदैत्यं हत्वा, कदाचित् लालयन्त्याः स्वमातुः यशोदाया अङ्कस्थः, तया वोढुमशक्यः भूमौ निहितः, तदा स्वहननार्थ-मागतं कंसभृत्यं चक्रवातरूपं रेणुभिश्चक्षूंषि मुष्णन्तं तृणावर्तनामकदैत्यं तेनान्तरिक्षमुन्नीतः, तं कण्ठे गृहीत्वा, लीलया शिलातले निपात्य, हत्वा, सर्वान् अतोषयत् इत्यादिकथा सूचिता ॥

**यो मातुर्जृम्भमाणो जगदिदमखिलं दर्शयन्नङ्करूढो**
**गर्गेणाचीर्णनामा कृतरुचिरमहाबाललीलो वयस्यैः ।**
**गोपीगेहेषु भाण्डस्थितमुरुदयया क्षीरदध्यादि मुष्णन्**
**मृन्नाभक्षीति मातुः स्ववदनजगद्भासयन् भासतां मे॥ २ ॥**

यः – कृष्णः, मातुः – यशोदायाः, अङ्करूढः— अङ्कः – उत्सङ्गः, 'उत्सङ्गचिह्नयोरङ्कः' इत्यमरोक्तेः । तस्मिन् रूढः स्थितः, जृम्भमाणः – मुखं व्याददानः । इदं प्रत्यक्षादिप्रमाणसिद्धम् । अखिलं – सप्तद्वीप-सप्तसमुद्र-पञ्चमहाभूत-स्थावर-जङ्गमाद्युपेतं जगत् – भूमण्डलं, दर्शयन् – प्रकाशयन्, मातुरित्यत्राप्यन्वेति । गर्गेण – गर्गाचार्येण । आचीर्ण-नामा— आचीर्णं कृतं नाम यस्य स तथा । बलरामेण सहेति शेषः ।

कृतरुचिरमहाबाललीलः— कृताः रुचिराः मनोहराः महत्यः बाललीलाः बालक्रीडाः येन स तथोक्तः। वयस्यैः समानवयस्कैर्बालकैः। सहेति शेषः। गोपीगेहेषु— गोपीनां – गोपस्त्रीणां, गेहेषु – गृहेषु। भाण्डस्थितं— भाण्डेषु – पात्रेषु 'सर्वमावपनं भाण्डं पात्रामत्रे च भाजनमि'त्यमरोक्तेः। स्थितं – विद्यमानं, क्षीरदध्यादि— क्षीरं च दधि च क्षीरदधिनी, ते आदिनी यस्य नवनीतादेः तत्तथा। उरुदयया— उर्वी च सा दया च तया, गोपस्त्रीष्विति शेषः। मुष्णन् – अपहरन्। मृत् – मृत्तिका। 'मृन्मृत्तिका प्रशस्ता तु' इत्यमरोक्तेः। नाभक्षि— न भक्षिता मयेति शेषः। 'भक्ष अदन' इत्यस्माद्धातोः कर्मणि लुङि अभक्षीति रूपम्, तेन नञोऽन्वयः। इति एवं वदन्, मातुः – यशोदायाः, स्ववदनजगत्— स्वस्य वदने विद्यमानं जगत् – भुवनम्। भासयन् – दर्शयिन्, य इति श्रवणात् स इति लभ्यते। सः – कृष्णः, मे – मम, भासताम् – सर्वविषयकज्ञानप्रदो भवेत्। 'भास दीप्तौ' लोडात्मनेपदम्॥

अनेन श्रीकृष्णः, कदाचित् स्वमातुरङ्कस्थः स्तनं पीत्वा जृम्भमाणः स्वं (मुखं) लालयन्त्याः यशोदायाः स्वविषयकतत्त्वज्ञानोदयार्थं सर्वं जगत् दर्शयित्वा, वसुदेवोक्त्या व्रजं प्राप्तेन गर्गेण क्षत्रिययोग्यान् संस्कारान् नाम च बलरामेण सह प्राप्य बलरामेण सह वयोऽनुसारेण क्व नु[१] जानुभ्यां सह पाणिभ्यां रिङ्गणम्, क्वचित् पादयुगलमनुकृष्य अभिसर्पणम्, कदाचित् वत्सपुच्छावलम्बनेन इतस्ततः संचरणम्, इत्यादि व्यापारैः मात्रादीन् सन्तोष्य, कदाचित् बालकैः सह गोपीगेहेषु गत्वा कोपरहितानां अनुग्रहाय, कोपयुक्तानां स्वयोग्यतातिरेकेण-कृत-शुभानि निहन्तुं नानाविधोपायैः क्षीरदध्यादिचौर्येण गृहीत्वा, स्वस्य लोकसाधारण्येन

१. क्वचिदिति प्रयोगः साध्विति भाति।

शिशुभावं कुर्वत्या मातुः, स्वविषयकतत्त्वज्ञानोदयार्थं वयस्यानां पुरतः मृदं भक्षयित्वा, तैः बोधितया मात्रा कस्मात् त्वं मृदं भक्षितवान् इति निर्भत्सितः, "नाहं भक्षितवान् अम्ब ! मृदं" इत्युक्त्वा, स्वमुखं व्यादाय, तस्मिन् साद्रिद्वीपाब्धिभूगोलं सर्वं दर्शयित्वा, मातुः स्वविषयकतत्त्वज्ञानं दत्वा (प्रदाय), तां अतोषयत् इत्यादिकथा सूचिता ॥

**दध्नोऽमत्रस्य भङ्गादुपगमितरुषा नन्दपत्न्याऽथ बद्धः**
**कृच्छ्रेणोलूखले यो धनपतितनयौ मोचयामास शापात् ।**
**नन्दाद्यैः प्राप्य वृन्दावनमिह रमयन् वेणुनादादिभिर्यो**
**वत्सान्पान्वत्सरूपं क्रतुभुगरिमथो पोथयन् सोऽवतान्माम्**
**॥ ३ ॥**

यः – कृष्णः, दध्नोऽमत्रस्य – दधिपूरितपात्रस्य, भङ्गात् – भेदनात्, उपगमितरुषा— उपगमिता – प्रापिता, रुट् – कोपः, यस्याः, 'कोपक्रोधामर्षरोषप्रतिघा रुट् क्रुधौ स्त्रियौ' इत्यमरोक्तेः, तया, नन्दपत्न्या— नन्दस्य पत्न्या – भार्यया – यशोदया, अथ – अनन्तरं, उलूखले – व्रीहितण्डुलाद्यवहननसाधनदारुपात्रे। कृच्छ्रेण – आयासेन, बद्धः – दाम्ना सन्दितः। धनपतितनयौ— धनपतिः कुबेरः, तस्य तनयौ – पुत्रौ, शापात्, मोचयामास – मोचितवान्। 'मुच्लृ मोक्षणे' इत्यस्माण्णिजन्ताद्धातोर्लिट्, तस्मिन्परतः 'कास्प्रत्ययादाममन्त्रे लिटि' इति आम् प्रत्यये कृते 'आम' इति लेर्लुकि, 'कृञ्चानुप्रयुज्यते लिटी'ति अस्तेर्लिडन्तस्यानुप्रयोगे मोचयामासेति रूपम्। अनुप्रयोगवचनसामर्थ्यात् अस्तेर्भूरिति भूभावो नेति ज्ञेयम्। नन्दाद्यैः – नन्द आद्यो येषां त उपनन्दादीनां ते, तैः, सहेति शेषः। वृन्दावनं – वृन्दावनाख्यं प्रदेशा-

न्तरम्, प्राप्य – गत्वा, इह – वृन्दावने, वेणुनादादिभिः— वेणोर्नादः शब्दविशेषः स आदिर्येषां व्यापाराणां तैः, रमयन् – क्रीडां कुर्वन्। अथ – अनन्तरम्। वत्सान् पान् – रक्षन्, वत्सरूपम् – वत्सस्य रूपमिव रूपं यस्य स तथा तम्। क्रतुभुगरिम्— क्रतुभुजो – देवाः, 'बहिर्मुखाः क्रतुभुजो गीर्वाणा दानवारयः' इत्यमरोक्तेः। तेषामरिं – शत्रुं, असुरम्। पोथयन् – ताडयन्, मरणं प्रापयन्निति वा। 'पुथि हिंसासंक्लेशनयोः' इत्यस्मात् भ्वादिकाण्णिजन्तात् शतृप्रत्यये पोथयन्निति रूपम्। सः कृष्णः, मामवतात् – रक्षतु। 'अव रक्षणे' लोट् परस्मैपदम्॥

अनेन श्रीकृष्णः कदाचित् दधिमथनं कुर्वत्याः स्वचरित्राणि गायन्त्याः मातुः, अङ्कारूढः स्तनं पिबन् अतृप्तप्रायः अधिश्रितमुत्सिच्यमानं पयः निधातुं जनन्या जवेनोत्सृष्टः, कोपेन दधिमथनभाजनमश्मना भित्वा चन्द्रसन्निभं नवनीतं समादाय रहो गत्वा उलूखलाङ्घ्रेरुपरि स्थितः मार्जारान् भक्षयित्वा, स्वयं च भक्षयन् अधिश्रितं पय अधो निधाय, भग्नं दध्यमत्रकं विलोक्य, स्वसुतस्य इदं चरित्रमिति निश्चित्य, स्वसमीपं प्राप्तामात्तयष्टिं जननीं दृष्ट्वा, उलूखलाङ्घ्रेरवप्लुत्य भीतबद्धवन् मात्रा अन्वीयमानः तस्य श्रमं दृष्ट्वा, स्वस्य भक्तवश्यतां प्रदर्शयन् तद्धस्तं प्राप्तः, स्वकृतापराधेन मात्रा एकेन दाम्ना उलूखले बद्ध्यमानः, तेन दाम्ना अपूर्णतां प्राप्य, तया पुनः पुनः आनीतैः दामसञ्चयैरपि द्व्यङ्गुलद्व्यङ्गुलैः अपूर्णतां यातः, सकलबन्धविमुक्तस्य स्वस्य बन्धायोग्यत्वं प्रदर्श्य पुनः पुत्रस्य मातृवश्यतां प्रदर्शयन् स्विन्नगात्र्या बहुश्रमयुक्तया स्वमात्रा एकवत्सपाशेन उलूखले बद्धः उलूखलं विकर्षन् यमलार्जुनवृक्षयोः मध्ये प्रविश्य तत्र तेन उलूखलेन तौ वृक्षान् उन्मूल्य नारदेन स्वसमीपे युवतिभिः सह कैलासोपवने गंगायां विवस्त्रतया क्रीडापराधनिमित्तेन

शप्तौ कुबेरपुत्रौ नलकूबरमणिग्रीवाख्यौ शापान्मोचयित्वा ताभ्यां स्तुतः तौ स्वगृहं प्रेष्य स्वयं च नन्दगोपेन दाम्नो मोचितः सर्वान् सन्तोष्य वृन्दावनं यियासुः सन् बृहद्वने वृकान् बले व्याघ्रसमान् सृष्ट्वा तैः पीडितैः उपनन्देन बोधितैः नन्दादिभिः सकलकामपूर्णं वृन्दावनं प्राप्य तत्र बलरामेण वेणुनादादिबालव्यापारैः क्रीडन् वयोऽनुसारेण बालैः सह वत्सान् चारयन्, क्वचित् यमुनातीरे स्वहननार्थं आगतं वत्सरूपधरं वत्सासुरनामकं कंसभृत्यं, अपरपादाभ्यां सह लाङ्गूलं गृहीत्वा, पातयित्वा कपित्थाग्रे निरस्य अधःपातयित्वा, तं हत्वा देवैः पुष्पैः अभिषिच्यमानः सर्वान् अतोषयत् इत्यादिकथा सूचिता ॥

**रक्षन्वत्सान्वयस्यैर्बकमभिनदथो तिग्मतुण्डे गृहीत्वा**
**प्रीतिं कर्तुं सखीनां खरमपि बलतो घातयन्कालियाहिम् ।**
**उन्मथ्योद्वास्य कृष्णामतिविमलजलां यो व्यधाद्दाववह्निं**
**सुप्तानावृत्य गोष्ठे स्थितमपिबदसौ दुष्टवृक्षच्छिदव्यात् ॥४॥**

यः – कृष्णः । अथो – अनन्तरं, वयस्यैः – समानवयस्कैर्बालकैः सहेति शेषः । वत्सान् रक्षन् – पालयन् । तिग्मतुण्डे— तिग्मं – तीक्ष्णं 'तिग्मं तीक्ष्णं खरमि'त्यमरोक्तेः । तुण्डं – वदनं, वक्त्रास्ये वदनं तुण्डमि'त्यमरोक्तेः । तिग्मे च तुण्डे च तिग्मतुण्डे, 'तुण्डद्वयं यदुपतिः करपल्लवाभ्यां सङ्गृह्य चाशु विददार च पक्षिदैत्यम्' इति भारततात्पर्यनिर्णयोक्तेः । 'तमापतन्तं स निगृह्य तुण्डयोर्दोर्भ्यां बकं कंससखं सतां गतिः' इति भागवतोक्तेश्च ।[1] गृहीत्वा हस्ताभ्यामिति

१. पश्यत्सु बालेषु ददार लीलया मुदावहो वीरणवद् दिवौकसाम् ॥
(भा. स्क. १०, अध्याय ११, श्लो. ५१, गोरखपुरीयपुस्तकम्)

शेषः । बकं – बकरूपधरम् । 'अथ बकः कह्वः पुष्कराह्वस्तु सारस' इत्यमरोक्तेः । बकाख्यासुरम् । अभिनत् – अदारयत् । 'भिदिर् विदारणे लङ् परस्मैपदम् । सखीनां '– श्रीदामप्रभृतिसकलगोपालानां, प्रीतिं – हर्षं, कर्तुम् । बलतः – बलरामात् । खरमपि – गर्दभस्वरूपं धेनुकाख्यासुरमपि घातयन् – संहरन् । कालियाहिं – कालियनामकसर्पं, उन्मथ्य – मथित्वा, उद्धास्य – निष्कास्य, यमुनाया इति शेषः । कृष्णां – यमुनां, अतिविमलजलां— अत्यन्तं विमलं – निर्मलं जलं यस्याः ताम् । व्यधात् – अकरोत् । 'डुधाञ् धारणपोषणयोः' कर्तरि लुङ् परस्मैपदम् । गोष्ठे – गवामावासस्थाने । 'गोष्ठं गोस्थानकम्' इत्यभिधानात् । सुप्तां – निद्रां प्राप्तान् । आवृत्य – परितः व्याप्य स्थितम् । दाववह्निं – वनवह्निम् । 'दवदावौ वनारण्यवह्नी' इत्यमरोक्तेः । अपिबत् – पानं कृतवान् । 'पापाने लङ् परस्मैपदम् । दुष्टवृक्षच्छित्— दुष्टश्चासौ वृक्षश्च तं वृक्षरूपं दैत्यं छिनत्तीति स तथा । असौ – कृष्णः, अव्यात् – रक्षेत् । मामिति शेषः । 'अव रक्षणे' लिङ् परस्मैपदम् ॥

अनेन कृष्णः कदाचित् वयस्यैस्सह वत्सांश्चारयन् यमुनातीरं गत्वा, जलं पाययित्वा तत्र स्वहननार्थं प्राप्तं स्कन्दप्रसादकवचं कंसभृत्यं बकपक्षिरूपं स्वभक्षणार्थं मुखं व्याददानं, तन्मुखे प्रविश्य, तत्कण्ठं दग्ध्वा, तेन पुनश्छर्दितः तुण्डं गृहीत्वा, विदार्य, तं हत्वा, वयोऽनुसारेण बलरामेण वयस्यैश्च सह तत्र तत्र वनेषु गाश्चारयन् गर्दभस्वरूपधेनुकासुररक्षितवनस्थतालफलभक्षणार्थं श्रीदामप्रभृतिभिः प्रार्थितः, तद्वनं गत्वा फलानि भक्षयित्वा, बलरामकम्पिततालफलपतनशब्दं श्रुत्वा, कोपेन आगत्य, बलरामताडनार्थं उद्युक्तं, विघ्नेश्वरवरात्

अन्यैरवध्यं धेनुकं बलरामेण घातयित्वा कदाचित् यमुनातीरे गाश्चारयन्, यमुनायाः प्रवेशविषये विद्यमानं कालियसर्पविषेण दूषितं जलं पीत्वा, मूर्च्छितान् पशून् वयस्यांश्च दृष्ट्वा, अमृतवर्षिण्या स्वदृष्ट्या तान् जीवयित्वा, तन्निमित्तं विचार्य तत्रत्यकदम्बवृक्षमधिरुह्य, सार्पह्रदे उत्प्लुत्य, तत्र विद्यमानं कालियाहिं पादाभ्यां मथित्वा, जीवनार्थं सभार्येण तेन प्रार्थितः, तत्कृतपूजां स्वीकृत्य, तेन स्तुतः सभार्यं सपरिवारं तं रमणकद्वीपं प्रति प्रेष्य निर्विषजलां यमुनां कृत्वा, तीरं प्राप्य गोपादिभिः स्तूयमानः, गोकुले उत्पातान् दृष्ट्वा स्वदर्शनार्थं प्राप्तान् मात्रादि सर्वजनान् गोपालांश्च संतोष्य तैः सह तां रात्रिं तत्र निवसन् सुप्तानावृत्य दहन्तं उद्धतबलमग्निं पीत्वा प्रातः तैः सह गोकुलं प्राप्य सर्वान् सन्तोषयन्, कदाचित् विषवृक्षस्वरूपात् ब्रह्मणो वरात् अन्यैः अवध्यादुग्राख्यासुरात् रोगपीडितान्, स्वजनान् दृष्ट्वा, तं वृक्षं तदाकारतत्परिवारवृक्षांश्च उन्मूल्य दग्ध्वा स्वकीयान् नीरोगान् कृत्वा सर्वान् अतोषयत् इत्यादिकथा सूचिता ॥

**दुर्गारण्यप्रवेशात् च्युतनिजसरणीन् गोगणानाह्वयद्यो**
**दावाग्निं तत्र पीत्वा समपुषदनुगान् गोपकानाविषण्णान् ।**
**गोभिर्गोपैः परीतः सरिदुदकतटस्थोपले भोज्यमन्नं**
**भुक्त्वा वेणोर्निनादाद् व्रजगतवनिताचित्तहारी**
**स माऽव्यात् ॥ ९ ॥**

**यः** – कृष्णः, दुर्गारण्यप्रवेशात्— दुर्गं गन्तुमशक्यं, अरण्यं – वनं, तस्मिन्, प्रवेशात् – गमनात् । च्युतनिजसरणीन्— च्युता – मुक्ता, निजा – स्वकीया, सरणिः – पन्थाः, यैः, 'सरणिः पद्धतिः पद्या वर्तन्येक-

पदीति चे'त्यभिधानात् । तान् गोगणान् – गवां गणान् – समुदायान्, आह्वयत् – आहूतवान् । 'ह्वेञ् स्पर्धायां शब्दे च' लङ् परस्मैपदम् । तत्र – अरण्ये, तस्मिन्समय इति वा । दावाग्निं – वनवह्निं, पीत्वा, अनुगान् – सहगान्, आविषण्णान् – सम्यग्भीतान्, तान्, गोपकान् – गोपालान्, समपुषत् – सम्यग्रक्षितवान् । 'पुष पुष्टौ' लुङ् परस्मैपदम् । गोभिः – धेनुभिः, गोपैः – गोपालैः, परीतः – अन्वितः, सरिदुदकतट-स्थोपले । सरितः – यमुनायाः, उदकं – जलं, तस्य तटं – तीरं, तस्मिन् तिष्ठतीति तटस्थः । उपलः – पाषाणः, 'पाषाणप्रस्तरग्रावो-पलाश्मानश्शिलादृषदि'त्यमरोक्तेः । भोज्यं – भोक्तुं योग्यं, तत्, अन्नं – दध्योदनं, भुक्त्वा – भोजनं कृत्वा, वेणोः निनादात् – शब्दात् । 'शब्दे निनादनिनद' इत्यभिधानात् । व्रजगतवनिताचित्तहारी— व्रजे – गोकुले, विद्यमानवनितानां – स्त्रीणां, चित्तं – मनः, हरति – अपहरति इति स तथा । सः – कृष्णः, मा – मां, अव्यात् – रक्षेत् । 'अव रक्षणे' लिङ् परस्मैपदम् ॥

अनेन कृष्णः कदाचित् बलरामादिगोपालैः सह दुर्गारण्ये तत्र तत्र वनेषु गाश्चारयन् तृणभक्षणाकाङ्क्षयातिगहनमुञ्जाटव्यां प्रविष्टान् गोपालैः अज्ञातान् दावाग्निना आवृतान् स्वस्वमार्गाज्ञानेनाक्रन्दन्तः गवादि-सकलपशुगणान् तत्तन्नाम्ना आहूय, गवादिपशूनां प्रतिनादं श्रुत्वा, गोपालैः सह तत्र गत्वा, दावाग्निं पीत्वा, सर्वान् रक्षित्वा, पुनः स्वस्थानं प्राप्य कदाचित् गोभिः गोपालैश्च सह तत्र तत्र सञ्चरन्, यमुनाजलसमीप एव विद्यमानशिलायां स्वगृहादानीतं दध्यन्नं बल-रामादिभिः सह भुक्त्वा कदाचित् बलरामादिभिः सह मनोहरं कुसुमित-वनं प्रविश्य स्मरोदयानुकूलवेणुनादं कुर्वन् तच्छ्रुत्वा स्मरवशेन

विक्षिप्तमनोयुक्तगोपस्त्रीभिः वर्णितचरित्रः, तदा स्वमुखोद्गीर्णवेणुनाद-स्वरात् श्रोतॄन् सर्वान् अतोषयत् इत्यादिकथा सूचिता ॥

**कृष्णोऽस्माकं पतिः स्यादिति कृततपसां मज्जने गोपिकानां**
**नग्नानां वस्त्रदाता द्विजवरवनिताऽऽनीतमन्नं समश्नन् ।**
**श्रान्तैर्गोपैः समं यो बलमथनबलावाहृतेऽस्मिन् स वृष्टौ**
**प्रोद्धृत्याहार्यवर्यं निजजनमखिलं**
**पालयन् पात्वसौ माम् ॥ ६ ॥**

यः – कृष्णः, अस्माकं – नः, पतिः – भर्ता, स्यात् – भवेत्, इति – एवं सङ्कल्प्य, कृततपसां– कृतं तपः याभिः तासां, मज्जने – स्नानकाले, नग्नानां – वस्त्ररहितानां, गोपिकानां – व्रजकुमारिकाणां, अत्र स्त्रीणां भृत्यभूतत्वेन सम्प्रदानत्वाभावाच्चतुर्थी न । वस्त्रदाता— वस्त्राणां – वाससां, दाता – प्रदाता ।

ननु दातृशब्दस्य तृजन्तत्वे कर्तरि चेति षष्ठीसमासनिषेधः; अतः कथं वस्त्रदातेति समास इति चेदुच्यते । तृजन्तत्वेऽपि 'जनिकर्तुः' इति सूत्रे मञ्जर्यादौ कर्तरि चेति निषेधस्यानित्यत्वोक्तेः, 'इदमस्थमुः' इत्यत्र 'उकारेण इकोचिविभक्तावि'त्यत्र अज्ग्रहणेनैव नञा निर्दिष्टस्य अनित्यत्वोक्तेर्वा 'याजकादिभ्यश्चे'ति वा षष्ठीसमासः, तेन कर्तरि चेति निषेधो न । तृन्नन्तत्वे च श्रितादिषु 'गम्यादीनामुपसङ्ख्यानं' इत्युक्तेः वस्त्राणि दातेति द्वितीयासमासः ।

द्विजवरवनिताऽऽनीतं— द्विजवराः – ब्राह्मणश्रेष्ठाः, तेषां वनिताः – स्त्रियः, ताभिरानीतं अन्नं, श्रान्तैः – क्षुत्पीडितैः, गोपैः – गोपालकैः, समं – साकं, समक्षन् – सम्यग्भोजनं कुर्वन् । बलमथनबलौ—

बलं – बलनामकदैत्यं मथ्नातीति बलमथनः – इन्द्रः, 'बलारातिश्शचीपतिरि'त्यभिधानात्। तस्य बलौ – भागधेये। 'भागधेयः करो बलिः' इत्यमरोक्तेः। आहृते – अपहृते सति, स्वेनेति शेषः। अस्मिन् – इन्द्रे, सवृष्टौ— वृष्ट्या सहितः सवृष्टिः, तस्मिन्, वर्षति सतीति यावत्। अहार्यवर्यं – पर्वतश्रेष्ठं, 'अहार्यधरपर्वता' इत्यमरोक्तेः। प्रोद्धृत्य – समुद्धृत्य (सम्यगुद्धृत्य), अखिलं – सर्वं, निजजनं – स्वकीयजनं, पालयन् – रक्षन्, असौ – कृष्णः, मां पातु – रक्षतु। 'पा रक्षणे' लोट् परस्मैपदम्॥

अनेन कृष्णः स्वपतित्वहेतोः कात्यायन्यर्चनादिभिः तपोनुष्ठात्रीणां, स्वस्ववासांसि तीरे निधाय, यमुनायां मज्जनं कुर्वतीनां कुमारिकाणामभीष्टफलदानाय वयस्यैः सह तत्र गत्वा, तानि वासांस्युपादाय नीपवृक्षमारुह्य ताभिः प्रार्थितः नानाविधोपहासपूर्वकं तासां वासांसि दत्वा ता अनुज्ञाप्य कदाचित् वयस्यैः सह, दूरे गाश्चारयन्, क्षुत्पीडितैः तैः भोजनार्थं प्रार्थितः, "समीप एव ब्राह्मणाः सत्रयागं कुर्वन्ति, यूयं तत्र गत्वा बलरामसहितं मामिहागतं तत्पत्नीभ्यो विज्ञापयत, ताः युष्माकं यथेष्टमन्नं दास्यन्ति" इत्युक्त्वा,ताननुज्ञाप्य ताभिरानीतं चतुर्विधं षड्रसोपेतं अन्नं बलरामादिभिः सह, भुंक्त्वा, तासां अनुग्रहं कृत्वा, ता अनुज्ञाप्य कदाचित् स्वस्य लोकसाधारण्येन मानुषभावं जानतः इन्द्रस्य, स्वविषयकतत्त्वज्ञानोदयार्थं तद्दर्पजिघांसया इन्द्रोद्देशेन प्रतिवर्षं क्रियमाणं उत्सवविशेषं, पर्वतोद्देशव्याजेन आत्मोद्देशेन नन्दादिभिः कारयित्वा स्वयमेव पर्वताकाररूपान्तरेण तत्सर्वं भुक्त्वा स्वमाहात्म्यं अजानता स्वविषयकमहोत्सवभङ्गरुषा इन्द्रेण व्रजपीडार्थमादिष्टैर्मेघैः कृतां वृष्टिं सोढुं अशक्तान् स्वकीयान् सर्वान् दृष्ट्वा तैः प्रार्थितः

गोवर्धनाख्यं पर्वतं, एकेन हस्तेन लीलया छत्रकारेण उद्धृत्य तांस्तत्र प्रवेश्य सुखेन रक्षित्वा सर्वान् अतोषयत् इत्यादिकथा सूचिता ॥ ६ ॥

**गोविन्दाख्योऽथ तातं जलपतिहृतमानीय लोकं स्वकीयं**
**नन्दादीनां प्रदर्श्य व्रजगतवनिताः गानकृष्टार्तचित्ताः ।**
**यः कालिन्द्यां निशायामरमयदमलज्योत्स्नया दीपितायां**
**चार्वङ्गीर्नर्मवाक्यैः स्तनभरनमिताः**
**प्रीणयन् प्रीयतान्नः ॥ ७ ॥**

यः – कृष्णः, अथ – अनन्तरं, गोविन्दाख्यः – गोविन्द इति आख्या यस्य स तथा । जलपतिहृतं— जलानां पतिः – स्वामी – वरुणः, तेन इति वा, जलपतिः – जलपालको वरुणभृत्यः असुरः, तेनेति वा, हृतं – अपहृतं, तातं – स्वपितरं नन्दगोपं, आनीय – आदाय, स्वकीयं – स्वस्य लोकं – वैकुण्ठं, नन्दादीनां – नन्द आदिर्येषां ते तथा, तेषां, प्रदर्श्य – दर्शयित्वा, गानकृष्टार्तचित्ताः— गानेन – वेणुगानेन, कृष्टं – आकर्षितं, आर्तं – मन्मथपीडितं, चित्तं – मनो यासां ताः, चार्वङ्गीः – चारूणि अङ्गानि यासां ताः चार्वङ्ग्यः, ताश्चार्वङ्गीः, 'स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्' इति सूत्रे 'अङ्गगात्रकण्ठेभ्यो वक्तव्यमि'ति वार्तिकवचनात् ङीष् । स्तनभरनमिताः— स्तनयोर्भरेण नमिताः – वल्गिताः, अत्र भरशब्दनिर्वाहः आद्यश्लोके उक्तः । व्रजगतवनिताः— व्रजे – गोकुले गताः – विद्यमानाः, वनिताः – स्त्रियः, नर्मवाक्यैः – उपहासवाक्यैः, प्रीणयन् – सन्तोषयन्, कालिन्द्यां – यमुनायां, तत्समीप इति यावत् । अमलज्योत्स्नया— अमला – निर्मला, ज्योत्स्ना – चन्द्रिका, तया, दीपितायां – निशायां–रात्रौ, अरमयत् – रमयामास ।

'रमु क्रीडायां' इत्यस्मात् णिजन्ताल्लुङि रूपमेतत् । सः – कृष्णः, प्रीयतां – प्रीतो भवेत् । 'प्रीङ् प्रीतौ' लोडात्मनेपदम् ॥

अनेन कृष्णः गोवर्धनोद्धारेण सर्वरक्षणानन्तरं स्वरक्षितं व्रजं दृष्ट्वा, स्वस्य नारायणावतारत्वं निश्चित्य, गतकोपेन स्वकृतापराधशान्त्यै, सुरद्रुमकामधेन्वादिभिः सह, स्वशरणं प्राप्तेन इन्द्रेण क्षीरादिभिः अभिषिक्तः तेन कृत "गाः पशून् विन्दति प्राप्नोति इति वा, गाः वेदवेदानुसारिवाचः प्रतिपाद्यतया विन्दतीति वा" इत्याद्यन्वर्थोपेतं 'गोविन्द' इति नाम च प्राप्य, कदाचित् एकादश्यां उपोष्य द्वादश्यां स्नानार्थं आसुरीं वेलां अविज्ञाय यमुनाजले निशि प्रविष्टं जलपालकेन वरुणभृत्येन वरुणान्तिकं नीतं स्वपितरं जलेऽपश्यद्भिः गोपालैः श्रुत्वा वरुणसमीपं प्राप्य, तेन क्षमापितः, तत्कृतपूजां स्वीकृत्य, नन्दगोपं आदाय, गोकुलं प्राप्य कदाचित् नन्दादीनां अनुग्रहार्थं स्वमहिमख्यापनाय ब्रह्महृदे स्नातानां तेषां दिव्यदृष्टिं दत्वा, स्वकीयमप्राकृतं मुक्तप्राप्यं वैकुण्ठलोकं तत्र च छन्दोभिमानिदेवैः स्तूयमानं स्वस्वरूपं च दर्शयित्वा तस्यां रात्रौ पूर्णचन्द्रिकया प्रकाशितायां, यमुनातीरे विराजमानं मनोहरं कुसुमितवनं क्रीडार्थं प्रविश्य अनङ्गवर्धनं वेणुनादं कृत्वा तच्छ्रुत्वा मन्मथपीडया गोदोहन-शिशुपालन-पतिसेवन–परिवेषणादि नानाविधस्वस्वव्यापारान् परित्यज्य, पत्यादिकृतविरोधमनादृत्य स्वसमीपं प्राप्ताभिः कमनीययुवतीभिः गोपस्त्रीभिः सह नानाविधोपहासपूर्वकं रममाणः सर्वान् अतोषयत् इत्यादि कथा सूचिता ॥ ७ ॥

**अन्तर्धत्ते स्म तासां मदहरणकृते त्वेकया क्रीडमानः**
**स्वस्कन्धारोहणाद्यैः पुनरपि पिहितो गर्वशान्त्यै मृगाक्ष्याः ।**

**खिन्नानां गोपिकानां बहुविधनुतिभिर्यो वहन्प्रीतिमाविः-**
**प्राप्तो रासोत्सवेन न्यरमयदबलाः प्रीयतां मे हरिः सः ॥ ८ ॥**

यः – कृष्णः, तासां – गोपस्त्रीणां, मदहरणकृते मदः – गर्वः, तस्य हरणम् – उपमर्दः, तस्य कृते – करणार्थम् । कृते इति विभक्तिप्रतिरूपकमव्ययं तादर्थ्योपज्ञा । 'डुकृञ्करणे' इति धातोः कर्मणि भावे वा 'क्विपि' धातोः तुगागमे 'कृत्' इति प्रातिपदिकम् । तस्माच्चतुर्थीविभक्तौ सत्यां 'कृते' इति रूपम् । तथैव चन्नुभट्टीये आद्यपद्यव्याख्याने उक्तेः । अन्तर्धत्ते स्म – अदृश्योऽभूत् । स्म अतीते, अन्तरुपपदात् 'डुधाञ् धारणपोषणयोः' इत्यस्माल्लडात्मनेपदे रूपम् । एकया तु गोपस्त्रिया सह, स्वस्कन्धारोहणाद्यैः— स्वस्य स्कन्धः – अंसः । 'स्कन्धो भुजशिरोऽसोऽस्त्री'त्यभिधानात् । तस्मिन्नारोहणं आद्यं येषां ते, तैः व्यापारैः, क्रीडमानः – क्रीडां कुर्वन्, मृगाक्ष्याः— मृगस्य – सारङ्गस्य अक्षिणी – लोचने इव अक्षिणी यस्याः सा मृगाक्षी, तस्याः, 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्' इति षचि 'षिद्गौरादिभ्यश्चे'ति ङीषि मृगाक्षीति रूपम् । 'सप्तम्युपमानपूर्वपदलोपश्चे'ति एकस्याक्षिशब्दस्य लोपः ।

गर्वशान्त्यै – गर्वस्य शान्त्यै – उपशमनार्थं, पुनरपि, पिहितः – अन्तर्धानं प्राप्तः, खिन्नानां – क्लेशयुक्तानां, गोपिकानां – गोपस्त्रीणां, बहुविधनुतिभिः – नानाविधस्तोत्रैः, प्रीतिं, वहन् – कुर्वन्, आविःप्राप्तः – आविर्भावं प्राप्तः । आविरित्यव्ययं प्रकाशवाचि । 'प्रकाशे प्रादुराविः स्यात्' इत्यव्ययवर्गे पाठात् । रासोत्सवेन – रासक्रीडाख्योत्सवेन, अबलाः – गोपस्त्रियः 'स्त्रीयोषिदबला योषा' इत्यमरोक्तेः । न्यरमयत् – क्रीडयामास । 'निपूर्वाद्रमु क्रीडायामि'ति णिजन्ताल्लुङि रूपमेतत् ।

सः – कृष्णः, हरिः – सकलतापापहारी, मे – मम, प्रीयतां – प्रसन्नो भवेत्। 'प्रीङ् प्रीतौ' लोडात्मनेपदम् ॥

अनेन कृष्णः पूर्वोक्तरीत्या गोपस्त्रीभिः सह वने विहरन् स्वाङ्गसङ्गेन गर्वितानां तासां गर्वोपशमनद्वारा अनुग्रहं कर्तुं अदृश्यो भूत्वा एकया सह किंचित् दूरं गत्वा, स्वस्कन्धारोहणादिभिः, क्रीडन्, गर्वितया तयापि पादाभ्यां चलितुं असमर्था मामूढ्वा, यत्र ते मनः तत्र गच्छेत्युक्तः तस्या अपि अदृश्यो भूत्वा ताभिः समेताभिः स्वदर्शनलालसाभिः सर्वत्र विचार्य पुनः यमुनातीरं प्राप्ताभिः गोपस्त्रीभिः कृते 'जयति तेऽधिकं' इत्यादि अनेकविधस्तोत्रैः सन्तुष्टः 'तासामाविरभूच्छौरिः' इत्यादि अनेकगुणविशिष्टतया, तासां दृष्टिविषयो भूत्वा, स्वाह्लादकरनानाविधवचनैः तासां सकलक्लेशं परिहृत्य ताभिः सह 'पादन्यासैर्भुजविधुतिभिः सस्मितभ्रूविलासैः' इत्याद्युक्तरीत्या, रासक्रीडाख्यमहोसत्वं कुर्वन् सर्वान् अतोषयत् इत्यादि कथा सूचिता ॥

**हत्वा यः शङ्खचूडं मणिमथ समदादग्रजायार्तगोपी-**
**गीतानेकस्वलीलो हृतवृषभमहापूर्वदेवोऽमरेड्यः ।**
**केशिप्राणापहारी सुरमुनिवदनप्रार्थिताशेषकृत्यो**
**हत्वा पुत्रं मयस्य स्वजनमपिहितं मोचयन् मोक्षदः स्यात् ।**
**॥ ९ ॥**

यः – कृष्णः, अथ – अनन्तरं, शङ्खचूडं – शङ्खचूडाख्यासुरं हत्वा, मणिं – शिरोरत्नं, अग्रजाय – बलरामाय, समदात् – दत्तवान्। 'डुदाञ् दाने' लुङ् परस्मैपदम्। 'गातिस्थे'ति सिचो लुक्। आर्तगोपीगीतानेकस्वलीलः— आर्ताः – दुःखिताः, गोप्यः – गोपस्त्रियः, ताभिः,

गीताः – सङ्गीताः, अनेकाः, स्वस्य लीलाः – व्यापाराः यस्य स तथोक्तः। हतवृषभमहापूर्वदेवः— हतः वृषभः – वृषभासुरः महान् पूर्वदेवः – दैत्यः येन स तथा। 'शुक्रशिष्यादितिसुताः पूर्वदेवाः सुरद्विषः' इत्यमरोक्तेः। अमरेड्यः – अमरैरिन्द्रादिभिरीड्यः – स्तुत्यः। केशिप्राणापहारी— केशिनः – केशिनामकस्य दैत्यस्य प्राणानपहरतीति स तथा। सुरमुनिवदनप्रार्थिताशेषकृत्यः— सुरमुनिः – नारदः, तस्य वदनेन प्रार्थितानि अशेषाणि कृत्यानि कर्तव्यानि यस्य स तथा। मयस्य अपत्यं – पुत्रं हत्वा, अपिहितं – आच्छादितं गिरिदर्यामिति शेषः। स्वजनं – स्वकीयं जनं, मोचयन् – गिरिकन्दराद्बहिर्निष्कासयन्, सः – कृष्णः, मोक्षदः – संसारगह्वरगुहाप्रवेशनिमित्तसकलक्लेशनिवृत्तिदः, स्यात् – भवेत्, ममेति शेषः। 'अस भुवि' लिङ् परस्मैपदम्॥

अनेन श्रीकृष्णः बलरामेण सहितः कदाचित् रात्रौ कुसुमितवने गोपस्त्रीभिः सह वेणुनादादिभिः क्रीडां कुर्वन् तदा स्वसमीपस्थगोपाङ्गनाः भीषयन्तं कुबेरभृत्यं रुद्रप्रसादेनातिगर्वितं, शङ्खचूडासुरं हत्वा, तच्छिरसि विद्यमानं रत्नं गृहीत्वा बलरामाय दत्वा प्रतिदिनं गोभिः सह वनेषु स्वस्य संचारसमये स्वमुखारविन्दादर्शनेन दुःखिताभिः गोपस्त्रीभिः तद्दुःखनिवृत्तये 'वामबाहुकृतवामकपोलो वल्गितभ्रुरधरार्पितवेणुः' इत्यादि नानाप्रकारैः अनुवर्णितचरित्रः कदाचित् गोकुलपीडार्थं आगतं अरिष्टनामकं रुद्रवरात् अवध्यं कंसभृत्यं वृषभासुरं हत्वा, तथा केशिनामानं तुरगस्वरूपं पार्वतीवरात् अवध्यं भक्षणार्थं मुखं व्यादाय स्वसमीपं प्राप्तं, तन्मुखे स्वबाहुं प्रवेश्य तत्र वर्धमानेन स्वबाहुना शीर्णास्यदन्तदशनच्छदरुद्धवायुं महासुरं हत्वा ब्रह्मादिभिः पुष्पैरभिषिच्यमानः, तैः स्तुतः, देवकार्यार्थं स्वसमीपं प्राप्तेन नारदेन विज्ञापितकंसवधाद्यागामिसकल-

कार्यः, तं अनुज्ञाप्य कदाचित् अद्रिसानुषु गाश्चारयन्, सर्वान् गोपालान् आहूय, कांश्चित् चोरत्वेन, कांश्चित् पालकत्वेन, कांश्चित् मोचयितृत्वेन विभज्य, निलायनक्रीडां कुर्वन्, तदा तु क्रीडार्थमागतं गोपालवेषधरं मेषायितान् बहून् गोपालान्, चोररूपेण आदाय, गिरिदर्यां विनिक्षिप्य, शिलया द्वारं पिधाय, पुनरवशेषितान् ग्रहीतुमुद्युक्तं व्योमनामकं मयपुत्रं चतुर्मुखवरादवध्यत्वं प्राप्तं मयासुरं हत्वा पिधानं निर्भिद्य सर्वान् गोपालान् बहिर्निस्सार्य ब्रह्मादिभिर्गोपालैश्च स्तूयमानः सकलगोपालैः सह गोकुलं प्रविश्य सर्वान् संतोष्य सुखेन स्थितवान् इत्यादिकथा सूचिता ॥

**अक्रूराकारितो यान् व्रजयुवतिजनान् सान्त्वयित्वाऽभितप्तान्**
**स्वं रूपं मज्जतेऽस्मै विलसितमहिगं दर्शयंस्तेन वन्द्यः ।**
**यो गत्वा कंसधानीं हृतरजकशिराश्चारुवेषः सुदाम्नः**
**प्रीतिं कुर्वंस्त्रिवक्रां व्यतनुत रुचिरां पौरमह्योऽवतात्सः ।**
**॥ १० ॥**

यः – कृष्णः, अक्रूराकारितः – अक्रूरेण आकारितः – आहूतः, यान् – गच्छन्, मथुरां प्रतीति शेषः । अभितप्तान् – सन्तप्तान्, व्रजयुवतिजनान्— व्रजे विद्यमानाः युवत्यः – यौवनं प्राप्ताः गोपस्त्रियः, तांश्च सान्त्वयित्वा – (तासां) मनस्समाधानं कृत्वा, मज्जते – स्नानं कुर्वते, अस्मै – अक्रूराय, विलसितं – प्रकाशमानं, अहिगं— अहिः – शेषः, तस्मिन् गं – विद्यमानं, स्वं – स्वकीयं, रूपं दर्शयन् – प्रकाशयन्, तेन – अक्रूरेण, वन्द्यः – नमस्कृतः, स्तुतश्च । 'वदि अभिवादनस्तुत्योः' इति धातुपाठात् । कंसधानीं – कंसनगरीं – मथुरां, गत्वा – प्राप्य, हृतरजकशिराः— हृतं – संहृतं, रजकस्य शिरो येन स तथा ।

चारुवेषः – चारवो वेषा अलङ्कारा यस्य स तथा । 'आकल्पवेषौ नेपथ्यमि'त्यमरः । सुदाम्नः – सुदामनामकस्वभक्तस्य, प्रीतिं कुर्वन्, त्रिवक्रां – कुब्जां – सैरन्ध्रीनाम्नीं स्त्रियं, रुचिरां – मनोहरां, व्यतनुत – अकरोत् । 'तनु विस्तारे करणे च' लङात्मनेपदम् । पौरमह्यः— पौरैः – मथुरापुरस्थजनैः मह्यः – पूज्यः, सः – कृष्णः, अवतात् – रक्षतु । मामिति शेषः । 'अव रक्षणे' आशिषि लोट् 'तुह्योस्तातङ्ङाशिष्यन्यतरस्यामि'ति[1] विकल्पेन तातङादेशः ॥

अनेन पूर्वोक्तरीत्या गोकुलस्थाने कृष्णे अद्भुतानि कर्माणि कुर्वति सति नारदः सुरकार्यार्थं कंससमीपं गत्वा वसुदेवेन कृतं गोकुलं प्रति कृष्णनयनादिकं सर्वं उक्तवान् । तदा कंसः क्रुद्धः सभार्यं वसुदेवं निगडबद्धं कृत्वा स्वमन्त्रिणं अक्रूरं आहूय बलरामकृष्णौ गोकुलादिह धनुर्महोत्सवनिरीक्षणार्थं आनय, तौ हनिष्यामि इत्युक्त्वा, अक्रूरं गोकुलं प्रति प्रेषितवान् । सः अक्रूरः पूर्वं किशोरनामा सुरगायकः स्वायम्भुवस्य च मनोः परमांशयुक्तः तथा चतुर्मुखस्यावेशयुक्तः कृष्णसेवार्थमुत्पन्नः, कृष्णपादारविन्ददर्शनोत्सुकमनाः रथमारुह्य गोकुलं प्राप्य, सबलं कृष्णं नत्वा, तेनादृतः, कंसचिकीर्षितं सर्वमुक्त्वा मथुरां प्रत्याहूतवान् । तदा कृष्णः तेन आहूतः, रथमारुह्य, नन्दादिभिः सर्वैः सह मथुरां गच्छन्, स्वविरहासहिष्णुभिः गोपस्त्रीभिर्वारितः, पुनरिह आयास्यामि इति सान्त्वयित्वा, ता अनुज्ञाप्य यमुनातीरं प्राप्य यमुनायां मज्जते अक्रूराय शेषस्थस्वस्वरूपं पौनःपुन्येन दर्शयित्वा तेन स्तुतः मथुरां प्राप्य अक्रूरमग्रे प्रेष्य, तत्रोपवने कृताह्निकः अपराह्णकाले गोपालैः सह मथुरां द्रष्टुं राजमार्गे गच्छन् तस्मिन् मार्गे आयान्तं कुञ्जरगतं

---

१. 'तुह्योस्तातङ्ङाशिष्यन्यतरस्याम्' पा.सू. ७-१-५ ।

कंसदयितं रजकं वस्त्राणि देहि इति प्रार्थ्य, तेन निराकृतः तस्य शिरः कराग्रेण छित्वा स्वयोग्यवासांसि गृहीत्वा, शेषाणि गोपेभ्यः दत्वा, ततः वापकेन कृतनानालङ्कारः ततः सुदाम्नः मालाकारस्य गृहं गत्वा तेन पूजितः तस्मात् पुष्पाणि गृहीत्वा अलंकृतः, तौ निजपार्षदावनुगृह्य राजमार्गे गच्छन्, गृहीताङ्गविलेपनभाजनां कुब्जां कंसधात्रीं सैरन्ध्रीं दृष्ट्वा, सुगन्धं प्रार्थ्य तद्दत्तसुगन्धानुलिप्ताङ्गः तस्यै प्रसन्नस्तां ऋज्वीं कृत्वा तया स्वगृहं प्रति प्रार्थितः, उपहासपूर्वमेष्यामि ते गृहमित्युक्त्वा, तां अनुज्ञाप्य स्वदर्शनार्थमागतैः स्त्रीपुरुषैः गन्धपुष्पाक्षतादिभिः अभिपूज्यमानः सर्वान् अतोषयत् इत्यादि कथा सूचिता ॥

**शार्वं भंक्त्वा धनुर्यो बलमपि धनुषो रक्षकं कुञ्जरं तं**
**मल्लांश्चाणूरपूर्वानपि सहसहजो मर्दयंस्तुङ्गमञ्चात् ।**
**भोजेशं पातयित्वा व्यसुमकृत निजानन्दयन् प्राप्य गर्गात्**
**द्वैजं संस्कारमाप्तो गुरुमथ विदिताशेषविद्योऽवतान्नः ।**
**॥ ११ ॥**

यः – कृष्णः, सहसहजः – सहजेन बलरामेण सहितः, 'तेन सहेति तुल्ययोगे' इति बहुव्रीहिसमासः । 'वोपसर्जनस्ये'ति विकल्पितत्वात् सहेत्यस्य सादेशो न । शार्वं— शर्वः – रुद्रः, तत्सम्बन्धि शार्वम्, धनुः कार्मुकं, भङ्क्त्वा – छित्वा, धनुषः रक्षकं बलमपि कंसभृत्यजातमपि भङ्क्त्वा – मर्दयित्वा, तं – प्रसिद्धं, कुञ्जरं – कुवलयापीडाख्यं गजं, चाणूरपूर्वानपि – चाणूरः पूर्वः आदिर्येषां ते तान्, मल्लानपि मर्दयन् – मरणं प्रापयन्, तुङ्गमञ्चात् – उन्नतमञ्चात्, भोजेशं – भोजदेशाधिपतिं कंसं, पातयित्वा – अधो निपात्य, व्यसुं – विगता असवः प्राणाः यस्य

तम्। 'पुंसि भूम्न्यसवः प्राणाः' इत्यमरः। अकृत – अकरोत्। 'डुकृञ् करणे' लुङ् आत्मनेपदम्। निजान् – पित्रादीन्, नन्दयन् – हर्षयन्, गर्गात् – गर्गाचार्यात्, द्वैजं संस्कारं – उपनयनसंस्कारं प्राप्य, अथ – अनन्तरं, गुरुं – सान्दीपिनिनामकं ब्राह्मणं, आप्तः – प्राप्तः, कर्तरि क्तः। विदिताशेषविद्यः— विदिताः – ज्ञाताः, अशेषाः विद्याः येन स तथा। सः – कृष्णः, नः – अस्मान्, अवतात् – रक्षतु। 'अव रक्षणे' लोट् परस्मैपदम्॥

अनेन सबलः कृष्णः पूर्वोक्तरीत्या राजमार्गे गच्छन् धनुषः गृहं प्राप्य रुद्रदत्तं सुभटैर्गुप्तं धनुरादाय छित्वा, तद्रक्षकसर्वबलं हत्वा, गोपैः सह उपवनं प्राप्य, क्षीरान्नं भुक्त्वा, रात्रिं सुखेन नीत्वा, प्रातः उत्थाय कृताह्निकः, कंसेन कार्यमाणमल्लक्रीडां द्रष्टुं बलरामादिभिर्वृतः रंगद्वारं समासाद्य, तस्मिन्नवस्थितं स्वहननार्थं कंसेन स्थापितं साम्बष्ठं गजं हत्वा चाणूराख्यमल्लं युद्धार्थमाहूतः, तं हत्वा, बलरामेण मुष्टिकं घातयित्वा अन्यान् द्रावयित्वा मञ्चस्थं मातुलं कंसं, मूर्ध्नि सङ्गृह्य भूमौ निपात्य हत्वा, तद्बलं सकलं हत्वा, स्वपितरौ निगडाद्विमुच्य, सर्वान् सन्तोष्य, गर्गात् उपनयनसंस्कारं प्राप्य, लोकशिक्षणाय अवन्तिपुरवासिनं सान्दीपिनिंगुरुं बलरामेण सह प्राप्य तेन सकृन्निगदितमात्रेण सर्वा विद्याः प्राप्य सर्वान् अतोषयत् इत्यादिकथा सूचिता॥

**दत्वा पुत्रं प्रवक्त्रे प्रतिगतमधुरः सान्त्वयन्नुद्धवास्या-**
**द्गोष्ठस्थान्नन्दपूर्वानरमयदबलां प्रीतिकृद्यः शुभस्य।**
**अक्रूरस्याथ तेन प्रतिविदितपृथापुत्रकृत्यो जरायाः**
**सूनुं निर्भिन्नसेनं व्यतनुत बहुशो विद्रुतं नः स पायात्॥१२॥**

कंसदयितं रजकं वस्त्राणि देहि इति प्रार्थ्य, तेन निराकृतः तस्य शिरः कराग्रेण छित्वा स्वयोग्यवासांसि गृहीत्वा, शेषाणि गोपेभ्यः दत्वा, ततः वापकेन कृतनानालङ्कारः ततः सुदाम्नः मालाकारस्य गृहं गत्वा तेन पूजितः तस्मात् पुष्पाणि गृहीत्वा अलंकृतः, तौ निजपार्षदावनुगृह्य राजमार्गे गच्छन्, गृहीताङ्गविलेपनभाजनां कुब्जां कंसधात्रीं सैरन्ध्रीं दृष्ट्वा, सुगन्धं प्रार्थ्य तद्दत्तसुगन्धानुलिप्ताङ्गः तस्यै प्रसन्नस्तां ऋज्वीं कृत्वा तया स्वगृहं प्रति प्रार्थितः, उपहासपूर्वमेष्यामि ते गृहमित्युक्त्वा, तां अनुज्ञाप्य स्वदर्शनार्थमागतैः स्त्रीपुरुषैः गन्धपुष्पाक्षतादिभिः अभिपूज्यमानः सर्वान् अतोषयत् इत्यादि कथा सूचिता ॥

**शार्वं भंक्त्वा धनुर्यो बलमपि धनुषो रक्षकं कुञ्जरं तं**
**मल्लांश्चाणूरपूर्वानपि सहसहजो मर्दयंस्तुङ्गमञ्चात् ।**
**भोजेशं पातयित्वा व्यसुमकृत निजान्नन्दयन् प्राप्य गर्गात्**
**द्वैजं संस्कारमाप्तो गुरुमथ विदिताशेषविद्योऽवतान्नः ।**
**॥ ११ ॥**

यः – कृष्णः, सहसहजः – सहजेन बलरामेण सहितः, 'तेन सहेति तुल्ययोगे' इति बहुव्रीहिसमासः । 'वोपसर्जनस्ये'ति विकल्पितत्वात् सहेत्यस्य सादेशो न । शार्वं— शर्वः – रुद्रः, तत्सम्बन्धि शार्वम्, धनुः कार्मुकं, भङ्क्त्वा – छित्वा, धनुषः रक्षकं बलमपि कंसभृत्यजातमपि भङ्क्त्वा – मर्दयित्वा, तं – प्रसिद्धं, कुञ्जरं – कुवलयापीडाख्यं गजं, चाणूरपूर्वानपि – चाणूरः पूर्वः आदिर्येषां ते तान्, मल्लानपि मर्दयन् – मरणं प्रापयन्, तुङ्गमञ्चात् – उन्नतमञ्चात्, भोजेशं – भोजदेशाधिपतिं कंसं, पातयित्वा – अधो निपात्य, व्यसुं – विगता असवः प्राणाः यस्य

तम् । 'पुंसि भूम्यसवः प्राणाः' इत्यमरः । अकृत – अकरोत् । 'डुकृञ् करणे' लुङ् आत्मनेपदम् । निजान् – पित्रादीन्, नन्दयन् – हर्षयन्, गर्गात् – गर्गाचार्यात्, द्वैजं संस्कारं – उपनयनसंस्कारं प्राप्य, अथ – अनन्तरं , गुरुं – सान्दीपिनिनामकं ब्राह्मणं, आप्तः – प्राप्तः, कर्तरि क्तः । विदिताशेषविद्यः— विदिताः – ज्ञाताः, अशेषाः विद्याः येन स तथा । सः – कृष्णः, नः – अस्मान्, अवतात् – रक्षतु । 'अव रक्षणे' लोट् परस्मैपदम् ॥

अनेन सबलः कृष्णः पूर्वोक्तरीत्या राजमार्गे गच्छन् धनुषः गृहं प्राप्य रुद्रदत्तं सुभटैर्गुप्तं धनुरादाय छित्वा, तद्रक्षकसर्वबलं हत्वा, गोपैः सह उपवनं प्राप्य, क्षीरान्नं भुक्त्वा, रात्रिं सुखेन नीत्वा, प्रातः उत्थाय कृताह्निकः, कंसेन कार्यमाणमल्लक्रीडां द्रष्टुं बलरामादिभिर्वृतः रंगद्वारं समासाद्य, तस्मिन्नवस्थितं स्वहननार्थं कंसेन स्थापितं साम्बष्टं गजं हत्वा चाणूराख्यमल्लं युद्धार्थमाहूतः, तं हत्वा, बलरामेण मुष्टिकं घातयित्वा अन्यान् द्रावयित्वा मञ्चस्थं मातुलं कंसं, मूर्ध्नि सङ्गृह्य भूमौ निपात्य हत्वा, तद्बलं सकलं हत्वा, स्वपितरौ निगडाद्विमुच्य, सर्वान् सन्तोष्य, गर्गात् उपनयनसंस्कारं प्राप्य, लोकशिक्षणाय अवन्तिपुरवासिनं सान्दीपिनिंगुरुं बलरामेण सह प्राप्य तेन सकृन्निगदितमात्रेण सर्वा विद्याः प्राप्य सर्वान् अतोषयत् इत्यादिकथा सूचिता ॥

**दत्वा पुत्रं प्रवक्त्रे प्रतिगतमधुरः सान्त्वयन्नुद्धवास्या-**
**द्गोष्ठस्थान्नन्दपूर्वानरमयदबलां प्रीतिकृद्यः शुभस्य ।**
**अक्रूरस्याथ तेन प्रतिविदितपृथापुत्रकृत्यो जरायाः**
**सूनुं निर्भिन्नसेनं व्यतनुत बहुशो विद्रुतं नः स पायात् ॥१२॥**

यः – कृष्णः, प्रवक्त्रे – विद्योपदेष्ट्रे – सान्दीपिनये, पुत्रं – कुमारं, दत्वा, प्रतिगतमधुरः— प्रतिगता – पुनः प्राप्ता, मधुरा येन स तथा। उद्धवास्यात्— उद्धवस्य आस्यात् – मुखात्, गोष्ठस्थान् – गोकुलस्थान्, नन्दपूर्वान्— नन्दः पूर्वो येषां ते तान्, सान्त्वयन् – हर्षयन्, अबलां – सैरन्ध्रीं, अरमयत् – रमयामास। शुभस्य – सत्कर्मयुक्तस्य, अक्रूरस्य, प्रीतिकृत् – प्रीतिं करोतीति प्रीतिकृत्। अथ – अनन्तरं, तेन – अक्रूरेण, प्रतिविदितपृथापुत्रकृत्यः— प्रतिविदितानि – विज्ञापितानि, 'अन्तर्भावितण्यर्थः', पृथायाः – कुन्त्याः, पुत्राणां – पाण्डवानां, कृत्यानि – कर्माणि यस्य स तथा। जरायाः – जराख्यायास्त्रियः, सूनुं – जरासन्धमिति यावत्। निर्भिन्नसेनं— निर्भिन्ना – विदारिता सेना यस्य तम्। 'गोस्त्रियोरुपसर्जनस्ये'ति ह्रस्वः। बहुशः – बहुवारं, विद्रुतं – पलायितं, व्यतनुत – अकरोत्। 'तनु विस्तारे करणे च' लङात्मनेपदम्। वीत्युपसर्गपूर्वत्वम्। सः – कृष्णः, नः – अस्मान्, पायात् – रक्षेत्। 'पा रक्षणे' लिङ् परस्मैपदम्।

अनेन कृष्णः बलरामेण सह पूर्वोक्तरीत्या सकलविद्याः सान्दीपिनेरवाप्य तेन गुरुणा शिष्यसामर्थ्याभिज्ञेन गुरुदक्षिणार्थं 'प्रभासक्षेत्रे समुद्रे मृतं मम पुत्रमानय' इत्युक्तः, रथं आरुह्य प्रभासक्षेत्रं प्राप्य वरुणवचनेन समुद्रस्थं शङ्खरूपधरं पंचजनाह्वयं दैत्यं हत्वा तदुदरे गुरुपुत्रमदृष्ट्वा पंचजनाङ्गप्रभवं शङ्खमादाय यमपुरीं गत्वा यमेनानीतं गुरुपुत्रं स्वगुरवे दत्वा तेनानुज्ञातः मथुरां प्राप्य, वृष्णीनां प्रवरं सखायं बुद्धिशालिनं उद्धवं स्वविरहेण दुःखितान् गोकुलस्थसर्वसज्जनान् स्वसन्देशैर्हर्षयितुं प्रेष्य, कामतप्तायाः पूर्वमेव प्रार्थनां कृतवत्याः सैरन्ध्याः गृहं प्राप्य, तया सह क्रीडां कृत्वा, तस्याः मनोऽभीष्टं कृत्वा,

अक्रूरगृहं प्राप्य, तेन कृतां पूजां स्वीकृत्य, हस्तिनाह्वयपुरस्थान् पितृवियुक्तान् वनादृषिभिः आनीतान् कुरुभिः पीड्यमानान् पाण्डवान् विचारयितुं अक्रूरं प्रेष्य तद्वृत्तान्तं श्रुत्वा, पुत्रीवैधव्यसंक्रुद्धं युद्धार्थं मथुरां प्रत्यागतं त्र्यधिकविंशदक्षौहिणीसेनायुक्तं, ब्रह्मेशदूर्वासोदत्तवरैरजेयं जरासन्धं, तत्सेनां सर्वां हत्वा, बहुशः तं पलायितं कृत्वा, सर्वान् अतोषयत् इत्यादि कथा सूचिता ॥

**पुर्या निर्गत्य रामादथ सहमुसली प्राप्य कृष्णोऽभ्यनुज्ञां**
**गोमन्तं चापि मौलिं खगपतिविहितं वासुदेवं शृगालम् ।**
**हत्वा शत्रुं च पुर्यामधिजलधिपुरीं निर्मितां बन्धुवर्गान्**
**निन्ये यः सोऽवतान्नः प्रमथितयवनो मौचुकुन्दाक्षिवह्नेः ।**
**॥ १३ ॥**

यः – कृष्णः, सहमुसली— मुसलः अस्यास्तीति मुसली – बलरामः, 'अयोग्रं मुसलो स्त्री स्यादि'त्यभिधानात्, तेन सहितः । अथ – अनन्तरं, पुर्याः – मथुरायाः, निर्गत्य – निस्सृत्य, रामात् – परशुरामात्, अभ्यनुज्ञां प्राप्य, गोमन्तश्च – गोमन्तनामकपर्वतश्च, प्राप्य, खगपतिविहितं— खगपतिः – गरुडः, तेन विहितं – दत्तं, मौलिमपि – किरीटमपि प्राप्य, 'चूडा किरीटं केशाश्च संयता मौलयस्त्रयः' इत्यभिधानात् । शृगालं वासुदेवं – शृगालवासुदेवाख्यं, शत्रुश्च, पुर्यां – करवीरपुराख्यपुर्यां, हत्वा । अधिजलधि— जलधौ – समुद्रे, 'अव्ययं विभक्तिसमीपसमृद्धी'त्यादिना विभक्त्यर्थे अव्ययीभावः । निर्मितां पुरीं – द्वारकाख्यां पुरीं, बन्धुवर्गान् – यादवगणान्, निन्ये – प्रापितवान् । 'णीञ् प्रापणे' लिडात्मनेपदम् । 'दह्याच्पच्' इत्यादिना द्विकर्मकत्वम् । मौचुकुन्दा-

क्षिवह्नेः— मुचुकुन्दस्येमे मौचुकुन्दे, ते च ते अक्षिणी च मौचुकुन्दाक्षिणी, तयोर्जातो वह्निस्तस्मात्। प्रमथितयवनः— प्रमथितः – नाशितः, यवनः – कालयवनाख्यः, म्लेच्छः येन स तथा। सः – कृष्णः, नः – अस्मान्, अवतात् – रक्षतु। 'अव रक्षणे' लोट् परस्मैपदम्॥

अनेन कृष्णः बलरामेण सहितः पूर्वोक्तरीत्या जरासन्धं बहुशः विद्रुतं कृत्वा, बलवता विरोधे अल्पबलेन तत्र न स्थातव्यमिति लोकनीतिं प्रदर्शयितुं स्वेच्छयैव अतिदुर्गं गोमन्तं पर्वतं द्रष्टुं मथुराया निर्गत्य गच्छन् मार्गे कश्चित् प्रदेशे वृक्षमूलनिवासिनं शिष्यगणसमावृतं परशुरामं दृष्ट्वा, तेन अनुमोदितः, तेनानुज्ञामादाय, गोमन्तपर्वतस्य अधःप्रदेशे विद्यमानकरवीरपुरस्थं, पूर्वं वसुदेवात्करवीरेश्वरसुतायां दनुस्वरूपभूतायां पुत्रिकापुत्रन्यायेनोत्पन्नं प्राक् धुन्धुनामकं मधुसुतं दैत्यं शृगालवासुदेवं स्वशत्रुं हत्वा गोमन्तं प्राप्य, तत्रस्थमत्युन्नतं प्रवर्षणाख्यं शृङ्गं प्राप्य, तत्र रममाणः, तत्र क्षीराब्धौ मुक्तस्थानादमुक्तसेव्यस्थलं प्राप्य, संसृतिस्थैः सुराद्यैः सेव्यमानं नारायणं द्रष्टुं आगतं, नारायणशिरसि विद्यमानं किरीटं अपहृत्य, गच्छन्तं तद्गतासुरावेशप्रकटनाय देवैः सह, सुप्तवद्विद्यमानेन नारायणेनोपेक्षितं विरोचनसुतं बलिं विजित्य, पुरपालकेन गरुडेनादाय स्वशिरसि समर्पितकिरीटं प्राप्य गिरेरवरुह्य करवीरपुरं प्राप्य तत्र चतुरो मासान् उषित्वा महत्या सेनया सह मधुरां प्राप्य शृगालवासुदेववधकोपेन युद्धार्थमागतं जरासन्धं पुनश्च पलायितं कृत्वा, तेन जरासन्धसहायार्थमागतं तिसृभिर्म्लेच्छकोटिभिः सहितं मथुरायाः निरोधकं कालयवनं दृष्ट्वा जरासन्धगमनं च निश्चित्य स्वजनरक्षणार्थं समुद्रे द्वादशयोजन-

विस्तीर्णां मनोहरां द्वारकाख्यपुरीं कृत्वा मथुरायाः निर्गत्य कालयवनस्य समीपे निरायुधः द्रवन्, युद्धार्थं कालयवनेनान्वीयमानः दूरे किञ्चन गिरिकन्धरं प्राप्य, तत्र कालयवनं नीत्वा देवासुरयुद्धकाले देवार्थं असुरान् निर्जित्य, प्रसन्नैर्देवैर्दत्तं बहुकालनिद्रालक्षणवरं, निद्राभङ्गकृतः क्षयलक्षणवरं च प्राप्य, तत्र सुप्तं मुचुकुन्दनामकं राजानं क्रुद्धेन काल-यवनेन उत्थाप्य 'अनर्थको वरोऽमुना वृतोऽपि सार्थको भवेत्'[1] इति देवैः उक्तं सत्यं कर्तुं मुचुकुन्दाक्षिवह्निस्वरूपेण स्वयमेव कालयवनं नाशयित्वा सर्वान् अतोषयत् इत्यादिकथा सूचिता ॥

**राज्ञा संस्तूयमानो हतयवनबलो भीतवन्मागधेशात्**
**गोमन्तं प्राप्य भूयो जितमगधपतिर्जातशान्ताग्निशैलः ।**
**आगत्य द्वारकां यो हृदिकसुतगिरा ज्ञातकौन्तेयकृत्यः**
**पश्यत्स्वादाय भैष्मीं नृषु युधि जितवान्**
**भूभृतः प्रीयतां नः ॥ १४ ॥**

यः – कृष्णः, राज्ञा – मुचुकुन्देन, संस्तूयमानः – सम्यक् स्तूयमानः, हतयवनबलः— हतयवनबलः – हतं यवनस्य – कालयवनस्य बलं – सेना येन स तथोक्तः, मागधेशात् – जरासन्धात्, भीतवत् – भीत इव 'तेन तुल्यं क्रिया चेद्वतिरि'ति वतिप्रत्यये रूपमेत् अव्ययञ्च । भूयः – पुनः, गोमन्तं प्राप्य, जितमगधपतिः– जितः मगधपतिः – जरासन्धो येन स तथोक्तः । जातः – उत्पन्नः, शान्तः— नाशितः अग्निर्यस्य स तथोक्तः । तादृशः शैलः – पर्वतो यस्य स तथोक्तः । 'अद्रिगोत्रगिरि-ग्रावाचलशैलशिलोच्चयाः' इत्यभिधानात् । द्वारकाम् आगत्य – प्राप्य,

---

१. अरिं भविष्ययावनं दहत्वयं तवेश्वर ॥ इत्युत्तरार्धम् । म.भा.ता.नि. १७-१२८

हृदिकसुतगिरा— हृदिकस्य सुतः कृतवर्मा, तस्य गिरा – वाचा, ज्ञातकौन्तेयकृत्यः— ज्ञातं, कौन्तेयानां – कुन्तीपुत्राणां – पाण्डवानां, कृत्यं – कर्म, यस्य स तथोक्तः । कुन्तीशब्दादपत्यार्थे 'स्त्रीभ्यो ढगि'ति ढक्प्रत्यये 'किति चे'त्यादि वृद्धौ 'आयनेयीनीयिय' इत्यादिना ढस्य एय् आदेशे 'यस्येति चे'तीकारलोपे कौन्तेयेति रूपम् । नृषु – जनेषु, पश्यत्सु, भैष्मीं – भीष्मस्यापत्यं स्त्री भैष्मी, तां – रुक्मिणीं, आदाय – गृहीत्वा, भूभृतः – नृपान्, युधि – युद्धे, जितवान्, सः – कृष्णः, नः – अस्माकं, प्रीयतां – प्रसन्नो भवेत् । 'प्रीङ् प्रीतौ' इत्यस्माद्धातोर्लोडात्मनेपदे रूपमेतत् ॥

अनेन कृष्णः पूर्वोक्तरीत्या कालयवनवधानन्तरं मुचुकुन्देन दृष्टस्तेन राज्ञा 'विमोहितोऽयं जन ईशमायये'[१]त्यादि बहुप्रकारैः स्तुतः तमनुज्ञाप्य स्वयमपि गिरिकन्दरान्निष्क्रम्य मथुरां प्राप्य यवनबलं सर्वं हत्वा पुनश्च युद्धार्थमागतं जरासन्धं जित्वा पुनश्चोद्युक्तं दृष्ट्वा भीतवत् बलरामेण सह गोमन्तकं प्राप्य तत्रापि युद्धार्थमागतेन जरासन्धेन गिरिं परित उत्पादितं वह्निमधः उत्प्लवता साग्रजेन स्वेन निष्पीडिताद्भूमौ एकादशयोजनं निमग्नात्पर्वतादुत्पन्नाज्जलसमूहान् नाशयित्वा, द्वारकां प्राप्य, कदाचित् सभायां नृपैः सेव्यमानः पाञ्चालराजं द्रुपदं बलैः कुन्तीसुतैः युद्धे बद्धं श्रुत्वा प्रहृष्टहृदयः तद्वृत्तान्तं वेदितुं हस्तिनपुरं प्रति कृतवर्माणं प्रेष्य तद्वचनेन तत्सर्वं श्रुत्वा कुण्डिनपुरे स्वयंवरायोद्युक्तां स्वस्मिन्नेव दत्तचित्तां तदग्रजेन रुक्मिणा शिशुपालाय सङ्कल्पितां रुक्मिणीं श्रुत्वा तया ब्राह्मणहस्तेन प्रेषितं 'श्रुत्वा गुणान् भुवनसुन्दर

१. त्वदीयया त्वां न भजत्यनर्थदृक् । सुखाय दुःखप्रभवेषु सज्जते गृहेषु योषित्पुरुषश्च वञ्चितः ॥ भा. १०-५१-४७

सङ्गमांस्ते निर्विश्य कर्णविवरं हरतोऽङ्गतापम् । रूपं परं भुवनमङ्गल-मङ्गलं च' [1]इत्याद्यनेकप्रकारस्तुतिपूर्वकं लिखितं पत्रं वाचयित्वा सन्तुष्टः रथं आरुह्य बलरामादि सकलगोपालैः सह महत्या सेनया युतः कुण्डिनपुरं प्राप्य, भीष्मकेण पूजितः तं ब्राह्मणं रुक्मिणीं प्रति प्रेष्य, तद्वचनेन सन्तुष्टः अम्बिकापूजाव्याजेन बहिर्निर्गताम् अनेकभटैर्गुप्तां अम्बिकालयं प्राप्य, पार्वतीपूजां कृत्वा तथा शचीपूजां च कृत्वा, बहिर्निर्गतां राजमण्डलैः परिवृतां साक्षादिन्दिरां, मनोहरानलकान्वाम-करजैरुत्सार्य स्वमुखारविन्दं पश्यन्तीं रुक्मिणीं रथमारोप्य, रुक्मि-ण्यपहारकोपेन युद्धार्थमागतान् शिशुपालपक्षपाति साल्व-जरासन्धादि सर्वभूपान् विनिर्जित्य, स्वकीयैः सर्वैः सह शनैः द्वारकां प्रति गच्छन् सर्वान् अतोषयत् इत्यादि कथा सूचिता ॥

**वैरूप्यं रुक्मिणो योऽकृत मणिसहितां जाम्बवद्देहजातां**
**सत्यां तेनैव युक्तामपि परिजगृहे हस्तिनं कुल्यहेतोः ।**
**यातो व्यस्यात्र सत्याशुचमथ समगाद् द्वारकां सत्ययेतो**
**द्रष्टुं पार्थान् सकृष्णान् द्रुपदपुरमगाद्विद्धलक्ष्यान्**
**स पायात् ॥ १५ ॥**

यः – कृष्णः, रुक्मिणः – रुक्मिनामकस्य, वैरूप्यं – विरूपतां, अकृत – अकरोत्, 'डुकृञ् करणे' कर्तरि लुङात्मनेपदम् । मणिसहितां मणिना – स्यमन्तकमणिना, सहितां – युक्तां, जाम्बवद्देहजातां – जाम्बवतो देहाज्जातां जाम्बवतीमिति यावत् । तेनैव मणिनैव युक्तां, सत्यामपि – सत्यभामामपि, परिजगृहे – परिगृहीतवान्, अस्य उभयत्र

---

१. त्वय्यच्युताविशति चित्तमपत्रपं मे ॥ भा. १०-५७-३६

हृदिकसुतगिरा— हृदिकस्य सुतः कृतवर्मा, तस्य गिरा – वाचा, ज्ञातकौन्तेयकृत्यः— ज्ञातं, कौन्तेयानां – कुन्तीपुत्राणां – पाण्डवानां, कृत्यं – कर्म, यस्य स तथोक्तः । कुन्तीशब्दादपत्यार्थे 'स्त्रीभ्यो ढगि'ति ढक्प्रत्यये 'किति चे'त्यादि वृद्धौ 'आयनेयीनीयियं' इत्यादिना ढस्य एय् आदेशो 'यस्येति चे'तीकारलोपे कौन्तेयेति रूपम् । नृषु – जनेषु, पश्यत्सु, भैष्मीं – भीष्मस्यापत्यं स्त्री भैष्मी, तां – रुक्मिणीं, आदाय – गृहीत्वा, भूभृतः – नृपान्, युधि – युद्धे, जितवान्, सः – कृष्णः, नः – अस्माकं, प्रीयतां – प्रसन्नो भवेत् । 'प्रीङ् प्रीतौ' इत्यस्माद्धातोर्लोडात्मनेपदे रूपमेतत् ॥

अनेन कृष्णः पूर्वोक्तरीत्या कालयवनवधानन्तरं मुचुकुन्देन दृष्टस्तेन राज्ञा 'विमोहितोऽयं जन ईशमायये'[1]त्यादि बहुप्रकारैः स्तुतः तमनुज्ञाप्य स्वयमपि गिरिकन्दरान्निष्क्रम्य मथुरां प्राप्य यवनबलं सर्वं हत्वा पुनश्च युद्धार्थमागतं जरासन्धं जित्वा पुनश्चोद्युक्तं दृष्ट्वा भीतवत् बलरामेण सह गोमन्तकं प्राप्य तत्रापि युद्धार्थमागतेन जरासन्धेन गिरिं परित उत्पादितं वह्निमधः उत्प्लवता साग्रजेन स्वेन निष्पीडिताद्भूमौ एकादशयोजनं निमग्नात्पर्वतादुत्पन्नाज्जलसमूहान् नाशयित्वा, द्वारकां प्राप्य, कदाचित् सभायां नृपैः सेव्यमानः पाञ्चालराजं द्रुपदं बलैः कुन्तीसुतैः युद्धे बद्धं श्रुत्वा प्रहृष्टहृदयः तद्वृत्तान्तं वेदितुं हस्तिनपुरं प्रति कृतवर्माणं प्रेष्य तद्वचनेन तत्सर्वं श्रुत्वा कुण्डिनपुरे स्वयंवरायोद्युक्तां स्वस्मिन्नेव दत्तचित्तां तदग्रजेन रुक्मिणा शिशुपालाय सङ्कल्पितां रुक्मिणीं श्रुत्वा तया ब्राह्मणहस्तेन प्रेषितं 'श्रुत्वा गुणान् भुवनसुन्दर

१. त्वदीयया त्वां न भजत्यनर्थदृक् । सुखाय दुःखप्रभवेषु सज्जते गृहेषु योषित्पुरुषश्च वञ्चितः ॥ भा. १०-५१-४०

सङ्गमांस्ते निर्विश्य कर्णविवरं हरतोऽङ्गतापम्। रूपं परं भुवनमङ्गलमङ्गलं च' [1]'इत्याद्यनेकप्रकारस्तुतिपूर्वकं लिखितं पत्रं वाचयित्वा सन्तुष्टः रथं आरुह्य बलरामादि सकलगोपालैः सह महत्या सेनया युतः कुण्डिनपुरं प्राप्य, भीष्मकेण पूजितः तं ब्राह्मणं रुक्मिणीं प्रति प्रेष्य, तद्वचनेन सन्तुष्टः अम्बिकापूजाव्याजेन बहिर्निर्गताम् अनेकभटैर्गुप्तां अम्बिकालयं प्राप्य, पार्वतीपूजां कृत्वा तथा शचीपूजां च कृत्वा, बहिर्निर्गतां राजमण्डलैः परिवृतां साक्षादिन्दिरां, मनोहरानलकान्वामकरजैरुत्सार्य स्वमुखारविन्दं पश्यन्तीं रुक्मिणीं रथमारोप्य, रुक्मिण्यपहारकोपेन युद्धार्थमागतान् शिशुपालपक्षपाति साल्व-जरासन्धादि सर्वभूपान् विनिर्जित्य, स्वकीयैः सर्वैः सह शनैः द्वारकां प्रति गच्छन् सर्वान् अतोषयत् इत्यादि कथा सूचिता॥

**वैरूप्यं रुक्मिणो योऽकृत मणिसहितां जाम्बवद्देहजातां**
**सत्यां तेनैव युक्तामपि परिजगृहे हस्तिनं कुल्यहेतोः।**
**यातो व्यस्यात्र सत्याशुचमथ समगाद् द्वारकां सत्ययेतो**
**द्रष्टुं पार्थान् सकृष्णान् द्रुपदपुरमगाद्विद्धलक्ष्यान्**
**स पायात्॥ १५॥**

यः – कृष्णः, रुक्मिणः – रुक्मिनामकस्य, वैरूप्यं – विरूपतां, अकृत – अकरोत्, 'डुकृञ् करणे' कर्तरि लुङात्मनेपदम्। मणिसहितां मणिना – स्यमन्तकमणिना, सहितां – युक्तां, जाम्बवद्देहजातां – जाम्बवतो देहाज्जातां जाम्बवतीमिति यावत्। तेनैव मणिनैव युक्तां, सत्यामपि – सत्यभामामपि, परिजगृहे – परिगृहीतवान्, अस्य उभयत्र

---

१. त्वय्यच्युताविशति चित्तमपत्रपं मे॥ भा. १०-५७-३६

अन्वयः । 'परिपूर्वाद्ग्रह उपादाने' इत्यस्माल्लिडात्मनेपदे रूपमेतत् । हस्तिनं – हस्तिनाह्वयं पुरं, कुल्यहेतोः— कुल्यं – दावदाहाख्यं, तस्य हेतोः तद्विचारणार्थं, यातः – गतः, अत्र – हस्तिनापुरे, सत्याशुचं— सत्यायाः – सत्यभामायाः, शुचं – दुःखं, व्यस्य – निरस्य, सत्यया – सत्यभामया, इतः – युक्तः, द्वारकां, समगात् – प्राप्तवान्, 'इण् गतौ' इत्यस्माल्लुङि 'इणो गा लुङि' इति गादेशे रूपमेतत् । विद्धलक्ष्यान्— विद्धं – वेधितं, लक्ष्यं – शरव्यं, यैस्ते, तान्, 'लक्षं लक्ष्यं शरव्यं च' इत्यभिधानात् । सकृष्णान्— कृष्णा – द्रौपदी, तया सहितान्, पार्थान्— पृथायाः – कुन्त्याः, पुत्रान् – पाण्डवान्, पृथाशब्दात् 'अवृद्धाभ्यो नदीमानुषीभ्यस्तन्नामिकाभ्यः' इति चतुर्थाध्यायप्रथम-पादीयसूत्रेण, 'स्त्रीभ्यो ढक्' इत्युक्तढगपवादकतया अपत्यार्थे 'अण्-प्रत्यये' पार्थेति रूपम् । द्रष्टुं द्रुपदपुरं— द्रुपदाख्यस्य राज्ञः पुरं, अगात् । सः – कृष्णः, पायात् – रक्षेत्, मामिति शेषः । 'पा रक्षणे' लिङ् परस्मैपदे रूपम् ॥

अनेन कृष्णः स्वकृतराक्षसविवाहमसहमानं स्वद्वेषिणं रुक्मिण्यग्रजं युद्धार्थमागतं रुक्मिणं तदीयवाससा निबध्य पञ्चचूडिनं विधाय तं विसृज्य, द्वारकां प्राप्य, सर्वान् स्वकीयान् भूपालानाहूय वेदोक्त-मार्गेण रुक्मिणीं उद्वाह्य, सर्वान् सन्तोष्य, सुखेन निवसन्, कदाचित् सूर्यमण्डलान्तर्गतं हरिं सन्तोष्य, तस्माद्धरेः स्यमन्तकाख्यसूर्यमण्डल-सदृशप्रकाशं मणिं प्राप्य कण्ठे धृत्वा, स्वसेवार्थं द्वारकामागतं सत्राजितं तन्मनोगतलोभप्रकाशनाय 'मणिं देही'ति प्रार्थ्य, तेन लुब्धेन निराकृतः कदाचित् तदनुजेन मृगयार्थं वनं गच्छता प्रसेनेन कण्ठे धृतं, प्रसेनं

हत्वा सिंहेनापहृतं, सिंहं हत्वा ऋक्षराजेन जाम्बवतानीतं मणिमजानता सत्राजिता, 'मदनुजं हत्वा कृष्णेन अपहृतो मणिः' इति उपांशूदितं क्रमेण पौरजनैः श्रुत्वा स्वगतनिन्दादोषपरिहाराय सकलयादवैः सह प्रसेन-मार्गेण वनं गत्वा तत्र पूर्वोक्तं सर्वं यादवानां प्रदर्श्य सर्वान् बहिरव-स्थाप्य, एक एव जाम्बवद्बिलं प्रविश्य, स्वरूपमजानता तेन साकं महत् युद्धं कृत्वा श्रान्तेन तेन स्वोपास्यं रामं स्मरता रामभिन्नतया ज्ञातः, 'यस्यैष उत्कटितरोषकटाक्षमोक्षैः वर्त्माऽतनोत्क्षुभितनक्रतिमि-ङ्गिलोऽब्धिः । सेतुः कृतः स्वयश उज्वलिता च लंका रक्षः शिरांसि भुवि रेजुरिषुक्षतानि ॥''[1] इत्यादिरूपेण रामाभिन्नतया स्तुतश्च तं अनुगृह्य युवानं कृत्वा, तेन दत्तां तत्पुत्रीं जाम्बवतीं स्यमन्तकमणिना सह उपादाय, जाम्बवदभीष्टं कृत्वा, गुहामुखात् निष्क्रम्य, द्वारकां प्राप्य, पित्रादीन् सन्तोष्य, सभायां समस्तवृष्णिसन्निधौ सत्राजितमाहूय तस्मै स्यमन्तक-मणिं दत्वा, तेन सत्राजिता मिथ्याभिशंसनरूपस्वकृतापराधशान्त्यै दत्तां तत्पुत्रीं साक्षात् लक्ष्मीं सत्यभामां सरत्नकां परिगृह्य, मणिं तस्मिन्नेव निधाय, तया सह रममाणः, कदाचित् लाक्षागृहे दग्धाः पाण्डवाः इत्याकर्ण्य, बन्धुदुःखविचारार्थं हस्तिनपुरं प्राप्य धृतराष्ट्रादीन् सान्त्व-यित्वा. अक्रूर-कृतवर्म-बोधित-शतधन्वना स्यमन्तकार्थं हतं सत्राजितं सत्यभामया हस्तिनपुरं प्राप्तया श्रुत्वा, तामपि सान्त्वयित्वा, तया सह द्वारकां प्राप्य, तस्मिन् समये द्रौपदीस्वयंवरं कुर्वता द्रुपदेनाहूतः पाञ्चाल-नगरं प्राप्य, कृतलक्ष्यवेधान् द्रौपदीं प्राप्तान् पाण्डवान् ब्राह्मणरूपधरान् कुम्भारकस्य शालायां दृष्ट्वा, तै पूजितः, सर्वान् अतोषयत् इत्यादिकथा सूचिता ॥

---

१. भा. १०-६०-२८

**कृष्णः प्राप्याथ सत्राजिदहितवधकृद्यः श्वफल्कस्य सूनौ**
**रत्नं सन्दर्श्य रामं व्यधित गतरुषं द्रष्टुकामः प्रतस्थे ।**
**इन्द्रप्रस्थस्थपार्थानथ सहविजयो यामुनं तीरमायन्**
**कालिन्दीं तत्र लब्ध्वा यमसुतपुरकृत्पातु**
**मां द्वारकास्थः ॥ १६ ॥**

यः – कृष्णः, अथ – अनन्तरं, प्राप्य, द्वारकामिति शेषः । सत्राजिदहितवधकृत्— सत्राजितः अहितः – शत्रुः – शतधन्वा, तस्य वधं करोतीति स तथोक्तः । श्वफल्कस्य – श्वफल्कनामकयादवस्य, सूनौ – पुत्रे – अक्रूरे विद्यमानमिति शेषः । रत्नं – स्यमन्तकं, सन्दर्श्य – दर्शयित्वा, रामं – बलरामं, गतरुषं— गता रुट् – कोपो यस्य सः गतरुट्, तम् । व्यधित – अकरोत् । 'डुधाञ् धारणपोषणयोः' लुङात्मनेपदम् । इन्द्रप्रस्थस्थपार्थान् – इन्द्रप्रस्थाख्यपुरे विद्यमानान् पार्थान्, द्रष्टुकामः[१] द्रष्टुं कामो इच्छा यस्य स तथा । प्रतस्थे – गतवान्, 'ष्ठा गतिनिवृत्तौ', 'समवप्रविभ्यस्थ' इति सूत्रेण आत्मनेपदम् । लिट् । अथ – अनन्तरं, सहविजयः— विजयेन – अर्जुनेन सह वर्तत इति स तथोक्तः । यामुनं – यमुनायाः सम्बन्धि, 'तस्येदमि'त्यण्प्रत्यये आदिवृद्धौ यामुनमिति रूपम् । तीरं – तटम् । आयन् – आगच्छन् । तत्र – यमुनातीरे, कालिन्दीं – कालिन्दीनाम्नीं स्त्रियम्, लब्ध्वा – प्राप्य, यमसुतपुरकृत्— यमस्य सुतः – धर्मः, तस्य पुरं – इन्द्रप्रस्थं, करोतीति स तथा । द्वारकास्थः – द्वारकां प्राप्तः । सः – कृष्णः, मां पातु – रक्षतु । 'पा रक्षणे' लोट् परस्मैपदम् ॥

---

१. 'तुं काममनसोरपि' इत्यनेन तुमुनो मकारलोपः ।

अनेन श्रीकृष्णः पूर्वोक्तरीत्या पाण्डवान् विचार्य पाञ्चालदेशात् द्वारकां प्राप्य, सत्राजिद्वधकृतं शतधन्वानं हन्तुं विचार्य, अक्रूरे मणिं न्यस्य, भीत्या अश्वं आरुह्य शतयोजनं पलायितं शतधन्वानं बलरामेण सह रथमारुह्य अतिद्रुत्या मिथिलोपवनप्रदेशे चक्रेण तस्य शिरश्छित्वा तस्मिन् मणिं अदृष्ट्वा, बलरामं प्रत्युक्त्वा, स्वस्मिन् विप्रलिप्साबुद्ध्या मैथिलनगरं प्रति गच्छन्तं बलरामं अनुज्ञाप्य, स्वयं च द्वारकां प्राप्य सर्ववृत्तान्तं सत्यभामायै उक्त्वा, तत्पितुः और्ध्वदैहिकं कर्म कारयित्वा द्वारकायां अक्रूरानवस्थाननिमित्तेन नानाविधव्याधिपीडितैः स्वजनैः अक्रूरागमनार्थं प्रार्थितः, शतधन्ववधं श्रुत्वा, स्वभीत्या देशान्तरगतं अक्रूरं बलरामं च आहूय, अक्रूरे विद्यमानं स्यमन्तकं बलरामाय प्रदर्श्य तं सान्त्वयित्वा, बन्धूनां व्याधिशान्तिं कृत्वा, पुनश्च अक्रूरस्यैव मणिं दत्वा, कदाचित् पाण्डवान् द्रष्टुं बलरामादिभिः सह इन्द्रप्रस्थनगरं प्राप्य, पाण्डवैः सम्पूजितः, तत्प्रीत्यर्थं तत्रैव इन्द्रप्रस्थे वर्षाकाले निवसन्, कदाचित् अर्जुनेन सह मृगयार्थं वने संचरन्, यमुनातीरं प्राप्य, तत्र स्वपतित्वहेतोः तपः कुर्वतीं सवितुः पुत्रीं कालिन्दीनाम्नीं प्राप्य विश्वकर्माणमाहूय इन्द्रप्रस्थं अतिविस्तीर्णतया पुरन्दरपुरप्रख्यं कारयित्वा पाण्डवैरनुज्ञातः स्वजनैः सह द्वारकां एत्य कालिन्दीविवाहं कृत्वा तया सह रममाणः सर्वान् अतोषयत् इत्यादिकथा सूचिता ॥

**यो जह्रे मित्रविन्दामथ दृढवृषभान् सप्त बध्वाथ नीलां**
**भद्रां मद्रेशकन्या[1]मपि परिजगृहे शक्रविज्ञापितार्थः ।**
**तार्क्ष्यारूढः सभार्यो हिमगिरिशिखरे भौमदुर्गं समेत्य**

१. क. पु. पाठः – मद्रेशपुत्रीं ।

**छित्वा दुर्गाणि कृन्त्वा मुरगलमरिणा**

**देवतेड्यः स माऽव्यात् ॥ १७ ॥**

यः – कृष्णः, मित्रविन्दां – मित्रविन्दाख्यां, जह्रे – प्राप्तवान् । 'हृञ् हरणे' लिडात्मनेपदम् । अथ – अनन्तरं, सप्त – सप्तसङ्ख्याकान्, दृढवृषभान्— दृढाः – बलिष्ठाः, ते च ते वृषभाश्च, तान्, बद्ध्वा – पाशैर्बन्धनं कृत्वा, नीलामपि जह्रे इति पूर्वेणान्वयः । भद्रां भद्राख्यामपि जह्रे इत्यन्वयः । मद्रेशकन्यामपि— मद्रेशस्य – मद्रदेशाधिपतेः, कन्यां – लक्षणाख्यामपि, परिजगृहे – परिगृहीतवान् । परीत्युपसर्गपूर्वक 'ग्रह उपादाने' इत्यस्माल्लिडात्मनेपदम् । शक्रविज्ञापितार्थः— शक्रेण – इन्द्रेण, विज्ञापितः, अर्थः – प्रयोजनं, यस्य स तथा । 'अर्थोऽभिधेयरैवस्तु प्रयोजननिवृत्तिषु' इत्यमरः । ताक्ष्र्यारूढः— ताक्ष्र्ये – गरुडे आरूढः – स्थितः, 'गरुत्मान् गरुडस्ताक्ष्र्य' इत्यमरोक्तेः । सभार्य – भार्यया सत्यबामया सहितः । हिमगिरिशिखरे— हिमगिरेः – हिमवत्पर्वतस्य, शिखरे – प्रदेशविशेषे, 'कूटोऽस्त्री शिखरं शृङ्गमि'त्यभिधानात् । भौमदुर्गं— भूमेरपत्यं पुमान् भौमः – नरकासुरः, तस्य, दुर्गं – पुरं, समेत्य – प्राप्य, दुर्गाणि – गिरिदुर्गादीनि, छित्वा, मुरगलं— मुरस्य – मुराख्यासुरस्य, गलं – कण्ठं, 'कण्ठं गलोऽथ ग्रीवायामि'-त्यभिधानात् । अरिणा – चक्रेण, कृन्त्वा – छित्वा, 'कृती छेदने' इत्यस्मात् त्क्त्वाप्रत्यये रूपमेतत् । देवतेड्यः— देवैः ईड्यः – स्तुत्यः, सः – कृष्णः, मा – मां , 'त्वामौ द्वितीयाया' इति द्वितीयैकवचनान्तः अस्मदो मा इत्यादेशः । अव्यात् – रक्षत् । 'अव – रक्षणे' लिङ् परस्मैपदम् ॥

अनेन कृष्णः कालिन्दीविवाहानन्तरं पितृष्वसुः सुतां मित्रविन्दां स्वयंवरे बलात् आहृत्य, सकलभूपालान् तिरस्कृत्य, नग्नजिन्नामकस्य राज्ञः पुरं प्राप्य, तेन पूजितः स्वपुत्रीवरेच्छया पुंसां बलपरीक्षणार्थं नग्नजिता संपादितान् तीक्ष्णशृङ्गान् अतिबलिष्ठान् सप्त वृषभान् स्वयं च सप्तरूपेण लीलया पाशैः बद्ध्वा राजानं सन्तोष्य तेन दत्तां तत्पुत्रीं नीलाख्यां प्राप्य केकयदेशाधिपतेः श्रुतिकीर्तिनाम्नः पुत्रीं भद्रां च प्राप्य, सुतां च मद्राधिपतेः लक्षणां लक्षणैर्युतां स्वयंवरे लक्षवेधं कृत्वा प्राप्य, नरकासुरपीडितेन इन्द्रेन नरकासुरवधार्थं प्रार्थितः इन्द्रं अनुज्ञाप्य, सभायां रुक्मिण्याः नारदानीतपारिजातपुष्पदानेन कुपितायाः सत्यभामायाः पारिजातवृक्षदानेन कोपशान्त्यर्थं स्वभार्यया सत्यभामया सह गरुडं आरुह्य हिमगिरिशिखरस्थं प्राग्जोतिषाख्यं गिरिजलाग्निमुरपाशादिदुर्गैः आवृतं भौमपुरं प्राप्य, गिरिदुर्गं गदया भित्वा जलदुर्गं वायुना शोषयित्वा वारुणास्त्रेण अग्निदुर्गं नाशयित्वा मुरपाशदुर्गं स्वखड्गेन छित्वा, अन्तः प्रविश्य युद्धार्थं आगतं भौममन्त्रिणं पञ्चमुखं मुराख्यं निरायुधं कृत्वा, तस्य शिरांसि चक्रेण छित्वा, देवैः प्रसूनैः अभिषिच्यमानः सर्वान् अतोषयत् इत्यादिकथा सूचिता ॥

**त्रिंशत्पञ्चावधीद्यो सचिववरसुतान् भूमिजेनातिघोरं**
**युद्धं कृत्वा गजाद्यैररिहृतशिरसं तं व्यधाद् भूस्तुतोऽथ ।**
**कृत्वा राज्येऽस्य सूनुं वरयुवतिजनान् भूरिशश्चारुवेषान्**
**प्रापय्य द्वारकां सोऽकृत मुदमदितेः कुण्डलाभ्यामवेन्माम् ।**
**॥ १८ ॥**

**छित्वा दुर्गाणि कृन्त्वा मुरगलमरिणा**

**देवतेड्यः स माऽव्यात् ॥ १७ ॥**

यः – कृष्णः, मित्रविन्दां – मित्रविन्दाख्यां, जह्रे – प्राप्तवान् । 'हृञ् हरणे' लिडात्मनेपदम् । अथ – अनन्तरं, सप्त – सप्तसङ्ख्याकान्, दृढवृषभान्— दृढाः – बलिष्ठाः, ते च ते वृषभाश्च, तान्, बद्ध्वा – पाशैर्बन्धनं कृत्वा, नीलामपि जह्रे इति पूर्वेणान्वयः । भद्रां भद्राख्या-मपि जह्रे इत्यन्वयः । मद्रेशकन्यामपि— मद्रेशस्य – मद्रदेशाधिपतेः, कन्यां – लक्षणाख्यामपि, परिजगृहे – परिगृहीतवान् । परीत्युपसर्गपूर्वक 'ग्रह उपादाने' इत्यस्माल्लिडात्मनेपदम् । शक्रविज्ञापितार्थः— शक्रेण – इन्द्रेण, विज्ञापितः, अर्थः – प्रयोजनं, यस्य स तथा । 'अर्थोऽभिधेय-रैवस्तु प्रयोजननिवृत्तिषु' इत्यमरः । तार्क्ष्यारूढः— तार्क्ष्ये – गरुडे आरूढः – स्थितः, 'गरुत्मान् गरुडस्तार्क्ष्य' इत्यमरोक्तेः । सभार्य – भार्यया सत्यबामया सहितः । हिमगिरिशिखरे— हिमगिरेः – हिमव-त्पर्वतस्य, शिखरे – प्रदेशविशेषे, 'कूटोऽस्त्री शिखरं शृङ्गमि'त्यभि-धानात् । भौमदुर्गं— भूमेरपत्यं पुमान् भौमः – नरकासुरः, तस्य, दुर्गं – पुरं, समेत्य – प्राप्य, दुर्गाणि – गिरिदुर्गादीनि, छित्वा, मुरगलं— मुरस्य – मुराख्यासुरस्य, गलं – कण्ठं, 'कण्ठं गलोऽथ ग्रीवायामि'-त्यभिधानात् । अरिणा – चक्रेण, कृन्त्वा – छित्वा, 'कृती छेदने' इत्यस्मात् क्त्वाप्रत्यये रूपमेतत् । देवतेड्यः— देवैः ईड्यः – स्तुत्यः, सः – कृष्णः, मा – मां , 'त्वामौ द्वितीयाया' इति द्वितीयैकवचनान्तः अस्मदो मा इत्यादेशः । अव्यात् – रक्षेत् । 'अव – रक्षणे' लिङ् परस्मैपदम् ॥

अनेन कृष्णः कालिन्दीविवाहानन्तरं पितृष्वसुः सुतां मित्रविन्दां स्वयंवरे बलात् आहृत्य, सकलभूपालान् तिरस्कृत्य, नग्नजिन्नामकस्य राज्ञः पुरं प्राप्य, तेन पूजितः स्वपुत्रीवरेच्छया पुंसां बलपरीक्षणार्थं नग्नजिता संपादितान् तीक्ष्णशृङ्गान् अतिबलिष्ठान् सप्त वृषभान् स्वयं च सप्तरूपेण लीलया पाशैः बद्ध्वा राजानं सन्तोष्य तेन दत्तां तत्पुत्रीं नीलाख्यां प्राप्य केकयदेशाधिपतेः श्रुतिकीर्तिनाम्नः पुत्रीं भद्रां च प्राप्य, सुतां च मद्राधिपतेः लक्षणां लक्षणैर्युतां स्वयंवरे लक्षवेधं कृत्वा प्राप्य, नरकासुरपीडितेन इन्द्रेन नरकासुरवधार्थं प्रार्थितः इन्द्रं अनुज्ञाप्य, सभायां रुक्मिण्याः नारदानीतपारिजातपुष्पदानेन कुपितायाः सत्यभामायाः पारिजातवृक्षदानेन कोपशान्त्यर्थं स्वभार्यया सत्यभामया सह गरुडं आरुह्य हिमगिरिशिखरस्थं प्राग्जोतिषाख्यं गिरिजलाग्निमुरपाशादिदुर्गैः आवृतं भौमपुरं प्राप्य, गिरिदुर्गं गदया भित्वा जलदुर्गं वायुना शोषयित्वा वारुणास्त्रेण अग्निदुर्गं नाशयित्वा मुरपाशदुर्गं स्वखड्गेन छित्वा, अन्तः प्रविश्य युद्धार्थं आगतं भौममन्त्रिणं पञ्चमुखं मुराख्यं निरायुधं कृत्वा, तस्य शिरांसि चक्रेण छित्वा, देवैः प्रसूनैः अभिषिच्यमानः सर्वान् अतोषयत् इत्यादिकथा सूचिता ॥

**त्रिंशत्पञ्चावधीद्यो सचिववरसुतान् भूमिजेनातिघोरं**
**युद्धं कृत्वा गजाद्यैररिहृतशिरसं तं व्यधाद् भूस्तुतोऽथ ।**
**कृत्वा राज्येऽस्य सूनुं वरयुवतिजनान् भूरिशश्चारुवेषान्**
**प्रापय्य द्वारकां सोऽकृत मुदमदितेः कुण्डलाभ्यामवेन्माम् ।**
**॥ १८ ॥**

यः – कृष्णः, त्रिंशत्पञ्च – पञ्चोत्तरत्रिंशत्सङ्ख्याकान् । सचिववरसुतान्— सचिवाः – मन्त्रिणः, 'मन्त्री धी सचिवोऽमात्य' इत्यभिधानात् । तेषां वराः – श्रेष्ठाश्च ते सुताश्च, तान् । अवधीत् – जघान । 'हन हिंसागत्योः' लुङि वधादेशे अवधीत् इति रूपम् । गजाद्यैः— गजः आद्य येषां अश्वादीनां तैः, सहितेनेति शेषः । भूमिजेन – नरकासुरेण, सहेति शेषः । अतिघोरं – भयङ्करम्, युद्धं कृत्वा, तं – नरकासुरं, अरिहृतशिरसं— अरिणा – चक्रेण, हृतं – अपहृतं, शिरो यस्य सः अरिहृतशिराः, तं, व्यधात् – अकरोत् । विपूर्वात् 'डुधाञ् धारणपोषणयोः' इत्यस्माल्लुङि रूपमेतत् । अथ – अनन्तरं, भूस्तुतः— भुवा – भूदेव्या, स्तुतः, अस्य – भौमस्य, सूनुं – पुत्रं भगदत्तनामानं, राज्ये – राज्याधिपत्ये कृत्वा, चारुवेषान्— चारुः – मनोहरः, वेषः – अलङ्कारः, येषां ते, तान्, 'आकल्पवेषौ नेपथ्यम्' इत्यभिधानात् । भूरिशः – वहून्, वरयुवतिजनान्— युवतयः – यौवनस्थाः स्त्रियः, वराश्च ते युवतिरूपजनाश्च, तान्, द्वारकां, प्रापय्य – यापयित्वा, 'गतिबुद्धिप्रत्यवसानार्थे'त्यादिना द्विकर्मकत्वम्, अदितेः – अदितिनाम्न्याः इन्द्रमातुः, कुण्डलाभ्यां – कर्णभूषणाभ्यां, मुदं – हर्षं, 'मुत्प्रीतिः प्रमदो हर्ष' इत्यभिधानात् । अकृत – अकरोत् । 'डुकृञ् करणे' लुङात्मनेपदम् । सः – कृष्णः, मां अवेत् – रक्षेत् । 'अव रक्षणे' लिङ् परस्मैपदम् ॥

अनेन कृष्णः मुरवधानन्तरं, अन्यान् पीठनिशुम्भ-हयग्रीव-पञ्चजनाख्यान् भौममन्त्रिणो दैत्यान् हत्वा मुरादि पञ्चमन्त्रिणां पुत्रान् प्रत्येकशः सप्तसङ्ख्याकान् मिलित्वा पञ्चत्रिंशाख्यान् रुद्रवरादवध्यान्, हत्वा, गजादि महत्या सेनया युक्तम्, युद्धार्थमागतं पृथिव्यभिमानिन्यां

धरादेव्यां वराहरूपिणा विष्णुना जातम्, ब्रह्मवरादवध्यम्, नरकासुरं चक्रेण हत्वा, देवैः प्रसूनैः अभिषिच्यमानः नरकासुरस्य मात्रा धरादेव्या स्तुतः, भौमपुत्रं भगदत्तनामानं पूर्वं कुबेरं नरकासुरापहृत स्वकीय-'सुप्रतीका'ख्यगजप्राप्त्यर्थं नरकपुत्रत्वेन जातं प्राग्जोतिषपुराधिपतिं कृत्वा अन्तःपुरं प्रविश्य पूर्वजन्मनि अग्निपुत्रतया पुरुषत्वावस्थायां स्वपतित्वहेतोः वायुं प्रति तपः कृत्वा स्त्रीत्वं प्राप्य, बदरिकाश्रमं प्राप्य, तत्रस्थनारायणानुग्रहादप्सरस्त्वं प्राप्य, राजकुले जाताः बलात् भौमेनापहृताः नवयौवनाः अक्षताः सद्व्रतस्थाः नानाविधालङ्कारोपेताः, शतोत्तरषोडशसहस्रसङ्ख्याकाः स्त्रियः दृष्ट्वा, ताभिः स्वदर्शनेन सन्तुष्टाभिः, पतित्वेन व्रियमाणः ताः स्त्रियः, कनकशिबिकास्वारोप्य द्वारकां प्रापय्य भौमापहृत-अदितिकुण्डले आदाय स्वर्गं प्राप्य अदित्यै कुण्डले दत्वा, सर्वान् अतोषयत् इत्यादि कथा सूचिता ॥

**इन्द्राराध्योऽमरेन्द्रप्रियतममगमाहृत्य देवान् विजित्य**
**प्राप्याथ द्वारकां यः सुतमतिरुचिरं रुक्मिणीतः प्रपेदे ।**
**भ्रातृव्यं पौण्ड्रकाख्यं पुररुधमतनोत्कृत्तशीर्षं तदीया-**
**पत्योत्पन्नां च कृत्यां रथचरणरुचा**
**कालयन् कामधुक् स्यात् ॥ १९ ॥**

यः – कृष्णः, इन्द्राराध्यः— इन्द्रेण आराध्यः – पूज्यः, अमरेन्द्र-प्रियतमं— अमरेन्द्रस्य – देवेन्द्रस्य, प्रियतमं – अतिप्रीतिविषयं, अगं – न गच्छतीत्यगः, तं – पारिजावृक्षं, आहृत्य – अपहृत्य, देवान् – इन्द्रादीन्, विजित्य, अथ – अनन्तरं, द्वारकां प्राप्य, अतिरुचिरं – अतिमनोहरं, सुतं – पुत्रं, रुक्मिणीतः – रुक्मिण्याः 'पञ्चम्यास्तसिल्' इति

पञ्चम्यर्थे तसिल्प्रत्ययः । प्रपेदे – प्राप्तवान्, प्रपूर्वात्पदगतावित्यस्मात्लिडात्मनेपदे रूपमेतत् । भ्रातृव्यं – शत्रुं, 'व्यन् सपत्ने' इति सूत्रेण भ्रातृशव्दात् व्यन्प्रत्ययः । पुररुधं – पुरं – द्वारकाख्यं, रुणद्धि – आवृणोतीति पुररुत्, तं पौण्ड्रकाख्यं – पौण्ड्रकवासुदेवनामानं, कृत्तशीर्षं— कृत्तं – छिन्नं शीर्षं – शिरः, यस्य स तथोक्तः, तम् । 'उत्तमाङ्गं शिरश्शीर्षं' इत्यभिधानात् । अतनोत् – कृतवान् । 'तनु विस्तारे' लङ् परस्मैपदम् । तदीयापत्योत्पन्नां— तस्य – पौण्ड्रकवासुदेवस्य, सम्बन्धि तदीयम्, 'त्यदादीनि चे'ति वृद्धसंज्ञायां 'वृद्धाच्छः' इति 'छ'प्रत्यये छस्य ईयादेशे रूपमेतत् । तदीयं च तत् अपत्यं च, तत्सुत इति यावत् । तेन उत्पन्नां कृत्यां च दहनरूपाकृतिं च । रथचरणरुचा— रथचरणस्य – चक्रस्य, रुचा – कान्त्या, कालयन् – पलायितां कुर्वन्, सः – कृष्णः, कामधुक्— कामं – अभीष्टं, दोग्धि – ददातीति कामधुक्, ममेति शेषः । स्यात् – भवेत् । 'अस भुवि' लिङ् परस्मैपदम् ॥

अनेन कृष्णः अदितेः कुण्डलदानानन्तरं इन्द्रादिभिः स्तुतःताननुज्ञाप्य मार्गे विद्यमानं इन्द्रस्यातिप्रीतिविषयं नन्दनवनं क्रीडार्थं प्रविश्य तस्मिन् वने विद्यमानं मणिकाञ्चनात्मकं समस्तकामप्रदं आर्तिहारिणं पारिजातवृक्षं दृष्ट्वा, सत्यभामया स्वगृहाङ्गणे स्थापयितुं प्रार्थितः तमुत्पाट्य, गरुडांसे न्यस्य, सत्यभामया सह स्वयं च गरुडमारुह्य, द्वारकां प्रति गच्छन् वनपालकैः एतद्वृत्तान्तं कृत्वा (श्रुत्वा) कोपेन शचीवचनेन दिक्पालकैस्सह असुरावेशात् युद्धार्थमागतं इन्द्रं पराजितं कृत्वा सर्वान् विजित्य, तैः स्तुतः स्वकृतापराधशान्तये इन्द्रेण दत्तं मणिपर्वतस्य शृङ्गञ्चोपादाय ताननुज्ञाप्य, द्वारकां प्राप्य पारिजातवृक्षं

सशृङ्गं सत्यभामाया गृहाङ्गणे न्यस्य स्वकीयानां यथेष्टरत्नानि च दत्वा, असुरमोहनार्थं रुद्रं प्रति तपः कृत्वा रुक्मिण्यां पुत्रं पूर्वं हरेण दग्धं मन्मथं प्रद्युम्ननामकं (विष्णोः आवेशात् प्रद्युम्ननामकं) जनयित्वा, तदा नारद-बोधितेन शम्बरेण शत्रुबुद्ध्या समुद्रे क्षिप्तं मत्स्येनोपभुक्तं मत्स्य-जीविभिः पुरुषैः महता जालेन गृहीतं तन्मस्त्येन सह शम्बरगृहं प्राप्तं सूदैः मस्त्यविपाटनसमये शम्बरेण दृष्टं, पञ्चभर्त्रुपेतद्रौपदीदूषणापराध-निमित्तेन चतुर्मुखेन असुरदूषिता भवेति शप्तया, रूपान्तरेण शम्बरगृहं प्राप्तया रत्या रक्षितं, वर्षचतुष्टयेन प्राप्तयौवनं, स्वस्त्रिया रत्या बोधितो-पायेन शम्बासुरं हत्वा, तया सह द्वारकां प्राप्तं स्वपुत्रं दृष्ट्वा, रुक्मिण्या बन्धुभिश्च सह सन्तोषं प्राप्य, कदाचित्स्वस्य बदरिकासमवस्थान-समये द्वारकोपद्रवार्थं रात्रौ समागतं पूर्वं वसुदेवात् दितिस्वरूपभूतायां काशीराजस्य पुत्र्यां पुत्रिकापुत्रन्यायेन जातं पौण्ड्रकवासुदेवाख्यं वेन-स्वरूपं सुवर्णगरुडाद्युपेतं स्वशत्रुं, बलरामादिभिः पराजितं, पुनः काशीं प्रति गतं, बदरिकाश्रमादागत्य श्रुत्वा, पौण्ड्रकवासुदेवेन युद्धार्थमाहूतः काशीं प्रति गत्वा, तस्य शिरश्छित्वा द्वारकां प्राप्य, पौण्ड्रकवासु-देवसुतेन सुदक्षिणाख्येन स्वपितृहननकोपेन द्वारकानाशार्थं रुद्रं प्रति तपः कृत्वा, अभिचारविधानेन दक्षिणाग्नौ उत्पादितां अग्नि-स्वरूपां भयङ्करकरचरणाद्युपेतां असुरावेशात् द्वारकां प्रति प्राप्तां कृत्यां जाज्वल्यमानेन अतिभयङ्करेण स्वचक्रेण पलायितां कृत्वा, तया कृत्यया वाराणसीस्थसुदक्षिणं आभिचारकर्मकर्तारं नाश-यित्वा, तदीयान् सर्वान् स्वचक्रेण नाशयित्वा, पुनः सुदर्शनं प्राप्य, सर्वान् अतोषयत् इत्यादि कथा सूचिता ॥

**कृष्णः सूर्योपरागे निजयुवतिगणैर्भार्गवं क्षेत्रमाप्त-**
**स्तत्रायातान् स्वबन्धून् मुनिगणमपि सन्तोष्य यज्ञं स्वपित्रा।**
**योऽनुष्ठाप्याप्य नैजं पुरमथ विदितानेकतत्त्वानि पित्रे**
**मातुः पुत्रान् प्रदश्याकृत हितमहितं**
**मेऽपनुद्यात् स ईशः ॥ २० ॥**

यः – कृष्णः, सूर्योपरागे – सूर्यग्रहणसमये, निजयुवतिगणैः – स्वकीयपत्नीसमूहैः, सहेति शेषः। भार्गवं – परशुरामेण कृतं, क्षेत्रं – स्यमन्तपञ्चकाख्यपुण्यक्षेत्रं 'महतश्चतुर्मुखादि'तिवदयं निर्देशः। यद्वा 'यत्र वा पितुस्तद्वा पुत्रस्ये'ति श्रुतेः भृगुशब्दः परशुरामवाची तस्मात्सम्बन्धार्थे अण्प्रत्यये भार्गवमिति रूपम्। आप्तः – प्राप्तः, कर्तरि क्तः। तत्र – क्षेत्रे, आयातान् – आगतान्, स्वबन्धून् – स्वस्य बन्धून्, प्रीतिविषयान्, मुनिगणमपि – मुनीनां समूहमपि, सन्तोष्य – हर्षयित्वा, स्वपित्रा – स्वस्य पित्रा – वसुदेवेन, यज्ञमनुष्ठाप्य, नैजं – स्वकीयं, पुरं – द्वारकाख्यं, आप्य – प्राप्य, अथ – अनन्तरं, पित्रे – वसुदेवाय, अनेकतत्त्वानि – भगवद्विषय(क)बहुतत्त्वानि, वदिता – 'वद व्यक्तायां वाची'त्यस्मात् कर्तरि तृचि इडागमे वदितृशब्दनिष्पत्तिः। मातुः – देवक्याः, पुत्रान्, प्रदश्य – दर्शयित्वा, हितं – हर्षं, अकृत – अकरोत्। 'डुकृञ् करणे' लुङात्मनेपदम्। ईशः – परमसमर्थः, सः – कृष्णः, मे – मम, अहितं – अनभिमतं, अपनुद्यात् – परिहरेत्। अपपूर्वात् 'णुद प्रेरणे' इत्यस्माद्धातोः लिङ् परस्मैपदे रूपमेतत्॥

अनेन कृष्णः कदाचित् सूर्यग्रहणसमये, स्वस्त्रीजनैः पुत्रपौत्रादिभिश्च सह परशुरामेण दुष्टक्षत्रियान् हत्वा, तेषां रुधिरौघेन निर्मितं

महाह्रदोपेतं समन्तपञ्चकाख्यं पुण्यक्षेत्रं प्राप्य तत्र गतान् नन्दादीन् पाण्डवादीन् अन्यांश्च भूपालान् वसिष्ठादिमुनींश्च सन्तोष्य, तान् मुनीन् ऋत्विजः कृत्वा, स्वपित्रा वसुदेवेन त्रिवारं यज्ञं कारयित्वा, सर्वान् तत्तद्देशं प्रति अनुज्ञाप्य, स्वबन्धुभिः सह द्वारकां प्राप्य, कदाचित् स्वपित्रे वसुदेवाय भगवत्-विषयक-जगज्जन्मादिकारणत्वरूप-तत्त्वान्युपदिश्य स्वमात्रा देवक्या कंसेन हतान् पुत्रान् द्रष्टुं प्रार्थितः, बलरामेण सह सुतललोकं प्रविश्य, बलिचक्रवर्तिकृतपूजां स्वीकृत्य, तत्र विद्यमानान् कार्श्यहेतोरुपहासापराधेन देवलेन शप्तान् कालनेमिप्रसूतान् चतुर्मुखं प्रति तपः कृत्वा अवध्यतां प्राप्तान् हिरण्यकशिपुना स्वात्मान्यचतुर्मुखतो वरलिप्सापराधनिमित्तेन भूतले संभवध्वं, तत्र स्वतातो भवतां निहन्तेति शप्तान्, कालनेमिसुतदेहतः स्वापसमये आकृष्य, दुर्गया क्रमेण देवकी-गर्भे स्थापितान् षट्संख्याकान् मरीचिपुत्रान् कालनेमिस्वरूपेण कंसेन हतान्, तान् उपादाय, मातुः दर्शयित्वा मातरं संतोष्य स्वभुक्तस्तन्यपानेन शुद्धान् पुत्रान् मोचयित्वा सद्गतिं प्रापय्य, सर्वान् अतोषयत् इत्यादि कथा सूचिता ॥

**रुक्मिण्या नर्मवाक्यैररमत बहुभिः स्त्रीजनैर्योऽथ पुत्रा-**
**नेकैकस्यां प्रपेदे दशदश रुचिरान् पौत्रकानप्यनेकान् ।**
**पौत्रस्योद्वाहकाले भृशकुपितबलाद्रुक्मिणं घातयित्वा**
**नन्दन्योषिद्गणेन प्रतिगृहमबलाप्रीतिकारी गतिर्मे ॥ २१ ॥**

यः – कृष्णः, रुक्मिण्या – रुक्मिणीदेव्या, सहेति शेषः । नर्म-वाक्यैः – उपहासवाक्यैः, अरमत – विजहार । 'रमु क्रीडायां' लङात्मने-पदम् । बहुभिः – स्त्रीजनैररमतेति पूर्वेणान्वयः । अथ – अनन्तरं,

एकैकस्यां – पृथक् पृथक् स्वस्त्रियां, रुचिरान् – मनोहरान्, दशदश – प्रत्येकं दशसङ्ख्याकान्, पुत्रान्, प्रपेदे – अजनयत् । अनेकान् – अनेकसङ्ख्याकान्, पौत्रकानपि – पौत्रानपि प्रपेद इति पूर्वेणान्वयः । पौत्रस्य – प्रद्युम्नपुत्रस्य अनिरुद्धस्य, उद्वाहकाले – विवाहकाले, भृश-कुपितबलात्— भृशम् – अधिकं, कुपितश्चासौ बलः – बलरामः, तस्मात्, रुक्मिणं – रुक्मिनामकं, घातयित्वा – नाशयित्वा, योषि-द्गणेन – स्वस्त्रीगणेन सहेति शेषः । नन्दन् – हर्षं प्राप्नुवन्, प्रतिगृहं – प्रतिगृहेषु, 'अव्ययं विभक्ती'त्यादिना वीप्सायामव्ययीभावः । अबला-प्रीति-कारी— अवलानां – स्त्रीणां, प्रीतिं – हर्षं, करोतीति स तथा । सः – कृष्णः, मे – मम, गतिः – प्राप्यस्सर्वाभीष्टदो वा, स्यादिति शेषः ॥

अनेन कृष्णः कदाचित् रुक्मिण्या अन्तर्गृहे नानाविधपुष्पादिभिः अलंकृते तत्रस्थपर्यङ्कोत्तमे सुखेन स्थितः, रत्नदण्डोपेतबालव्यजन-हस्तया रुक्मिण्या सेव्यमानः, तया सह नानाविधोपहासपूर्वकं क्रीडां कुर्वन्, गृहान्तरेषु अबलाभिः स्त्रीभिश्च रममाणः तासु स्त्रीषु प्रत्येकं दशदश पुत्रानेकैकां कन्यामपि जनयित्वा तेषां विवाहं कृत्वा, तेषामपि पुत्रान् जनयित्वा, स्वपौत्रस्य प्रद्युम्नसुतस्य अनिरुद्धस्य रुक्मिपौत्री-विवाहार्थं बलरामादिभिः रुक्मिण्या च सह रुक्मिपुरं भोजकटाख्यं प्राप्य, विवाहं कारयित्वा, तस्मिन् समये कलिन्दादिप्रेरणेन बलरामपराजयार्थं बलरामेण सह अक्षैर्दीव्यन्तं बलरामेण पराजितं, बलराममुपहसन्तं रुक्मिणं कुपितेन बलरामेण घातयित्वा, सभार्यं पौत्रं रथम् आरोप्य स्वकीयैः सह द्वारकां प्राप्य, प्रतिगृहं स्वस्त्रीभिः सह क्रीडां कुर्वन् सर्वान् अतोषयत् इत्यादिकथा सूचिता ॥

**नानारत्नप्रदीप्तासमविभवयुतद्व्यष्टसाहस्रकान्ता-**
**गेहेष्वश्नन् शयानः क्व च जपमृगयादीनि कुर्वन् क्वचिच्च ।**
**दीव्यन्नक्षैर्ब्रुवाणः प्रवचनमपरैर्मन्त्रयन्नेवमादि-**
**व्यापारान्नारदस्य प्रतिसदनमहो दर्शयन्नः स पायात् ।**
**॥ २२ ॥**

सः – कृष्णः, नानारत्नप्रदीप्तासमविभवयुतद्व्यष्टसाहस्रकान्ता-गेहेषु— नानारत्नैः – नानाप्रकाररत्नैः, प्रदीप्तानि – प्रकाशमानानि च तानि असमविभवयुतानि असदृशैश्वर्ययुक्तानि च षोडशसहस्रसङ्ख्याकस्त्रीणां गेहानि – गृहाणि च तेषु । क्व च – क्वचित्, अस्य सर्वत्रान्वयः । अश्नन् – भोजनं कुर्वन्, शयानः – शयनं कुर्वन्, जपमृगयादीनि— जपः – गायत्र्यादिमन्त्रादिजपः, मृगया – 'आखेटो मृगया स्त्रियामि'त्यमरः । क्रीडार्थं वने मृगहननादिव्यापार आदिर्येषां तानि, चरित्राणि, कुर्वन्, क्वचिच्च गेहे द्यूतसाधनैः अक्षैः दीव्यन् – क्रीडां कुर्वन्, प्रवचनं – वेदव्याख्यानं, ब्रुवाणः – कुर्वन्, अपरैः – उद्धवादिभिः सहेति शेषः । मन्त्रयन् – राज्यविषयकालोचनं कुर्वन् । एवमादिव्यापारान् शिशु-लालना[१]द्यनेकव्यापारांश्च नारदस्य प्रतिसदनं प्रति गृहं[२] दर्शयन्, सः – कृष्णः, नः – अस्मान्, पायात् । अहो आश्चर्यम् ॥

अनेन कृष्णः कदाचित् स्वस्य बहुभार्यासु वृत्तिं ज्ञातुमागताय नारदाय, नानारत्ननिर्मितातिमनोहरद्व्यष्टसहस्रकान्तागृहेषु भोजनशयना-द्यनेकव्यापारान् तावत्स्वरूपैरेक एव दर्शयित्वा, विस्मितेन नारदेन प्रणतः, तं अनुज्ञाप्य, सर्वान् अतोषयत् इत्यादि कथा सूचिता ॥

---

१. ता. पु. पाठः – शिशुपालना । २. क. पु. पाठः – प्रति गृहम् ।

**प्रातर्ध्यायन्प्रसन्नः कृतनिजविहितः सत्सभां प्राप्य कृष्णो**
**दूतं राज्ञां[१] प्रतोष्यामरमुनिविदिताशेषकृत्यः प्रयासीत्[२] ।**
**शक्रप्रस्थं चमूभिर्बहुविभवयुतं बन्धुभिर्मानितोऽयं**
**भीमेनापात्य बार्हद्रथमथ नृपतीन् मोचयन्मे प्रसीदेत् ॥२३॥**

यः – कृष्णः, प्रातः अरुणोदयकाले, प्रसन्नः – प्रसन्नान्तःकरणः, ध्यायन्, स्वात्मानमिति शेषः । कृतनिजविहितः— कृतानि – स्वकीयानि, विहितानि – विध्युक्तानि स्नानसन्ध्यावन्दनादिकर्माणि येन स तथा । सत्सभां – निर्दुष्टसभां, प्राप्य, राज्ञां– भूपानां,दूतं – भृत्यं, प्रतोष्य – सन्तोष्य, अमरमुनिविदिताशेषकृत्यः – अमरमुनिना – नारदेन, विदितानि – विज्ञापितानि, अशेषाणि कृत्यानि – कर्तव्यानि, यस्य स तथोक्तः । चमूभिः – सेनाभिः सहेति शेषः । बहुविभवयुतं – अनेकैश्वर्योपेतं, शक्रप्रस्थं – शक्रप्रस्थाख्य (इन्द्रप्रस्थाख्य) नगरं प्रति प्रयासीत् – गतवान् । 'प्रपूर्वात् या प्रापणे' इत्यस्माल्लुङि रूपमेतत् । अनित्यमागमशासनमित्यडागमो नेति ज्ञेयम् । बन्धुभिः – स्वबन्धुभिः – पाण्डवैः मानितः – पूजितः, बार्हद्रथं – बृहद्रथस्यापत्यं पुमान् बार्हद्रथः, तं – जरासन्धं, भीमेन – भीमसेनेन, आपात्य – घातयित्वा, अथ – अनन्तरं, नृपतीन् – भूपान्, मोचयन् – निगडाद्विमोचयन् । अयं – कृष्णः, मे, प्रसीदेत् – प्रसन्नो भवेत् । 'प्रपूर्वात् षदॢविशरणगत्यवसादनेषु' इति धातोः लिङि 'पाघ्राध्मे'त्यादिना सीदादेशो रूपमेतत् ॥

अनेन कृष्णः कदाचित् ब्राह्मे मुहूर्ते उत्थाय पादप्रक्षालनादिकं कृत्वा, प्रसन्नान्तःकरणं 'एकं परंज्योतिः'[३] इत्याद्युक्तानेकगुणविशिष्टतया

स्वात्मानमेव ध्यायन् स्नानसन्ध्यावन्दनौपासनादिकं कृत्वा सुधर्माख्यां सभां प्राप्य तत्र परमासने उपविष्टः सकलयादवैः सेव्यमानः तदा जरासन्धेन युधि विजित्यानीतैः, रौद्रमुखे पशुत्वेन कल्पयितुं गिरिदर्यां प्रतिरुद्धैः अष्टशतोत्तरद्वाविंशतिसहस्रसङ्ख्याकैः, शतोत्तरषोडशसहस्र-कान्ताभिरन्वितैः भूपैः जरासन्धेनात्ममोचनार्थं प्रेषितं स्वसमीपं प्राप्तं दूतं सन्तोष्य, तस्मिन्नेव समये आगतेन नारदेन पाण्डवचिकीर्षित-राजसूयमखोद्योगं श्रुत्वा, तत्र गन्तुं तेन प्रार्थितः, तं अनुज्ञाप्य अष्टो-त्तरशतयुक्तषोडषसहस्रकान्ताभिरन्वितः पुत्रपौत्रादिभिः अनेकसेनाभिश्च सह कनकमयशिबिकादिवाहनेषु आरुह्य सकलकामैः पूर्णं इन्द्रप्रस्थपुरं प्राप्य, पाण्डवैः सह पूजितः, भीमार्जुनाभ्यां सह ब्राह्मणरूपेण जरा-सन्धपुरं प्राप्य, भीमेन जरासन्धेन सह पञ्चदशदिनेषु द्वन्द्वयुद्धं कारयित्वा जरासन्धं घातयित्वा, 'जरासन्धेन बद्धान् स्वबन्धून् (सबन्धून्) भूपान् विमोच्य, तैः स्तुतः, तेषां मज्जनादिकं कारयित्वा यथेष्टभाग्यानि दत्वा, तान् तत्तद्देशान् प्रति अनुज्ञाप्य, सर्वान् अतोषयत् इत्यादिकथा सूचिता ॥

**पुत्रं राज्येऽस्य कृत्वा हृतशिरसमथो चेदिराजं विधाय**
**प्रोद्यन्तं राजसूयं यमसुतविहितं संस्थितं यो विधाय ।**
**शक्रप्रस्थात्प्रयातो निजनगरमसौ साल्वभग्नं समीक्ष्य**
**क्रुद्धो घ्नन्नब्धिगं तं शिववरबलिनं यान्पुरं पातु नित्यम् ॥ २४ ॥**

यः – कृष्णः, अस्य – जरासन्धस्य, पुत्रं – सहदेवाख्यं कुमारं, राज्ये – मगधदेशाधिपत्ये कृत्वा, अथो – अनन्तरं, चेदिराजं – चेदिदेशानां राजा चेदिराजः, 'राजाहःसखिभ्यष्टजि'ति समासान्तः

टच्प्रत्ययः । तं – शिशुपालं, हृतशिरसं– संहृतं शिरो यस्य स तथा। विधाय – कृत्वा, प्रोद्यन्तं – उपक्रान्तं, यमसुतविहितम्— यमस्य सुतः – धर्मराजः, तेन विहितं – क्रियमाणं, राजसूयं – राजसूयनामकयागम् । संस्थितं – समापितम् । विधाय – कृत्वा । शक्रप्रस्थात् – इन्द्रप्रस्थात् । निजनगरं – स्वीयद्वारकाख्यं पुरम् । प्रयातः – प्राप्तः । 'कर्तति क्तः' । साल्वभग्नं – साल्वेन भग्नं – पतितप्राकाराद्युपेतम् । निजनगरमिति अत्राप्यन्वेति । समीक्ष्य । क्रुद्धः – कोपयुक्तः । अब्धिगं— अब्धौ – समुद्रे विद्यमानम् । शिववरबलिनं— शिवस्य – रुद्रस्य, वरेण, बलिनं – बलिष्ठम्, तम् । साल्वं – साल्वनामकासुरम्, घ्नन् – संहरन्, पुरं – द्वारकां प्रति, यान् – गच्छन्, असौ – कृष्णः, नित्यं – निरन्तरं, पातु – रक्षतु, मामिति शेषः । 'पा रक्षणे' लोट् परस्मैपदम् ।

अनेन श्रीकृष्णः जरासन्धवधानन्तरं तत्पुत्रं पत्रतापाख्यरुद्रस्वरूपं सहदेवनामकं स्वभक्तं जरासन्धराज्याधिपत्ये कृत्वा भीमार्जुनाभ्यां सह इन्द्रप्रस्थं प्राप्य धर्मराजेन राजसूयनामकं यज्ञं कारयन्, तदा अग्रपूजादिविषये बहुशः स्वात्मनिन्दकं चेदिदेशाधिपतिं शिशुपालं चक्रेण छित्वा, उपक्रान्तं यज्ञं सम्यक् समाप्य, तत्रैव पाण्डवप्रीत्यर्थं कतिचिन्मासानुषित्वा, पाण्डवैः अनुज्ञातः पुत्रमित्रकलत्रादिभिः सह द्वारकां प्राप्य, साल्वभग्नां द्वारकां दृष्ट्वा साल्वहननार्थं तत्समीपं प्राप्य, रुद्रप्रसादलब्धसौभविमानं आरुह्य समुद्रस्योपरि विद्यमानं, पूर्वं बलिं आविश्य, हरौ देवेषु च विरोधं कृतवन्तं बलिनामकासुरं, ब्रह्मदत्तसुतत्वेन जातं साल्वं चक्रेण हत्वा, देवादिभिः स्तूयमानः, द्वारकां प्राप्य, सर्वान् अतोषयत् इत्यादिकथा सूचिता ॥

**विप्रादाकर्ण्य धर्मं वनगतमनुजैः सान्त्वयित्वैत्य सर्वान्**
**अभ्येत्य द्वारकां यो नृगमथ कुजनिं दिव्यरूपं चकार।**
**गत्वा वैदेहगेहं कतिपयदिवसान् तत्र नीत्वाऽतिभक्तं**
**सन्तोष्य द्वारकां यान् बहुबलसमितोऽयन्नुपप्लाव्यमव्यात्।**
**॥ २९ ॥**

यः – कृष्णः, अनुजैः – भ्रातृभिः, सहेति शेषः। वनगतं – वनं प्राप्तम्, धर्मं – धर्मराजम्, विप्रात् – ब्राह्मणादाकर्ण्य, श्रुत्वा – एत्य, प्राप्य वनमिति शेषः। सर्वान् पाण्डवान् सान्त्वयित्वा – अनुकूलवचनैः दुःखशमनं कृत्वा, द्वारकां अभ्येत्य – प्राप्य, अथ – अनन्तरं, कुजनिं— कुत्सिता जनिः – जन्म, यस्य स तथा, तं – कृकलास-रूपधरम्, नृगं – नृगनामकराजानं, दिव्यरूपं – मनोहररूपं, चकार – अकरोत्। 'डुकृञ् करणे' लिट् परस्मैपदम्। वैदेहगेहं— विदेहस्य – विदेहदेशाधिपतेः बहुलाश्वनामकस्य राज्ञः गेहं, गत्वा – प्राप्य, तत्र – वैदेहगृहे, कतिपयदिवसान् – कतिचिद्दिनानि नीत्वा, अतिभक्तौ – अत्यन्तं भक्तौ विदेहदेशाधिपति-श्रुतदेवनामकयादवश्रेष्ठौ च सन्तोष्य[1] द्वारकां यान् – प्राप्तवान्। बहुबलसमितः— बहुबलेन – बहुसेनया, समितः – युक्तः, उपप्लाव्यं – उपप्लाव्याख्यपुरम्, अयन् – प्राप्नुवन्, सः – श्रीकृष्णः, अव्यात् – रक्षेत्। मामिति शेषः। 'अव रक्षणे' लिङ् परस्मैपदम्॥

अनेन श्रीकृष्णः कदाचित् सुधर्माख्यसभायां स्वकीयैः सेव्यमानः, अधर्मचारिणा दुर्योधनेन अक्षैः पराजितं भ्रातृभिस्सह वनं प्राप्तं धर्मराजं,

---

१. तालपत्रपाठः – विदेहदेशाधिपतिं बहुलाश्वं श्रुतदेवनामकं यादवश्रेष्ठं च सन्तोष्य।

तत्प्रेषितब्राह्मणेन श्रुत्वा, क्रोधोद्रिक्तमनाः, तूर्णं सत्यभामया सह, रथं आरुह्य पाण्डवसमीपं प्राप्तवान्, नानाविधवचनैः समाश्वास्य तैरनुज्ञातः द्वारकां प्राप्य, तत्रोपवने जलरहितकूपे पतितं, कस्यचित् ब्राह्मणस्य सम्बन्धिनं गोरूपपशुं प्रामादिकेन विधिना स्वकीयगोषु प्रविष्टं अज्ञानतः अपहृत्यान्यस्मै दापनापराधनिमित्तेन कृकलासरूपं प्राप्तं पर्वतनिभं नृगाख्यं राजानं, तत्र वने क्रीडद्भिः यादवैः श्रुत्वा, तैः उद्धर्तुमशक्यं तं लीलया वामेन करेण उद्धृत्य कृकलासदेहान् मोचयित्वा, तं दिव्यस्वरूपं कृत्वा, तेन राज्ञा स्तुतः, तं अनुज्ञाप्य, स्वकीयानां ब्रह्मस्वापहारादि न कर्तव्यं इति धर्मशिक्षां च कृत्वा विदेहपुरवासिनं स्वभक्तं यादवश्रेष्ठं श्रुतदेवनामानं तथा विदेहदेशाधिपतिं स्वभक्तं बहुलाश्वनामकं राजानं च द्रष्टुं विदेहनगरं प्राप्य स्वस्वगृहं प्रत्यागमनार्थमुभाभ्यां प्रार्थितः युगपदेव रूपद्वयेन राजगृहं श्रुतदेवगृहं च प्राप्य, ताभ्यां कृतपूजां स्वीकृत्य, राजप्रीत्यर्थं तद्गृहे कतिचिन्मासान् उषित्वा स्वभक्तौ राजश्रुतदेवौ सन्तोष्य, ताभ्यां अनुज्ञातः द्वारकां प्राप्तवान्, वनवासतः अज्ञातवासतश्च पारङ्गतान् गोग्रहे जितकौरवान्, महत्या सेनया वृतान्, उपप्लाव्यं गतान् पाण्डवान् श्रुत्वा, सन्तुष्टमनाः यादवैः सह अक्षौहिण्या सहितः उपप्लाव्यं प्राप्य, पाण्डवैः पूजितः, सर्वान् अतोषयत् इत्यादिकथा सूचिता ॥

दौत्यं कुर्वन्ननन्ता निजरुचिरतनूर्दर्शयन् दिव्यदृष्टेः
गीतातत्त्वोपदेशाद्रणमुखविजयस्याचरन् सारथित्वम् ।
नीत्वा कैलासमेनं पशुपतिमुखतो दापयित्वास्त्रमस्मै
भीमेनापात्य दुष्टं क्षितिपतिमकरोद्धर्मराजं तमीडे ॥ २६ ॥

यः – कृष्णः, दौत्यं – दूतस्य कर्म दौत्यम् । ब्राह्मणादित्वात् ष्यञ् । कुरुपाण्डवानां सन्धिकार्यार्थमिति शेषः । कुर्वन्, दिव्यदृष्टेः— दिव्या दृष्टिः यस्य धृतराष्ट्रस्य तस्य । अनन्ताः – अपरिच्छिन्नाः । निजरुचिरतनूः— निजाः – स्वकीयाश्च ताः रुचिराः – मनोहराः, तनवः – मूर्तयश्च, ताः, दर्शयन्, गीतातत्त्वोपदेशात् – भगवद्गीतोक्ततत्त्वोपदेशात्, रणमुखविजयस्य— रणे – युद्धे, मुखं यस्य सः रणमुखः, स चासौ विजयः – अर्जुनश्च । तस्य दिव्यदृष्टेरित्यत्राप्यन्वेति । सारथित्वं आचरन् – कुर्वन्, एनं – अर्जुनं, कैलासं – कैलासपर्वतं, नीत्वा – प्रापय्य, पशुपतिमुखतः— पशुपतेः – रुद्रस्य, मुखतः – मुखात् । अस्त्रम्, अस्मै – अर्जुनाय, दापयित्वा, भीमेन – भीमसेनेन, दुष्टं – दोषाकरं, कलिस्वरूपं आपात्य – घातयित्वा, धर्मराजं – युधिष्ठिरं, क्षितिपतिं – पृथिवीपतिं, अकरोत् – कृतवान् । 'डुकृञ् करणे' लङ् परस्मैपदम् । तं – कृष्णं, ईडे – स्तौमि । अहमिति शेषः । 'ईड स्तुतौ' लडुत्तमपुरुषैकवचनं आत्मनेपदम् ॥

अनेन कृष्णः उपप्लाव्यगमनानन्तरं दुर्योधनादीनां पाण्डवानां च सन्धिकार्यार्थं दौत्यं कुर्वन् धृतराष्ट्रसमीपं गत्वा पाण्डवानां राज्यदानार्थं अनुकूलवचनैः धृतराष्ट्रं तत्सुतं दुर्योधनं च प्रबोध्य सन्धिकार्यं अनिच्छन्तं स्वबन्धनार्थं उद्युक्तं कुमतिं दुर्योधनं ज्ञात्वा स्वमहिमप्रकाशनेन दुर्योधनादीनां भयजननार्थं धृतराष्ट्रस्य दिव्यदृष्टिं दत्वा, स्वस्य अपरिच्छिन्न-अनन्तरूपाणि दर्शयित्वा स्वतेजसा दुर्योधनादि चक्षूंषि पिधाय तेषां भयं जनयित्वा, धृतराष्ट्रेण पूजितः, तस्य दृष्टिं पूर्ववत् पिधाय, पुनरेव च अन्धं धृतराष्ट्रं विधाय, पाण्डवसमीपं प्राप्य तैः युद्धोद्योगं कारयित्वा पाण्डवसम्बन्धिसप्तसङ्ख्याक्षौहिणीसेनायाः

दुर्योधनसम्बन्ध्येकादशसङ्ख्याकाक्षौहिणीसेनायाश्च मध्ये, अर्जुनरथं संस्थाप्य तस्य सारथित्वमाचरन् सबान्धवान् दृष्ट्वा तद्वधपापशङ्कया युद्धान्निवृत्तं अर्जुनं दृष्ट्वा, तस्य दिव्यदृष्टिं दत्वा तद्योग्यतानुसारेण स्वकीयविश्वरूपं दर्शयित्वा भगवद्गीतोक्तरीत्या स्वस्यैव सर्वस्वातन्त्र्यादिरूपतत्त्वं उपदिश्य तेन युद्धं कारयन्, तदा एकस्मिन् दिने जयद्रथेन हतं स्वपुत्रं अभिमन्युं श्रुत्वा जयद्रथस्य वधे प्रतिश्रवं कृतवन्तमर्जुनं तस्यां रात्रौ स्वप्ने कैलासगतरुद्रं प्रति नीत्वा स्वयमेव अखिलजगत्सृष्ट्याद्यमितशक्तिमान् (अपि) 'अप्यच्युतो गुरुद्वारा प्रसादकृदहं तु' इति ज्ञापयन्, अर्जुनगुरो रुद्रादर्जुनस्य वाञ्छितमुल्बणमन्त्रं दापयित्वा अर्जुनेन सह उपप्लाव्यं प्राप्य पाण्डवैः अष्टादशदिनपर्यन्तं युद्धं कारयित्वा कौरवान् सर्वान् घातयित्वा, भीमसेनेन गदायुद्धेन दुर्योधनं शिववरबलिनं कलिस्वरूपं घातयित्वा, ब्रह्मादिभिः स्तूयमानः शत्रुरहितं युद्धदेशं परित्यज्य, पाण्डवैः सह हस्तिनपुरं प्राप्य धृतराष्ट्रं गान्धारीं च सान्त्वयित्वा धर्मराजं साम्राज्ये अभिषिच्य, भीमसेनं यौवराज्ये अभिषिच्य, अर्जुनादीन् स्वस्वव्यापारेषु नियोज्य तैः जगत् पालयन् सर्वान् अतोषयत् इत्यादिकथा सूचिता ॥

**प्राप्तः स्थानं यदूनां प्रियसखमकृतावाप्तकामं कुचेलं**
**कुर्वन्कर्माश्वमेधं निजभवनमथो दर्शयित्वाऽर्जुनाय।**
**पुत्रान्विप्राय दत्वा सहसहजमसौ दन्तवक्त्रं निपात्य**
**प्राप्याथ द्वारकां स्वां समवतु विहरन्नुद्धवायोक्ततत्त्वः ॥२७॥**

यः – कृष्णः, यदूनां – यादवानां, स्थानं – आवासस्थानं द्वारकां, प्राप्तः, प्रियसखं— प्रियः – प्रीतिविषयश्चासौ सखा च, तम्। 'राजाह-

स्सखिभ्यष्टजि'ति समासान्तात् टच्प्रत्यये सखिशब्दस्याकारान्तत्वम्। कुचेलं – कुचेलाख्यस्वभक्तम् । अवाप्तकामं – अवाप्ताः कामाः – काम्यमानार्थाः, येन तम्, अकृत – अकरोत् । 'डुकृञ् करणे' कर्तरि लुङात्मनेपदम् । अथो – अनन्तरम् । अश्वमेधं – अश्वमेधाख्यं कर्म – यज्ञं कुर्वन् । निजभवनं – स्वकीयभवनमनन्तासनं, अर्जुनाय दर्शयित्वा, पुत्रान् – कुमारान्, विप्राय – ब्राह्मणाय, दत्वा, सहसहजं— सहजेन सह वर्तमानं, दन्तवक्त्रं – दन्तवक्त्राख्यदैत्यं, निपात्य – हत्वा, अथ – अनन्तरं, स्वां – स्वकीयां, द्वारकां प्राप्य, विहरन् – क्रीडन्, उद्धवाय, उक्ततत्त्वः— उक्तानि तत्त्वानि येन स तथोक्तः । अनेन पदेन एकादशस्कन्धोक्तकथा सङ्गृहीतेति ज्ञेयम् । असौ – कृष्णः, समवतु – रक्षेत् । मामिति शेषः । 'अव रक्षणे' लोट् परस्मैपदम् ॥

अनेन कृष्णः पाण्डवानां साम्राज्यप्राप्त्यनन्तरं तैः अनुज्ञातस्वकीयैः सह, द्वारकां प्राप्य, कदाचित् स्वस्य अतिप्रीतिविषयं सखायं स्वेन सह, गुरुकुलवासं कृतवन्तं शमदमाद्यनेकगुणोपेतं यदृच्छालाभसन्तुष्टं, द्रारिद्र्यदोषेण, कृशया स्वस्त्रिया "ननु ब्रह्मन्, भगवतः सखा साक्षात् श्रियः पतिः । ब्रह्मण्यश्च शरण्यश्च भगवान् सात्वतर्षभः ॥ तमुपेहि महाभागं साधूनां च परायणम् । दास्यति द्रविणं भूरि सीदते ते कुटुम्बिने"[1] इत्याद्यनेकप्रकारेण प्रार्थिता "अयं हि परमो लाभ उत्तमश्लोकदर्शनं"[2] इति सञ्चिन्त्य, मनसा स्वसमीपं प्राप्तं कुचेलं दोर्भ्यां आलिङ्ग्य स्वपर्यङ्के उपवेश्य गन्धपुष्पाक्षतादिनानाविधोपचारैः तं पूजयित्वा भोजनादिकं कारयित्वा, तेनोपायनार्थमानीतान् पृथुकतण्डुलान् उपादाय, किंचित् भक्षयित्वा, तेन सह गुरुकुलवासकृतव्यापारादिकथनेन

१. भा. द. ९८-२५/२६ श्लोकौ । २. भा. द. ९८-२९ ।

तां रात्रिं नीत्वा, प्रातः तं अनुज्ञाप्य, तस्य गृहं देवेन्द्रभवनसदृशं कृत्वा तस्य सकलभाग्यानि दत्वा, कदाचित् पाण्डवान् नानाजनपदेश्वरान् भूपान् ऋषींश्चाहूय (आश्विकं) 'अश्वमेधाख्ययज्ञं कुर्वन्, तृणपूगधरं— "मम सुताः जननोत्तरक्षण एवादृश्यतां यान्ति" इति वदन्तं दुःखेन क्रोशन्तं स्वसमीपं प्राप्तं कञ्चन ब्राह्मणं दृष्ट्वा तत्पुत्ररक्षणे कृतप्रतिश्रवं— "तव तत्पुत्ररक्षणे शक्तिः नास्ति" इति स्वेनोक्तं वचनं असुरावेशेन अनादृत्य "अग्निं प्रवेक्ष्ये अशक्तश्चेदि"ति वदन्तं अर्जुनं अनुज्ञाप्य, ब्राह्मणस्त्रियः प्रसवकाले शस्त्रैः दिग्बन्धनाद्युपायैः पुत्ररक्षणार्थं उद्योगं कृत्वा, जननकाल एव पूर्ववददृश्यतां प्राप्तं पुत्रं रक्षितुं अशक्तं, स्वसमीपं प्राप्य, वह्निप्रवेशार्थं उद्युक्तं अर्जुनं निवार्य, ब्राह्मणार्जुनाभ्यां सह रथं आरुह्य, उदीचीं दिशं गत्वा, सप्तवारिधीन् सप्तद्वीपांश्च क्षणेन तीर्त्वा लोकालोकपर्वतञ्चातीत्य, अतिनिबिडमन्धतमसं चक्रेण विदार्य, घनोदकमप्यतीत्य, अनन्तासनाख्यं स्वमन्दिरं अर्जुनाय दर्शयित्वा, दूरे सरथं सविप्रं पार्थं संस्थाप्य, स्वमन्दिरं प्रविश्य, तत्रस्थेन शेषशायिना अष्टभुजयुक्तेन किरीटादिभूषणैः अलंकृतेन ज्ञानानन्दस्वरूपिणा लक्ष्मीनारायणेनैकीभूय, मुहूर्तं स्थित्वा, स्वपार्षदान् सुनन्दादीन् विप्रसुतत्वेन जातान्, अर्जुनस्य दर्पं निहन्तुं हरिणा तत्रानीतानुपादाय अप्राकृतात् स्वमन्दिरान्निस्सृत्य, ब्राह्मणार्जुनाभ्यां सह रथमारुह्य, समुद्रादीन् तीर्त्वा, ब्राह्मणाय सुतान् दत्वा, तं अनुज्ञाप्य, अर्जुनेन सह यज्ञशालां प्रविश्य, लोकशिक्षार्थमेव सार्धमुहूर्तं यज्ञविच्छेदनेन तन्निमित्तप्रायश्चित्तं कृत्वा यज्ञं समाप्य, तत्रागतान् ब्रह्मादीन् पूजयित्वा स्वस्त्रीभिः पुत्रपौत्रादिबन्धुजनैश्च सह यमुनायां अवभृथस्नानं कृत्वा वस्त्रभूषणादिभिः सम्यक् अलंकृत्य, रथमारुह्य, स्वकीयैः सह द्वारकां प्रति गच्छन् मार्गे युद्धार्थं

आगतं महत्या सेनया युक्तं, स्वकीयशिशुपालादिवधेन कुपितं दन्तवक्त्रं गदया हत्वा, तद्देहस्थं स्वपार्षदं अनुगृह्य, तदाविष्टमसुरं तमसि निरस्य तस्यानुजं विडूरथं चक्रेण हत्वा तमसि निरस्य, तत्सैन्यं नाशयित्वा, तत्सम्बन्धिगजादिकं स्वीकृत्य, देवादिभिः स्तूयमानः द्वारकां प्राप्य, तत्र शतोत्तरषोडशसहस्रसङ्ख्याकाभिः स्वस्त्रीभिः रुक्मिण्यादिप्रधानस्त्रीभिश्च, सह, अनेकरूपैः क्रीडां कुर्वन्, पुत्रपौत्रादिभिः सहितः सर्वान् सन्तोष्य, स्वभक्ताय उद्धवाय, तत्त्वानि उपदिश्य सुखेन स्थितवान्, इत्यादिकथा सूचिता ॥

**रक्षन् लोकान् समस्तान् निजजननयनानन्दकारी निरस्ता-**
**वद्यः सौख्यैकमूर्तिः सुरतरुकुसुमैः कीर्यमाणोऽमरेन्द्रैः ।**
**सिद्धैर्गन्धर्वपूर्वैर्जयजयवचनैः स्तूयमानोऽत्र कृष्णः**
**स्त्रीभिः पुत्रैश्च पौत्रैः स जयति भगवान् सर्वसम्पत्समृद्धः ।**
**॥ २८ ॥**

एवं स्तोत्रकर्ता भागवताद्युक्तकथां सङ्गृह्य नक्षत्रमालिकारूपेण सप्तविंशतिश्लोकैः कृष्णं स्तुत्वा इदानीं कृष्णोपासकानां सज्जनानाम् ऐहिकामुष्मिकसकलाभीष्टप्राप्त्यर्थं 'तं यथोपासते तदेव भवती'ति श्रुत्युक्तन्यायेन तादृशानेकगुणविशिष्टतया श्रीकृष्णं स्तुवन् वस्तु-निर्देशरूपं मङ्गलमाचरति रक्षन् इति ।

समस्तान् लोकान् जनान् भुवनानीति वा । 'लोकस्तु भुवने जन' इत्यमरोक्तेः । रक्षन् – पालयन्, निजजननयनानन्दकारी— निजाः – स्वकीयाश्च ते जनाश्च, तेषां नयनानि – चक्षूंषि, तेषाम् आनन्दं – सन्तोषं

करोतीति स तथा। निरस्तावद्यः— निरस्तानि – निराकृतानि अवद्यानि – दोषाः, येन स तथोक्तः। सौख्यैकमूर्तिः— सौख्यं – सुखमेव एका मूर्तिः – विग्रहो यस्य स तथोक्तः। 'दोषैकभुक् पुरोभागी, ह्लादैकमयीं, निखिलपूर्णगुणैकदेहं, सदागमैकविज्ञेयम्' इत्यादि प्रयोगदर्शनात् सङ्ख्यार्थस्यैकशब्दस्य 'पूर्वकालैकेति'[1] सूत्रेण पूर्वनिपातः, न केवलार्थस्येति ज्ञेयम्। अमरेन्द्रैः – देवश्रेष्ठैः ब्रह्मादिभिः, सुरतरुकुसुमैः – सुरतरवः – पारिजातादिदेववृक्षाः, तेषां, कुसुमैः – पुष्पैः, आकीर्यमाणः – अभिषिच्यमानः, जयजयवचनैः – 'जयजय' इति वचनानि येषां ते तैः, गन्धर्वपूर्वैः— गन्धर्वाः पूर्वे येषां ते, तैः, सिद्धैः – देवगायकैः, स्तूयमानः, भगवान् – समग्रैश्वर्यादिषड्गुणयुक्तः, सर्वसम्पत्समृद्धः— सकलसम्पद्भिः समृद्धः – पूर्णः, सः – भूभारहरणाद्यनेकव्यापारविशिष्टः कृष्णः, स्त्रीभिः – रुक्मिण्याद्यनेकस्त्रीभिः, पुत्रैः – प्रद्युम्नादिपुत्रैः, पौत्रैश्च – अनिरुद्धादिपौत्रैश्च, सहेति शेषः। अत्र जगति जयति – उत्कृष्टो वर्तते। 'जि जये' लट् परस्मैपदे रूपमेतत्। 'जयेर्जयाभिभवयोराद्येऽर्थेऽसावकर्मकः। उत्कर्षप्राप्तिराद्योऽर्थः द्वितीयेऽर्थे सकर्मकः' इति वचनात् जयिरत्रोत्कर्षार्थः॥

एवं समापितस्तोत्रः (ग्रन्थः) श्रीमद्राघवेन्द्रमुनिः स्वकृतस्तोत्रस्य (ग्रन्थस्य) नाम कुर्वन् तस्याप्तिमूलत्वेनाप्युपादेयत्वज्ञापनाय स्वनाम कीर्तयन् स्वस्य स्वकीयानां च तत्साध्यफलमाशास्ते इति इति।

**इति श्रीश्रीकृष्णचारित्रमञ्जरी लेशतः कृता।**
**राघवेन्द्रेण यतिना भूयात्कृष्णप्रसाददा॥ २९॥**

---

१. पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन। पा.सू. २-१-४९

इतिशब्दः प्रकारवाची। एवंप्रकारेण राघवेन्द्रेण यतिना लेशतः – सङ्क्षेपतः कृता, श्रीश्रीकृष्णचारित्रमञ्जरी— श्रीकृष्णस्य चारित्राणि – कर्माणि, तेषां मञ्जरीव मञ्जरी, तत्प्रतिपादिकेति यावत् । कृष्ण-प्रसाददा— कृष्णस्य प्रसादं ददाति इति सा तथा । भूयादिति । आशिषि लिङ् । एतत्स्तोत्रस्य (ग्रन्थस्य) वक्तॄणां च कृष्णः प्रसन्नः सर्वाभीष्टप्रदो भवतीत्यर्थः ॥ इति सर्वमतिमङ्गलम् ॥

**॥ इति सर्वतन्त्रस्वतन्त्र षड्दर्शनाचार्य श्रीमद्वैष्णवसत्सिद्धान्त-प्रतिष्ठापनाचार्य श्रीमद्विजयीन्द्रतीर्थपूज्यचरणकरकमलसञ्जात श्रीमत्सुधीन्द्रतीर्थपूज्यपादशिष्यैः श्रीमद्राघवेन्द्रतीर्थगुरुसार्वभौमैः विरचिता श्रीश्रीकृष्णचारित्रमञ्जरी संपूर्णा ॥**

यत्प्रसादात्सम्पदस्स्युर्ब्रह्मादीनां श्रियोऽपि च।
नमस्ते रुक्मिणीसत्यभामाश्लिष्टाय सर्वदा ॥ १ ॥

लक्ष्मीनारायणाख्येन गुरुपादप्रसादतः।
कृतेयं मञ्जरीमाला कृष्णः प्रीणातु मे तया ॥ २ ॥

इति श्रीमत्परमहंसकुलशेखरश्रीमद्वैष्णवसिद्धान्तप्रतिष्ठापनगरिष्ठ श्रीमदानन्दतीर्थभगवत्पादाचार्यसमलङ्कृत विद्यासिंहासनाधीश्वर जगद्गुरुश्रीमद्राघवेन्द्रतीर्थगुरुपादशिष्येण लक्ष्मीनारायणाख्येन कृता श्रीश्रीकृष्णचारित्रमञ्जरीमालाख्या व्याख्या समाप्ता

इति शम् ॥

॥ श्रीकृष्णार्पणमस्तु ॥



### श्रीराघवेन्द्रतीर्थश्रीपादविरचितः

# श्रीमन्महाभारततात्पर्यनिर्णयभावसङ्ग्रहः

### श्रीलक्ष्मीनारायणाचार्यकृतव्याख्यासहितः

—*—

शरणागतरक्षणैकदीक्षामुपयाते गुरुराजसार्वभौमे।
रतिरस्तु निरन्तरा हि भूयः करुणाशालिनि राघवेन्द्रराजे ॥ १ ॥

श्रीराघवेन्द्रतीर्थार्यनिर्मितं भावसङ्ग्रहम्।
व्याख्यास्येऽहं यथाबोधं तेषामेव कृपाबलात् ॥ २ ॥

श्रीमन्महाभारततात्पर्याख्यग्रन्थभावसङ्ग्रहं कर्तुकामः आद्याध्यायार्थमादौ सङ्गृह्णाति योऽग्र इति ।

**योऽग्रेऽभूद्विश्वगर्भः सुखनिधिरमितैर्वासुदेवादिरूपैः**
**क्रीडन् देवैरजाद्यैरगणितसुगुणो नित्यनीचोच्चभावैः।**
**वेदैर्वेद्योऽस्तदोषोऽप्यसुरजनमनो मोहयन् मर्त्यवृत्त्या**
**भक्तानां मुक्तिदाता द्विषदसुखकरः पातु सोऽस्मान्महेशः ॥ १ ॥**

यः अग्रे – सृष्टेरादिकाले, विश्वगर्भः— विश्वं गर्भे यस्य सः विश्वगर्भः, स्वोदरस्थितजगदित्यर्थः । विश्वगर्भः सन् सुखनिधिः, आनन्दपूर्णः अभूत् – स्थितः । अगणितसुगुणः यः नित्यनीचोच्चभावैः अजाद्यैर्देवैः – ब्रह्मादिदेवैः सह अमितैर्वासुदेवादिरूपैः क्रीडन् अभूत् । यः वेदैर्वेद्यः अस्तदोषोऽपि मर्त्यवृत्त्या असुरजनमनो मोहयन् यः भक्तानां मुक्तिदाता द्विषदसुखकरः स महेशः अस्मान् पातु इत्यन्वयः ॥ १ ॥

## श्रीराघवेन्द्रतीर्थश्रीपादविरचितः

# श्रीमन्महाभारततात्पर्यनिर्णयभावसङ्ग्रहः

## श्रीलक्ष्मीनारायणाचार्यकृतव्याख्यासहितः

—*—

शरणागतरक्षणैकदीक्षामुपयाते गुरुराजसार्वभौमे।
रतिरस्तु निरन्तरा हि भूयः करुणाशालिनि राघवेन्द्रराजे ॥ १ ॥

श्रीराघवेन्द्रतीर्थार्यनिर्मितं भावसङ्ग्रहम्।
व्याख्यास्येऽहं यथाबोधं तेषामेव कृपाबलात् ॥ २ ॥

श्रीमन्महाभारततात्पर्याख्यग्रन्थभावसङ्ग्रहं कर्तुकामः आद्याध्यायार्थमादौ सङ्गृह्णाति योऽग्र इति ।

**योऽग्रेऽभूद्विश्वगर्भः सुखनिधिरमितैर्वासुदेवादिरूपैः**
**क्रीडन् देवैरजाद्यैरगणितसुगुणो नित्यनीचोच्चभावैः।**
**वेदैर्वेद्योऽस्तदोषोऽप्यसुरजनमनो मोहयन् मर्त्यवृत्त्या**
**भक्तानां मुक्तिदाता द्विषदसुखकरः पातु सोऽस्मान्महेशः ॥ १ ॥**

यः अग्रे – सृष्टेरादिकाले, विश्वगर्भः— विश्वं गर्भे यस्य सः विश्वगर्भः, स्वोदरस्थितजगदित्यर्थः । विश्वगर्भः सन् सुखनिधिः, आनन्दपूर्णः अभूत् – स्थितः । अगणितसुगुणः यः नित्यनीचोच्चभावैः अजाद्यैर्देवैः – ब्रह्मादिदेवैः सह अमितैर्वासुदेवादिरूपैः क्रीडन् अभूत् । यः वेदैर्वेद्यः अस्तदोषोऽपि मर्त्यवृत्त्या असुरजनमनो मोहयन् यः भक्तानां मुक्तिदाता द्विषदसुखकरः स महेशः अस्मान् पातु इत्यन्वयः ॥ १ ॥

द्वितीयाध्यायार्थं सङ्गृह्णाति सद्ग्रन्थानामिति ।

सद्ग्रन्थानां समूहे जगति विलुलिते येन तद्भावमुच्चैः
वक्तुं मध्वो नियुक्तो व्यधित सुवचसामुद्धृतिं भारतस्य ।
देवोत्कृष्टस्य विष्णोः परमपुरुषतां तारतम्यं सुराणां
वायोर्जीवोत्तमत्वादिकमपि वदतां व्यासमीडे तमीशम् ॥ २ ॥

सद्ग्रन्थानां – भारतादिग्रन्थानां समूहे जगति विलुलिते सति अपपाठादिना व्याकुलिते सति येन भगवता तद्भावं सद्ग्रन्थानां भावं वक्तुं मध्वः नियुक्तः सन् देवोत्कृष्टस्य विष्णोः परमपुरुषतां सर्वोत्तमत्वम्, सुराणां तारतम्यं वायोः जीवोत्तमत्वादिकमपि, आदिपदेन अतिरोहितविज्ञानत्वादिग्रहः । वदतां वचसां समस्तसच्छास्त्राणाम् उद्धृतिं तदर्थनिर्णायकग्रन्थविशेषं महाभारततात्पर्यनिर्णयाख्यं ग्रन्थं व्यधित कृतवान्, तमीशं व्यासम् ईडे स्तौमीत्यन्वयः ॥ २ ॥

तृतीयाध्यायार्थं सङ्गृह्णाति आदाविति ।

आदौ रूपचतुष्टयो सृजति यो देवान् पुरानुक्रमात्
ब्रह्माण्डं पुरमब्जजादिविबुधान् सृष्ट्वा हरत्यन्ततः ।
स्रष्टा पूर्ववदस्य सर्वजगतो मत्स्यादिरूपोऽभवत्
रामोऽभूदनुजान्वितो दशरथात्पायात्स नः श्रीपतिः ॥ ३ ॥

आदौ रूपचतुष्टयः वासुदेवादिरूपचतुष्टयात्मकः यः पुराऽनुक्रमात् पूर्वकल्पीयक्रमानुसारेण देवान् ब्रह्मादीन् सूक्ष्मरूपेण सृजति । ब्रह्माण्डं पुरं च सृजति । तत इत्यध्याहार्यं तदनन्तरं अब्जजादिविबुधान् ब्रह्मादिदेवान् सृष्ट्वा ततः प्रलयकाले हरति । यः अस्य जगतः स्रष्टा यः मत्स्य-

रूपः अभवत् दशरथादनुजान्वितः सन् रामः अभूत् । सः श्रीपतिः पायादित्यन्वयः ॥ ३ ॥

चतुर्थाध्यायार्थं सङ्गृह्णाति यद्वृद्धिरिति ।

**यद्वृद्धिर्जनमोहिनी मुदमिता यद्दर्शनात्सज्जनाः**
**येनार्थिप्रियकारिणा निशचरीहन्त्रा क्रतू रक्षितः ।**
**योऽहल्यां सपतिं व्यधाद्धरधनुर्भङ्क्त्वा हरज्जानकीं**
**जेता वर्त्मनि भार्गवस्य नगरीं रामो गतोऽव्यात्स माम् ॥ ४ ॥**

यस्य – रामस्य, वृद्धिः, जनमोहिनी— जनस्य – मन्दजनस्य मोहिनी, अयथार्थज्ञानसम्पादिका – यस्य दर्शनात् सज्जना मुदमिताः प्राप्ताः, अर्थिप्रियकारिणा— विश्वामित्राय – अर्थिने अभीष्टं कुर्वता निशाचरीहन्त्रा— येन क्रतुः – विश्वामित्रस्य यज्ञः , रक्षितः – पालितः, अत्र 'द्रलोपे पूर्वस्य दीर्घोऽणः' इति दीर्घः । यः अहल्यां – पतिशापेन शिलाभूतां गौतमभार्यां, सपतिं – स्वदर्शनेन मानुषतां प्रापयित्वा पतिभोग्यां चकार । यः हरधनुः भङ्क्त्वा – छित्वा, जानकीं – जनकस्य सुताम् आवहत् । वर्त्मनि भार्गवस्य जेता, नगरीं – अयोध्यां गतः, स रामः माम् अव्यात् इत्यन्वयः ॥ ४ ॥

पञ्चमाध्यायार्थं सङ्गृह्णाति त्यक्त्वेति ।

**त्यक्त्वा राज्यमितो वनं वचनतो मातुश्च काकाक्षिगं**
**दैत्यं व्यस्य विकर्णघोणखचरीबन्धून् खरादीन् खलान् ।**
**मारीचं च निहत्य रावणहृतां सीतां विचिन्वन्निव**
**प्राप्तो वायुसुतेन सूर्यजयुजा रामोऽवताद्वन्दितः ॥ ५ ॥**

यः मातुर्वचनतः राज्यं त्यक्त्वा वनं इतः – प्राप्तः सन्, काकाक्षिगं दैत्यं च व्यस्य – संहृत्य विकर्णघोणखचर्याः – छिन्नकर्णनासिकायाः राक्षस्याः – शूर्पणखायाः बन्धून् – खलान् खरादीन् मारीचं च निहत्य रावणहृतां सीतां – सीताकृतिं विचिन्वन्निव – अन्वेषमाण इव स्थितः सूर्यजयुजा – वायुसुतेन प्राप्तः सन्, वन्दितः रामः नः अवतात् इत्यन्वयः ॥ ५ ॥

षष्ठाध्यायभावमाह सुग्रीवेणेति ।

**सुग्रीवेण सखित्वमाप शपथं कृत्वा वधे वालिनः**
**तालान् सप्त विभिद्य वालिनिधनं कृत्वा स्वराज्ये स्थितम् ।**
**मार्तण्डिं च विधाय मारुतियुजा याम्यां दिशं गच्छता**
**सीतान्वेषणमिच्छताब्धितरणे रामोऽवतात्संस्तुतः ॥ ६ ॥**

सुग्रीवेण, सखित्वं – मैत्रीभावम्, आप्य, वालिनः, वधे – वधविषये, शपथं – प्रतिज्ञां, कृत्वा, सप्ततालान्, विभिद्य – छित्वा, वालिनिधनं कृत्वा, मार्तण्डिं – सुग्रीवं, स्वराज्ये, स्थितं – विधाय, याम्यां दिशं – दक्षिणदिशं प्रति, गच्छता, सीतान्वेषणमिच्छता, मारुतियुजा – कपिसमूहेन, अब्धितरणे – अब्धितरणकाले, संस्तुतः रामः अवतात् इत्यन्वयः ॥ ६ ॥

सप्तमाध्यायभावं वक्ति यस्येति ।

**यस्य श्रीहनुमाननुग्रहबलात्तीर्णाम्बुधिर्लीलया**
**लङ्कां प्राप्य निशाम्य रामदयितां भङ्क्त्वा वनं राक्षसान् ।**
**अक्षादीन् विनिहत्य वीक्ष्य दशकं दग्ध्वा पुरीं तां पुनः**
**तीर्णाब्धिः कपिभिर्युतो यम[illegible]तं रामचन्द्रं भजे ॥ ७ ॥**

यस्यानुग्रहबलादित्यस्य सर्वत्राप्यन्वयः। हनुमान् लीलया तीर्णाम्बुधिः सन्, लङ्कां प्राप्य, रामदयितां निशाम्य, सीताकृतिं दृष्ट्वा, वनं भङ्क्त्वा, अक्षादीन् राक्षसान् विनिहत्य, दशकं रावणं दृष्ट्वा, तां पुरीं दग्ध्वा, पुनस्तीर्णाब्धिः सन्, यम् अनमत्, तं रामचन्द्रं भजे इत्यन्वयः ॥ ७ ॥

अष्टमाध्यायाभिप्रायमाह सिन्धुमिति।

**सिन्धुं दक्षिणमागतो दशमुखभ्रात्रिष्टदोऽभ्यर्चितो**
**बद्ध्वा सेतुमवाप्य राक्षसपुरीं सैन्यैः कपीनां युतः।**
**हत्वेन्द्रारिकरीरकर्णदशकादीन् राक्षसान् जानकी-**
**मादायाप्य पुरीं स्वराज्यपदवीं प्राप्तोऽवताद्राघवः ॥ ८ ॥**

यः दक्षिणं सिन्धुं – दक्षिणसमुद्रं, आगतः – प्राप्तः, दशमुखभ्रात्रिष्टदः — दशमुखभ्राता – विभीषणः, तस्य इष्टप्रदाता, अर्चितः – सिन्धुनेति शेषः। सेतुं बद्ध्वा, राक्षसपुरीमवाप्य, कपीनां सैन्यैर्युतः सन्, इन्द्रारिः – इन्द्रजित्, करीरकर्णः – कुम्भकर्णः, 'घटः करीरः कलशः' इत्यादेः। दशको – दशशिरः – रावणः, तदादीन् राक्षसान् हत्वा, जानकीं – सीताकृतिम् आदाय, पुरीम् – अयोध्याम्, आप्य – स्वराज्यपदवीं प्राप्तः, स – राघवः, अवतात् इत्यन्वयः ॥ ८ ॥

नवमाध्यायाभिप्रायमाह प्राप्त इति।

**प्राप्तः साम्राज्यलक्ष्मीं प्रियतमभरतं योवराज्येऽभिषिच्य**
**स्वीयान् रक्षन् सुतौ द्वौ जनकदुहितरि प्राप्य यज्ञैर्यजन् स्वम्।**
**सीताहेतोर्विमोह्य क्षितिजदितिसुतानर्थितो देवसङ्घैः**
**सद्भिर्युक्तो हनूमद्वरद उपगतः स्वं पदं पातु रामः ॥ ९ ॥**

साम्राज्यलक्ष्मीं प्राप्तः सन्, यौवराज्ये प्रियतमभरतम् अभिषिच्य, स्वीयान् स्वसम्बन्धिजनान् रक्षन् सन्, जनकदुहितरि द्वौ सुतौ प्राप्य, यज्ञैः स्वं यजन् सन्, सीताहेतोः –' सीतार्थं, भूमौ उत्पन्नान् दैत्यान्, विमोह्य – मोहयुक्तान् कृत्वा, देवसङ्घैः अर्चितः सन्, सद्भिर्युक्तः हनूमद्वरदः, स्वं पदं – स्वस्थानं स्वकीयस्थानं, उपगतः – प्राप्तः, रामः पातु इत्यन्वयः ॥ ९ ॥

दशमाध्यायाभिप्रायमाह क्षीराब्धीति ।

क्षीराब्ध्युन्मथनादिकात्मचरितं देवैर्गृणद्भिः स्तुतः
सज्ज्ञानाय पराशराख्यमुनिना यः सत्यवत्यामभूत् ।
व्यासत्वेन विधाय वेदविवृतिं शास्त्राणि सर्वाण्यपि
ज्ञानं सत्सु विधाय तद्गतकलिं निघ्नन् स नोऽव्याद्धरिः ॥ १० ॥

यः क्षीराब्ध्युन्मथनादिकात्मचरितं – क्षीरसमुद्रमथनाय आत्मचरित्रं गृणद्भिः – वदद्भिः, देवैः स्तुतः सन्, सत्यवत्यां पराशराख्यमुनिना सज्ज्ञानाय – सम्यज्ज्ञानाय, व्यासत्वेन – व्यासरूपेण, अभूत् – अवतारं कृतवान् । तत इति योज्यम् । ततः वेदविवृतिं – विभागादिकं, सर्वाणि शास्त्राणि च विधाय, सत्सु, ज्ञानं विधाय, तद्गतं – सज्जनगतकलिं, निघ्नन् स हरिः नः अव्यात् इत्यन्वयः ॥ १० ॥

एकादशाध्यायतात्पर्यमाह भूपा इति ।

भूपा यत्र पुरूरवप्रभृतयो जाता विधोरन्वये
यद्वाद्या भरतादयः कुरुमुखा भीष्माम्बिकेयादयः ।
भूभारक्षयकाङ्क्षिभिः सुरवरैरभ्यर्थितः श्रीपतिः
तत्राविर्भवितुं सहामरगणैरिच्छन् हरिः पातु माम् ॥ ११ ॥

यत्र पुरूरवप्रभृतयः यद्वाद्याः – यदुराजमुखाः, भरतादयः, कुरुमुखाः – कुरुराजप्रभृतयो, भूपाः – राजानः भीष्माम्बिकेयादयः – भीष्मधृतराष्ट्रप्रभृतयः भूपा जाताः । तत्र विधोरन्वये चन्द्रवंशे भूभारक्षयकाङ्क्षिभिः परि अपेक्षावद्भिः सुरवरैः – देवश्रेष्ठैः अभ्यर्थितः सन्, अमरगणैः सह – अमरश्रेष्ठैः इति यावत् । आविर्भवितुम् इच्छन् श्रीपतिः मां पातु इत्यन्वयः ॥ ११ ॥

द्वादशाध्यायाभिप्रायमाह देवक्यामिति ।

**देवक्यां वसुदेवतोऽग्रजयुतो जातो व्रजं योगतः**
**बालघ्नीशकटाक्षहा स्वजननीमान्यस्तृणावर्तहा ।**
**यत्पूर्वं भरतश्च पाण्डुतनया यत्सेवनं जज्ञिरे**
**कर्तुं धर्ममरुद्वृषाश्विनरजं नन्दात्मजं नौमि तम् ॥ १२ ॥**

यः देवक्यां वसुदेवतः अग्रजयुतः सन् जातः, यः व्रजं गोकुलं प्राप्तः, बालघ्नी – पूतना, शकटाक्षः – तन्नामकदैत्यः, तयोः हन्ता, स्वजननीमान्यः – स्वजनन्या मान्यः, तृणावर्ताख्यासुरहन्ता, यदवतारात्पूर्वं भरतः – भगवद्भरणे रतः – भगवच्छय्यारूपः शेषः, बलराम इत्यभिप्रायः । पाण्डुतनया धर्ममरुद्वृषाश्विनरजं— धर्मो – यमधर्मः, मरुत् –वायुः, वृषः – इन्द्रः, अश्विनौ, नरः – शेषः, तज्जन्यं तत्तद्योग्यमिति यावत् । यत्सेवनं – यस्य सेवनं कर्तुं जज्ञिरे तं नन्दात्मजं नौमीत्यन्वयः ॥ १२ ॥

त्रयोदशाध्यायभावं वक्ति संस्कारानिति ।

**संस्कारान् प्राप्य गर्गाद्बहुशिशुचरितैः प्रीणयन् गोपगोपीः**
**वत्सान् धेनूश्च रक्षन् अहिपतिदमनो यः पपौ काननाग्निम् ।**

**विप्रस्त्रीप्रीतिकारी धृतधरणिधरो गोपिकाभिर्निशासु**

**क्रीडन् मल्लांश्च कंसं न्यहनदुपगतोऽव्यात्स कृष्णः पुरीं स्वाम् ॥१३॥**

यः गर्गाचार्यात् संस्कारान् – जातकर्मादीन् लब्ध्वा, बहुबाल-लीलाभिः गोपगोपीः प्रीणयन्, धेनूर्वत्सांश्च रक्षन्, अहिपतिदमनः – कालियाख्यनागमर्दनः काननाग्निं पपौ, विप्रस्त्रीप्रीतिकारी तद्धृतान्न-भोजनादिना प्रीतिकर्ता, धृतधरणिधरः – गोवर्धनपर्वतोद्धर्ता, निशायां – रात्रौ, गोपिकाभिः क्रीडन् सन्, स्वां पुरीं – स्वोत्पत्तिस्थानभूतपुरीं – मधुराम् उपगतः, मल्लान् कंसं च न्यहनत्, सः कृष्णः अव्यात् इत्यन्वयः ॥ १३ ॥

चतुर्दशाध्यायभावं वक्ति पित्रोरिति ।

**पित्रोर्बन्धं निरस्य क्षितिपतिमकरोदुग्रसेनं गुरोर्यः**

**पुत्रं प्रादात्परेतं युधिविजितजरासन्धपूर्वारिवर्गः ।**

**पार्थान् पित्राविहीनानुपगतनगरान् यस्त्वजोऽपाद्विपद्भ्यः**

**नन्दादीनुद्धवोक्त्या गतविरहशुचः कारयन्मावतात् सः ॥ १४ ॥**

यः अजः, पित्रोः – मातापित्रोः – देवकीवसुदेवयोः, बन्धं – निगड-बन्धं, निरस्य – परिहृत्य, उग्रसेनं क्षितिपतिमकरोत् । गुरोः परेतं – मृतं पुत्रं प्रादात्, युधिविजितजरासन्धपूर्वारिवर्गः, पित्राविहीनान् – उपगत-नगरान्, पार्थान् – पाण्डवान्, विपद्भ्यः, अपात् – ररक्ष, उद्धवोक्त्या नन्दादीन् गतविरहशुचः कारयन् सः माम् अवतात् इत्यन्वयः ॥ १४ ॥

पञ्चदशाध्यायाभिप्रायमाह यस्मादिति ।

**यस्माद्व्यासस्वरूपादपि विदितसुविद्याप्याययुश्च प्रमोदं**

**पार्था द्रोणः सुतार्थं द्रुतिगतभृगुपो यन्नियत्यार्थकामः ।**

**तस्मादाप्तोरुविद्यो द्रुपदमुपगतोऽनाप्तकामः स्वविद्याः**
**शिष्येभ्यः कौरवेभ्यो दितिजनिरसनोऽदात्स नोऽव्यात् मुरारिः ॥१५॥**

यस्मात् – व्यासस्वरूपात्, विदितसुविद्याः सन्तः – प्राप्तसमीचीनविद्याः सन्तः, पार्थाः, प्रमोदं अप्याययुः – प्राप्तवन्तः । अप्याययुरित्यत्र 'अपीत्युपसर्ग सन्ध्यकारलोपे'अप्ययुरिति रूपसिद्धिः । 'वष्टिभागुरिरल्लोपमवाप्योरुपसर्गयोः । टापं चैव हलन्तानां यथा वाचा दिशादिकमि'त्युक्तेः । अत एव माघकाव्ये पञ्चमसर्गे 'अवाप्यधुर्वसुमतीमभिरोचमानास्तूर्णं पयोधय इवोर्मिभिरापतन्तः' इत्युक्तम् । यन्नियत्या – यत्प्रेरणाया द्रोणः सुतार्थं – सुतस्य क्षीरप्राप्त्यर्थं, प्रतिगतभृगुपः – परशुरामं प्राप्तः, परशुरामात् प्राप्तोरुविद्यः, अर्थकामः – गोप्राप्तिलक्षणप्रयोजनकामः, द्रुपदराजं प्राप्तः, अलब्धप्रयोजनवान्— शिष्येभ्यः – कौरवेभ्यः, स्वविद्याः आदरात् तेभ्यः स्वप्रयोजनं भवेत् इत्यभिप्रायेण अदात् । सः दितिजनिरसनः मुरारिः नः अव्यात् इत्यन्वयः ॥ १५ ॥

षोडशाध्यायभावमाह भूयस्त्विति ।

**भूयस्त्वागतमाहवे सहजरासन्धं नृपैर्नीतये**
**ज्ञात्वायात्सहजान्वितोऽतिगहनं गोमन्तमत्रागतान् ।**
**तार्क्ष्याल्लब्धकिरीट उन्नतगिरेराप्लुत्य जित्वा रिपून्**
**हत्वा स्वीयसृगालमात्मनगरीं प्राप्तः स नोऽव्याद्धरिः ॥ १६ ॥**

यः सहजान्वितः सन् नृपैः सह युद्धाय भूयस्तु आगतं जरासन्धं ज्ञात्वा नीतये – नीत्यर्थं न त्वसामर्थ्येन अतिगहनं गोमन्तमयात् । अरिपर्वते तार्क्ष्याल्लब्धकिरीटः उन्नतगिरेराप्लुत्य आगतान् रिपून् जित्वा

स्वसहजं सृगालवासुदेवं हत्वा आत्मनगरीं मधुरां प्राप्तः स हरिः नः अव्यात् इत्यन्वयः ॥ १६ ॥

सप्तदशाध्यायभावं वक्ति भग्नाशानिति ।

भग्नाशान् नृपतीनरीन् व्यधित यः स्वर्गाधिपाग्र्यासने
लग्नो भीष्मकसत्कृतोऽथ यवनं जघ्ने सतीमात्मनः ।
निघ्नां योऽकृत रुग्मिणीं समजयद् दुर्गर्वरुक्म्यादिकान्
विघ्नं सत्रजिदात्मजापतिरसौ मे घ्नन्भवेत्सर्वदा ॥ १७॥

अरीन् नृपतीन् भग्नाशान् व्यधित । स्वर्गाधिपाग्र्यासने – महेन्द्रदत्तदिव्यासने, लग्नः – स्थितः सन्, भीष्मकराजेन सत्कृतः – पूजितः । अथ कालयवनं जघ्ने – संहृतवान् । यः आत्मनः निघ्नां – स्वाधीनां रुक्मिणीं सतीमकृत । दुर्गर्वरुक्म्यादिकान् समजयत् । असौ सत्रजिदात्मजापतिः सर्वदा मे विघ्नं घ्नन् – परिहर्ता भवेत् इत्यन्वयः ॥ १७ ॥

अष्टादशाध्यायाभिप्रायमाह अस्त्रज्ञेष्विति ।

अस्त्रज्ञेष्वधिकोऽर्जुनोऽथ यदनुक्रोशेन भीमं विना
सद्धर्मे निरतं ददौ स्वगुरवे वध्वा नृपं पार्षतम् ।
पुत्रौ सा द्रुपदोऽपि वह्नि विबुधस्त्रीरूपकावाप्तवान्
इष्टां धर्मज आप राजपदवीं स प्रीयतां मे हरिः ॥ १८॥

यदनुक्रोशेनेत्यस्य सर्वत्रान्वयः । यस्य दयदा अर्जुनः भीमं विना अस्त्रेष्वधिकः सन् सद्धर्मे निरतं पार्षतं नृपं – द्रुपदराजं बद्ध्वा गुरवे ददौ । सः द्रुपदोऽपि वह्निविबुधस्त्रीरूपकौ पुत्रौ दृष्टद्युम्नद्रौपद्याख्यौ

प्राप्तवान् । धर्मज्ञः इष्टां राजपदवीं आप । स हरिर्मे प्रीयताम् इत्यन्वयः ॥ १८ ॥

एकोनविंशाध्यायतात्पर्यमाह यत्कारुण्यबलेनेति ।

**यत्कारुण्यबलेन पाण्डुतनया निस्तीर्णनानापदः**
**भिक्षान्नाशिन आगमाभ्यसनिनो हत्वा बकं द्रौपदीम् ।**
**उद्वाह्याखिलभूपतीनपि रणे जित्वा गताः स्वां पुरीं**
**इन्द्रप्रस्थपुरेऽवसन् कृतधरारक्षाः स नोऽव्याद्धरिः ॥ १९ ॥**

यत्कारुण्यबलेन पाण्डुतनयाः निस्तीर्णनानापदः भिक्षान्नाशिनः – भिक्षान्नमशनमेषामस्तीति तथोक्ताः । आगमाभ्यसनिनः – विद्याभ्यासवन्तः, बकासुरं हत्वा, द्रौपदीमुद्वाह्य, रणे अखिलभूपतीनपि जित्वा, स्वां पुरीं गताः, कृतधरारक्षाः सन्तः, इन्द्रप्रस्थपुरे अवसन्, स हरिः नः अव्यात् इत्यन्वयः ॥ १९ ॥

विंशत्यध्यायभावमाह य इति ।

**यः पार्थान् परिपालयन् हरिपुरे स्त्रीपुत्रसम्पद्युतान्**
**संहर्ता शतधन्वनोऽष्टमहिषीभर्ता सुरर्षिस्तुतः ।**
**हत्वा भौममपाहरत्सुरतरुं बह्वीरुवाहाङ्गनाः**
**प्रायच्छद्धरिसूनवे स्वसहजां पायात्स नः केशवः ॥ २० ॥**

यः हरिः इन्द्रप्रस्थे स्त्रीपुत्रसम्पद्युतान् पार्थान् परिपालयन्, शतधन्वनः संहर्ता, अष्टमहिषीभर्ता, सुरर्षिणा नारदेन स्तुतः, भौमं नरकासुरं हत्वा सुरतरुमपाहरत्, बह्वीरङ्गना उवाह, हरिसूनवे अर्जुनाय स्वसहजां सुभद्रां प्रायच्छत्, सः केशवः नः पायात् इत्यन्वयः ॥ २० ॥

एकविंशत्यध्यायतात्पर्यमाह पार्थानिति ।

पार्थान् लब्धसभान् विधाय मयतः प्राप्तः पुरं स्वं गतः
क्षेत्रं कौरवमर्कपर्वणि पुरीं सम्प्राप्य कर्ता क्रतोः ।
पाण्डून् प्राप्य जरासुते विनिहते तैः कारयित्वाऽध्वरं
प्राप्तः स्वं पुरमच्युतो विजयते द्यूते जितैश्च स्मृतः ॥ २१ ॥

यः पार्थान् मयतः – देवतक्षकसकाशात् प्राप्तसभान् विधाय, स्वपुरं प्राप्तः, अर्कपर्वणि कौरवं क्षेत्रं गतः, पुरीं सम्प्राप्य, क्रतोः कर्ता, पाण्डून् प्राप्य, जरासन्धे विनिहते सति, पाण्डवैरध्वरं – राजसूयाध्वरं कारयित्वा, स्वपुरं प्राप्तः, द्यूते जितैस्तैः स्मृतः, सः अच्युतः, विजयते – उत्कृष्टो वर्तते इत्यन्वयः ॥ २१ ॥

द्वाविंशाध्यायभावमाह पार्था इति ।

पार्था याता अरण्ये निहतनिशिचराः प्रीणयन्तो द्विजौघान्
वार्तां श्रुत्वा स्वकी यामुपगतहरिणा मानिताः सिन्धुराजम् ।
जित्वा दुर्योधनादीन् हरिहयपुरुषव्रातबद्धान्विमोच्य
प्राप्ता धर्मप्रसादं यमथ मुररिपुं तुष्टुवुस्तं प्रपद्ये ॥ २२ ॥

पार्थाः अरण्यं गताः सन्तः निहतनिशिचराः द्विजौघान् – ऋषिसमूहान् प्रीणयन्तः । स्वकीयवार्तां – स्वसम्बन्धिजनक्षेमसमाचारं उपगतहरिणा – आगतेन कृष्णेन श्रुत्वा, सिन्धुराजं – सैन्धवं जित्वा – पराजित्य, हरिहयपुरुषव्रातबद्धान् – इन्द्रभृत्यभूतगन्धर्वसमूहैर्बद्धान् दुर्योधनादीन् विमोच्य, धर्मराजस्य प्रसादं प्राप्ताः सन्तः, अथ यं मुररिपुं तुष्टुवुः, तं प्रपद्ये इत्यन्वयः ॥ २२ ॥

त्रयोविंशाध्यायाभिप्रायमाह अन्यं वेषमिति ।

**अन्यं वेषमुपागताः पृथगितो गत्वा विराटालयं**
**तद्देहस्थहरेर्निषेवणपरा मल्लं तथा कीचकान् ।**
**हत्वा गोग्रहणोद्यतानपि कुरून् जित्वा विराटार्चिताः**
**पार्थाः स्वान्तिकमागतं यमजितं भेजुस्तमीडेऽच्युतम् ॥ २३ ॥**

पार्थाः अन्यं वेषं – वेषान्तरम्, उपगताः – प्राप्ताः, इतः – अरण्यात्, विराटालयं गत्वा, पृथक् – प्रत्येकं, तद्देहस्थहरेः – विराटशरीरस्थ-भगवतः, निषेवणपराः, मल्लं तथा कीचकान् हत्वा, गोग्रहणोद्यतान् दुर्योधनादीन् जित्वा, विराटार्चिताः – विराटेन पूजिताः सन्तः, स्वान्तिकमागतं – स्वसमीपं प्राप्तं, यं भेजुः, तम्, अजितम्, अच्युतम् ईडे इत्यन्वयः ॥ २३ ॥

चतुर्विंशाध्यायभावमाह यत्सम्मत्येति ।

**यत्सम्मत्या पृषततनुजप्रेषितब्राह्मणोक्त्या**
**राज्यं नादादनुजजनितश्चाम्बिकेयोऽनुजस्य ।**
**यत्साहाय्यं व्यधित नगरीं कौरवाणामवाप्तः**
**स्वोक्ते कृष्णस्तदनभिमतेऽवाप्तपार्थः स नोऽव्यात् ॥ २४ ॥**

यत्सम्मत्या पृषततनुजेन प्रेषितः यः ब्राह्मणः – धौम्याचार्यः, तदुक्त्या, आम्बिकेयः – धृतराष्ट्रः, अनुजः जनिता यस्य सः अनुजजनिता तस्येति विग्रहः । पाण्डुपुत्रस्य अनुजस्य राज्यं नादात्, यः कौरवाणां नगरीमवाप्तः, साहाय्यं व्यधित, स्वोक्ते – स्ववचने, तदनभिमते सति – धृतराष्ट्रानभिमते सति, अवाप्तपार्थः, स कृष्णः, नः अव्यात् इत्यन्वयः ॥ २४ ॥

पञ्चविंशाध्यायभावमाह सेन इति ।

सेने वीक्ष्य रणोन्मुखे करुणया शस्त्रोज्झितं फल्गुनं
सद्गीतामुपदिश्य कार्मुकधरं चक्रेऽस्य यः सारथिः ।
अन्योन्यं कुरुपाण्डवैश्च पृतनां योऽजीषयत् स्यन्दनात्
यो भीष्मं निरपातयत् सुतशरैः पाण्डोस्तमीडेऽच्युतम् ॥ २५ ॥

रणोन्मुखे सेने – युद्धोन्मुखं सैन्यद्वयं, वीक्ष्य, करुणया शस्त्रोज्झितं – शस्त्रं उज्झितं येन सः शस्त्रोज्झितः, तं, परित्यक्तशस्त्रं, फल्गुनं – अर्जुनं, यः सद्गीतामुपदिश्य कार्मुकधरं धनुर्धरं चक्रे, अस्य सारथिः, कुरुपाण्डवैः अन्योन्यं – परस्परं, पृतनामजीषयत् – जितां कारयामास, यत्स्यन्दनात् पाण्डोः सुतशरैः भीष्मं निरपातयत्, तम् अच्युतम् ईडे इत्यन्वयः ॥ २५ ॥

षड्विंशाध्यायार्थमाह द्रोण इति ।

द्रोणे युद्ध्यति पाण्डवैर्विनिहतं प्राग्ज्योतिषं पार्थतः
कृत्वा तस्य सुते हते निशि शिवं नीत्वाऽर्जुनं सैन्धवम् ।
तद्दत्तास्त्रबलादजीघनदतो द्रोणे हते द्रौपदेः
यो भीमं च निजास्त्रनम्रमकरोत् तं नौमि नारायणम् ॥ २६ ॥

यः पाण्डवैः सह द्रोणे युध्यति सति प्राग्ज्योतिषं भगदत्तं पार्थतः अर्जुनात् निहतं कृत्वा, तस्य – अर्जुनस्य, सुते – अभिमन्यौ, हते सति, निशि – रात्रौ, अर्जुनं रुद्रं प्रति नीत्वा तद्दत्तास्त्रबलात् – शिवदत्तास्त्रसामर्थ्यात्, सैन्धवम् अजीघनत् – संहतमकरोत्, अतः अनन्तरं द्रौपदेः द्रुपदसुतात् – धृष्टद्युम्नात्, द्रोणे – द्रोणाचार्ये हते

सति, भीमं च निजास्त्रनम्रं – नारायणास्त्रविषये नम्रं, अकरोत्, तं नारायणं नौमि इत्यन्वयः ॥ २६ ॥

सप्तविंशाध्यायभावमाह यत्सामर्थ्यबलेनेति ।

**यत्सामर्थ्यबलेन सूर्यतनुजे पार्थेन युद्धे जिते**

**पश्चाच्छल्यमवाप्य सारथिवरं धर्मात्मजं सायकैः ।**

**शीर्णाङ्गं कृतवत्यमुं शिबिरगं पार्थं च मृत्योरपात्**

**यः पार्थेन हतेऽर्कजे नृपनुतः पायात् स नः केशवः ॥ २७ ॥**

यस्य सामर्थ्यबलेन, सूर्यतनुजे – कर्णे, पार्थेन – अर्जुनेन जिते सति, पश्चात् – अनन्तरं, शल्यं सारथिवरमवाप्य, धर्मात्मजं – धर्मराजं सायकैः शीर्णाङ्गं कृतवति सति, शिबिरगं अमुं धर्मराजं पार्थं च, मृत्योरपात्, – मृत्युं परिहृत्य ररक्ष ('ल्यब्लोपनिमित्ता पञ्चमी', 'आसनात्प्रैक्षत' इत्यादिवत्), धर्मराजसंहारार्थमुद्युक्तं पार्थं निवार्य, धर्मराजं मृत्योरपालयत्, अग्रजहननोद्योगजनितापराधपरिहाराय आत्महत्यार्थमुद्यतं पार्थं, आत्मस्तुतिकरणे – आत्महत्या कृता भवतीति अनुक्त्वा, आत्महत्याख्यमृत्युं परिहृत्य ररक्षेत्याशयः । यः पार्थतः अर्कजे – कर्णे हते सति नृपनुतः – धर्मराजेन नुतः स केशवः नः पायात् इत्यन्वयः ॥ २७ ॥

अष्टाविंशाध्यायभावमाह शल्य इति ।

**शल्ये धर्मसुताद्धते कुरुकुले पार्थैः समूहे हते**

**भीमेनानुजसंयुते विनिहते दुर्योधने द्रौणिना ।**

**सुप्तानां निधने कृते निशि ततो मुक्त्वा विधेरस्त्रतः**

**पार्थान् राज्यमितांश्च तत्सुतसुतं योऽधात्स नोऽव्याद्धरिः ॥ २८ ॥**

शल्ये धर्मसुतात् – धर्मराजात् हते सति, समस्ते कुरुकुले – कौरवसमूहे, पार्थैः – पाण्डवैः हते सति, अनुजसंयुते दुर्योधने भीमेन हते सति, निशि द्रोणिना – द्रोणपुत्रेण – अश्वत्थाम्ना सुप्तानां निधने कृते सति, यः ततो विधेरस्त्रतः मुक्त्वा, राज्यमितान् पार्थान्, तत्सुतसुतं – पार्थसुतः अभिमन्युः, तत्सुतः परीक्षित्, तं अपात् – ररक्ष, स हरिः नः अव्यात् इत्यन्वयः ॥ २८ ॥

एकोनत्रिंशाध्यायभावमाह कृष्णाभ्यामिति ।

कृष्णाभ्यामपि भूसुरै नृपसुतो राज्येऽभिषिक्तो द्विजै-
र्दग्धे निन्दति भिक्षुके खलतरे स्वं विप्रतीसारतः ।
राज्यं त्यक्तुमथोद्यतो वचनतो यस्याप्तभीष्मस्तत-
श्शुश्रावाखिलधर्मनिर्णयमदः कृष्णद्वयं धीमहि ॥ २९ ॥

कृष्णाभ्यां – वासिष्ठकृष्णयादवकृष्णाभ्यां भूसुरैरपि राज्ये अभिषिक्तः, नृपसुतः – धर्मराजः, खलतरे विप्रतीसारतः – विरोधात्, निन्दति – निन्दां कुर्वति, भिक्षुके – भिक्षुकरूपधरे दुर्योधनमित्रभूते, द्विजैः दग्धे सति, स्वं राज्यं त्यक्तुं उद्यतः – उद्युक्तः, अथ, यस्य वचनतः – यद्वाक्यात्, आप्तभीष्मः सन् – यो भीष्मादखिलधर्मनिर्णयं शुश्राव, अदः – एतादृशं कृष्णद्वयं, धीमहि इत्यन्वयः ॥ २९ ॥

त्रिंशाध्यायभावमाह स्मृत्वेति ।

स्मृत्वा यं द्युसरित्सुतो वसुरभूत् राजा यदाश्वासितः
निर्दुःखोऽपि जुगोप धर्मनिरतो जित्वा स्वराज्यं कलिम् ।
यः पार्थं समबोधयन् मृतशिशुं योऽजीवयत्पाण्डवैः
यो यज्ञं समकारयत् वहुधनैर्ध्यायामि तं केशवम् ॥ ३० ॥

द्युसरित्सुतः – भीष्मः, यं स्मृत्वा वसुरभूत्, राजा – धर्मराजः, यदाश्वासितः – येन आश्वासितः, समाहितः सन्, निर्दुःखः सन्, कलिं जित्वा, स्वराज्यं शशास, यः पार्थं समबोधयत्, मृतशिशुं अजीवयत्, यः बहुधनैः पाण्डवैः यज्ञं समकारयत् तं केशवं ध्यायामि इत्यन्वयः । ॥ ३० ॥

एकत्रिंशाध्यायतात्पर्यमाह यद्युक्ता इति ।

**यद्युक्ताः पाण्डुपुत्राः क्षितिमथ जगुपुर्धर्मराजस्त्वरावान्**
**धर्मे यत्प्रीतयेऽभूत्पवनजवचनैराम्बिकेयं विरक्तम् ।**
**व्यासात्मा यो वनस्थं त्वकृत निजमनोऽभीष्टवन्तं गतस्वं**
**नायं पार्थान् स्मरन्तो मुमुदुरपि पदं यस्य कृष्णं तमीडे ॥ ३१ ॥**

अथ – कौरवहननानन्तरं, यद्युक्ताः – येन – कृष्णेन युक्ताः, पाण्डुपुत्राः – धर्मराजादयः, क्षितिं – भूमिं, जुगुपुः – रक्षितवन्तः, धर्मराजः पवनजवचनैः यत्प्रीतये धर्मे त्वरावान् अभूत्, यो व्यासात्मा – व्यासरूपः कृष्णः, गतस्वं – धनादिरहितम्, आम्बिकेयं – धृतराष्ट्रराजं, विरक्तं – वैराग्यशालिनं, निजमनोऽभीष्टवन्तं – वने तपश्चरणलक्षण स्वीयमानोऽभीष्टशालिनं, वनस्थं, अकृत – कृतवान्, पार्था अपि यस्य – कृष्णस्य, पादं स्मरन्तः, मुमुदुः – सन्तोषयुक्ता बभूवुः, तं कृष्णं ईडे – स्तौमि इत्यन्वयः ॥ ३१ ॥

द्वात्रिंशाध्यायभावमाह यो यष्टेति ।

**यो यष्टा विप्रशापाद्यदुकुलमवधीदर्थितोऽगात्स्वलोकं**
**देवैर्भीष्माद्युपेतो यदनु निजपदं पाण्डवा अप्यवापुः ।**

दैत्या यद्द्वेषतोऽन्धे तमसि निपतिता बुद्धरूपोऽभवद्यः
कल्क्यात्मान्ते कलेर्यः कुजननिधनकृत्
पातु सोऽस्मान् सुरेशः ॥ ३२ ॥

महाभारततात्पर्यनिर्णयाशयसङ्ग्रहः ।
राघवेन्द्रेण यतिना कृतः सज्जनसंविदे ॥

॥ भावसङ्ग्रहः सम्पूर्णः ॥

यः यष्टा – यज्ञकारी, विप्रशापात्, यदुकुलं – यदूनां कुलं, अवधीत् – संहृतवान्, देवैरर्थितः, भीष्माद्युपेतः सन्, स्वलोकमगात्, यदनु – भगवत्स्वलोकगमनानन्तरं, पाण्डवा अपि निजपदं – स्वकीयस्थानं अवापुः, यद्द्वेषतः दैत्याः अन्धे तमसि निपतिताः, यः बुद्धरूपः अभवत्, यः कलेरन्ते कल्क्यात्मा सन्, कुजननिधनकृत् – दुष्टजनानां नाशकः, सः सुरेशः – मुकुन्दः, अस्मान् पातु – रक्षतु, इत्यन्वयः ॥ ३२ ॥

॥ इति विद्वच्चक्रचूडामणिभिः श्रीमल्लक्ष्मीनारायणाचार्यैः विरचिता भावसङ्ग्रहव्याख्या सम्पूर्णा ॥

॥ श्रीकृष्णार्पणमस्तु ॥

